mudî or the Manoramâ for any of them except for the two passages noted above, nay in some cases (as in 'हा पितः क्वासि हे सुभ्रु' VI. 11, 'सुतानुबन्धि' I. 10) actually solves the difficulty either in the way adopted by the Vṛittikâra or in some way other than the one followed by Bhaṭṭoji Dîkshita, it is quite clear that Mallinâtha lived before Bhaṭṭoji Dîkshita.

Thus with regard to the third question as to whether the two references to the Siddhânta-Kaumudî are the author's own references or whether they are later interpolations, the answer is quite clear that they must be considered as interpolations. They may have been originally marginal notes of some copyist and afterwards inserted into the commentary. It is also to be remembered that it is only from two manuscripts that the text of the commentary is settled. I tried my best to see whether these references are correct by comparing them with the text of the commentary as found in other manuscripts; but I failed, as copies of the commentary of Mallinâtha are found only in the Southern parts and there too they are rare. With regard to these references, however, my conclusion is found to be correct. I have been able to secure a copy of the commentary of Mallinâtha on C. VIII. St. 16 from another manuscript in charge of the Theosophical Society of Madras and I found that it was in every respect the same as what is printed in this work with this exception that the reference to the Kaumudî ('कौमुद्यां तु समो गम्यृच्छिभ्यामिति पाठः। तदा तत्रस्थवार्त्तिकेनात्मनेपदम्'), was omitted there. It must also be noted that the same Sûtra "समो गम्यृच्छि—" is mentioned by Mallinâtha in preceding verses (C. V. St. 19, C. V. St. 37) as found in the Kâśikâ and not in the Kaumudî and there no remark is made as in C. VIII. St. 16 as to the difference of the readings as found in the Vṛitti and the Kaumudî. It is thus very probable, almost certain, that this reference to the Kaumudî is spurious. As regards the second reference to the Kaumudî (C. I. St. 23) I have secured, through the untiring efforts of my friend, Prof. Râdhâkrishṇa, a copy of the commentary of Mallinâtha from another manuscript at Udamalpet, in which the reference to the Kaumudî is omitted. I therefore

conclude that the commentator on Bhatti is the same Mallinâtha that has commented upon the Raghuvaṁs'a, the Kumârasambhava, the Meghadûta, the Kirâtârjunîya, and the S'is'upâlavadha, that he flourished before Bhaṭṭoji Dîkshita and that the two references to the Siddhântakaumudî in the commentary are interpolations.

K. P. TRIVEDI.

*Ahmedâbâd, 11th Oct. 1897.*

---

## Abbreviations in the Introduction and Notes.

| | |
|---|---|
| Ac. | Accusative. |
| Atma. | Atmanepada or Atmanepadin. |
| Âs'va. | Âs'valâyana Gṛihyasûtra. |
| Bha. Dî. | Bhaṭṭoji Dîkshita. |
| Bha. Mal. | Bharatamallika. |
| C. | Canto. |
| Com. | Commentary. |
| Comp. | Comparative. |
| Conj. | Conjugation. |
| Desi. | Desiderative. |
| Du. | Dual. |
| Fem. | Feminine. |
| Freq. | Frequentative. |
| Ind. Ant. | Indian Antiquary. |
| Inst. | Instrumental. |
| Intro. | Introduction. |
| Jaya. | Jayamaṅgala or Jayamaṅgalâ. |
| K. | Kaumudî ( Nirṇayasâgara edition ). |
| Kâvya. Pra. | Kâvya Prakâs'a. |
| Ku. | Kumârasambhava. |
| Loc. | Locative. |
| Mâla. or Mâlati. | Mâlatimâdhava. |
| Malli. | Mallinâtha. |
| Ma. Pû. | Manoramâ Pûrvârdha ( Benares edition ). |
| Ma. Utta. | Manoramâ Uttarârdha ( Benares edition ). |
| Megha. | Meghadûta. |
| N. | Neuter. |
| No. | Number. |
| Nom. | Nominative. |
| P. p. | Page. |
| Par. | Participle. |
| Para. | Parasmaipada or Parasmaipadin. |
| Pas. | Passive. |
| Per. | Person. |

| | |
|---|---|
| Pres. | Present. |
| Raghu. | Raghuvaṁs'a. |
| S'âr̂ga. | S'âr̂gadharapaddhati. |
| Sid. Kau. | Siddhântakaumudî. |
| Sing. | Singular. |
| St. | Stanza. |
| Subhâ. | Subhâshitâvali. |
| Tat. | Tatpurusha. |
| Ter. | Termination. |
| Ubha. | Ubhayapadin. |
| Ul. | Ullâsa. |
| V. | Verse. |
| Vidyâ. | Vidyânâtha. |
| Voc. | Vocative. |
| Vol. | Volume. |
| अ० | अध्याय or अङ्क. |
| अग्नि० | अग्निपुराण. |
| अने० सं or अनेका० | अनेकार्थसंग्रह. |
| अभि० or अभि० चिन्ता० | अभिधानचिन्तामणि. |
| अभिज्ञान० | अभिज्ञानशाकुन्तल. |
| अम० | अमरकोष. |
| अयो० का० | अयोध्याकाण्ड. |
| आश्व० गृ० | आश्वलायनगृह्यसूत्रकारिका. |
| उत्त० and उत्तर० | उत्तररामचरित. |
| उत्त० | उत्तरकाण्ड. |
| कथास० | कथासरित्सागर. |
| काशि० | काशिका. |
| किरा० | किरातार्जुनीय. |
| किष्कि० | किष्किन्धा. |
| कुमा० | कुमारसंभव. |
| जय० | जयमङ्गला. |
| नृसिं० | नृसिंहपुराण. |
| पञ्च० | पञ्चतन्त्र. |
| प्रता० | प्रतापरुद्र. |
| बालका० | बालकाण्ड. |
| म० उ० | मनोरमा उत्तरार्ध ( Benares edition ). |
| म० पू० | मनोरमा पूर्वार्ध (Benares edition). |
| मनु० | मनुस्मृति. |

| | |
|---|---|
| मनो० | मनोरमा. |
| मम्म० | मम्मट. |
| मुद्रा० | मुद्राराक्षस. |
| मेदि० | मेदिनी. |
| याज्ञ० | याज्ञवल्क्य. |
| रघु० | रघुवंश. |
| राघ० | राघवभट्ट. |
| रामा० | रामायण. |
| वा० | वार्त्तिक. |
| विद्या० | विद्यानाथ. |
| शब्देन्दु० | शब्देन्दुशेखर. |
| स० | सर्ग. |
| सिद्धा० कौ० | सिद्धान्तकौमुदी. |
| सिद्धा० चन्द्रो० | सिद्धान्तचन्द्रोदय. |
| सुभाषि० | सुभाषितावलि. |
| हेम० | हेमचन्द्र. |



# व्याख्यानपीठिका ।

आशासे नित्यमाकण्ठं रामायणकथामृतम् ।
श्रवश्चुलुकनिष्पेयं पायं पायं प्रमोदितुम् ॥ १ ॥

आलम्बे जगदालम्बलम्बोदरपदाम्बुजम् ।
शुष्यन्ति यद्रजःस्पर्शात्प्रत्यूहव्यूहवार्धयः ॥ २ ॥

तद्दिव्यमव्ययं धाम सारस्वतमुपास्महे ।
यत्प्रकाशात्प्रलीयन्ते मोहान्धतमसश्छटाः ॥ ३ ॥

वाणीं काणभुजीमजीगणदवाशासीच्च वैयासिकी-
मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत् ।
वाचामाचकलद्रहस्यमखिलं यश्चाक्षपादस्फुरां
लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः ॥ ४ ॥

व्याख्यां सर्वपथीनाख्यां भट्टिकाव्यस्य कामपि ।
मल्लिनाथसुधीः सोऽहं कुर्वे सर्वपथीनधीः ॥ ५ ॥

व्याख्या सर्वपथीनाख्या सर्वान्व्याप्नोति यत्पथः ।
गुणालङ्कारशब्दार्थध्वनिभावरसादिकान् ॥ ६ ॥

प्रधानमिह शृङ्गारकरुणादिभिरङ्गवान् ।
वीरो रसो महावीरो नायको रघुनायकः ॥ ७ ॥

नगरार्णवशैलादिवर्णनं चात्र संभवि ।
फलं दशाननवधः शब्दः शिष्टपुरस्कृतः ॥ ८ ॥

कृती भट्टिकविस्तावदीदृक्काव्यनिबन्धनात् ।
धन्या वयं च तत्सूक्तिरत्नाकरपरिभ्रमात् ॥ ९ ॥

जगति निखिलविद्यासिंधुदुग्धंधयानां
परभणितिपरीक्षा युज्यते सज्जनानाम् ।
तदिह मम निबन्धे दूषणं भूषणं वा
भवति यदि विदग्धैस्तद्ध्यवश्यं विमृश्यम् ॥ १० ॥

इहान्वयमुखेनैव सर्वं व्याख्यायते मया ।
नामूलं लिख्यते किंचिन्नानपेक्षितमुच्यते ॥ ११ ॥



॥ श्रीः ॥

# भट्टिकाव्यम्।

## ॥ मल्लिनाथकृतटीकया समेतम् ॥

### प्रथमः सर्गः।

अभून्नृपो विबुधसखः परन्तपः
श्रुतान्वितो दशरथ इत्युदाहृतः।
गुणैर्वरं भुवनहितच्छलेन यं
सनातनः पितरमुपागमत्स्वयम् ॥ १ ॥

अथ तत्रभवान्भट्टिनामा कविः 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये। सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे' ॥ इत्याद्यालंकारिकवचनप्रामाण्यात्काव्यस्यानेकश्रेयःसाधनतां 'काव्यालापांश्च वर्जयेत्' इति निषेधशास्त्रस्यासत्काव्यविषयतां च पश्यन् रामकथामाश्रित्य पाणिनीयसूत्राणामुदाहरणं काव्यं चिकीर्षुराशीराद्यन्यतमस्य तदविघ्नसिद्धिकरत्वात्कथानायकस्य रामनाम्नो भगवतः पुराणपुरुषस्याविर्भावभूमेः पुण्यश्लोकतमस्य पुरुषधौरेयस्य महाराजस्य दशरथस्य सत्तारूपं वस्तु काव्यार्थबीजत्वेन निर्दिशति ॥

१. अभूदिति ॥ विशेषेण बुध्यन्त इति विबुधा विद्वांसो देवाश्च। 'विबुधौ सुरपण्डितौ' इति विश्वः ॥ इगुपधलक्षणः कप्रत्ययः ॥ तेषां सखा

विबुधसखो विद्वत्सेवी देवेन्द्रसहचरश्च विजयसहकारित्वात्तस्येति भावः ॥ "राजाहःसखिभ्यष्टच्" इति टच् ॥ परांस्तापयतीति परन्तपः शत्रुघाती ॥ "द्विषत्परयोस्तापेः" इति खच् ॥ "खचि ह्रस्वः" इत्युपधाह्रस्वः ॥ "अरुर्द्विषत्—" इत्यादिना मुमागमः ॥ श्रुतेन वेदशास्त्रश्रवणेनान्वितः स्वयं च विद्वानित्यर्थः । दशरथ इत्युदाहृतो विख्यातः । नॄन् पातीति नृपो नराधिपः ॥ "आतोऽनुपसर्गे कः" ॥ अभूत् सत्तामलब्धेत्यर्थः ॥ "गातिस्था—" इत्यादिना भुवो लुङि परस्मैपदे सिचो लुक् ॥ "भूसुवोस्तिङि" इति गुणप्रतिषेधः ॥ अथास्य राज्ञस्सत्तालाभस्य फलमाह गुणैरिति । गुणैः शौर्यादिभिर्वरं श्रेष्ठं यं नृपं सना सदा भवस्सनातनो नित्यः पुराणपुरुषः ॥ "सायंचिरम्—" इत्यादिना ट्युप्रत्ययस्तुट् च ॥ भुवनहितच्छलेन रावणवधादिलोकोपकारव्याजेन । पितरं जनकं स्वयमुपागमदुपागतः ॥ गमेर्लुङि पुषादित्वादङादेशः । किमतः परं जन्मनः फलं यज्जगद्गुरोरपि गुरुरजनीति भावः ॥ तदुक्तं बालकाण्डे—'ततः पद्मपलाशाक्षः कृत्वात्मानं चतुर्विधम् । पितरं रोचयामास तदा दशरथं नृपम्' इति ॥ अत्र सनातनः पितरमुपागमदिति नित्यत्वजन्यत्वयोराभासमानस्य विरोधस्य भगवतो हरेरचिन्त्यमहिमत्वेन समाधानाद्विरोधाभासोऽलङ्कारः ॥ 'आभासत्वे विरोधस्य विरोधाभास इष्यते' इति लक्षणात् ॥ रुचिरावृत्तमेतत् ॥ 'चतुर्ग्रहैरिह रुचिरा जभौ स्जगाः' इति लक्षणात् ॥ एतच्चात्रैव श्लोके दशरथपदप्रयोगसौकर्यार्थमुक्तम् । अनन्तरश्लोकादारभ्यासर्गान्तादिन्द्रवज्रोपेन्द्रवज्रापादयोगि त्रैष्टुभमुपजातिवृत्तम् ॥ 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इति लक्षणात् ॥ अत्रादावकारस्य विष्णुवाचकत्वात्पदस्य सत्तावचनत्वाद्वस्तुनिर्देशरूपत्वाच्च मंगलावहत्वम् । जगणस्य निषिद्धस्यापि भगणोत्तरत्वाच्छुभत्वम् ॥ तदुक्तं भारतीये—'म्नस्तभ्ज्या गणा ह्यष्टौ तेषु म्नयतभाः शुभाः । जस्तजैर्जस्तभैर्युक्तस्त्वोत्तरौ रः शुभप्रदः' ॥ इति सर्वमवदातम् ॥

सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट
पितॄनपारीत्सममंस्त बन्धून् ।
व्यजेष्ट षड्वर्गमरंस्त नीतौ
समूलघातं न्यवधीदरींश्च ॥ २ ॥

२. सोऽध्यैष्टेत्यादि ॥ गुणैर्वरमित्युक्तं तदेव व्यनक्ति स इत्यादिश्लोकत्रयेण ॥ स दशरथः । वेदयन्ति समज्ञापयन्ति धर्माधर्माविति वेदा ऋग्यजुःसामानि ॥ 'स्त्रियामृक्सामयजुषी इति वेदास्त्रयस्त्रयी' इत्यमरः ॥ वेत्तेर्ण्यन्तात्पचाद्यच् । तानध्यैष्टाधीतवान् । इङो लुङि ङित्वात्तङ् ॥ "विभाषा लुङ्लृङोः" इति गाङभावपक्षे चेः सिचि षत्वष्टुत्वे ॥ "आडजादीनाम्" ॥ "आटश्च" इति वृद्धिः ॥ त्रिः दश परिमाणमेषां त्रिदशाः । बहुव्रीहिसमासान्तो डच् । तिस्रो दशा वयोवस्था येषामिति वा त्रिदशा देवाः । तानयष्ट यागैः पूजितवान् । यजेर्लुङि कर्त्रभिप्राय आत्मनेपदम् । अत्र सिचोऽकित्त्वान्न संप्रसारणम् । व्रश्चादिना षत्वम् ॥ "झलो झलि" इति सकारलोपः ॥ ष्टुत्वम् । पितॄनतार्प्सीत् पितृयज्ञैर्भाविनीं वृत्तिमाश्रित्य प्रजया च तर्पितवान् ॥ "स्पृशमृशकृषतृपदृपां सिज्वा वक्तव्यः" ॥ "अस्तिसिचोऽपृक्ते" इति इडागमः ॥ "अनुदात्तस्य च—" इत्यादिना अमागमाभावपक्षे सिचि वृद्धिः ॥ एतावतास्य त्रिविधमप्यानृण्यमुक्तम् ॥ 'एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी' इत्यादि श्रुतेः ॥ बन्धून्स्वजनान् । 'बन्धुस्वस्वजनाः समाः' इत्यमरः । सममंस्त दानसंमानादिभिः सत्कृतवान् । अन्यथा 'आश्रितान्यः परित्यज्य बन्धूनपि च पार्थिवः । परपोषरतो मूढः सोऽक्षयं नरकं व्रजेत्' इति दोषस्मरणादिति भावः । मन्यतेरनिटो लुङि तङ् । 'तदादिग्रहणं स्याङ्गमर्थम्' इति सिजन्तस्याङ्गत्वेन इदित्वात् "अनिदिताम्—" इत्यादिना नलोपो नास्ति । षण्णां वर्गः षड्वर्गः कामक्रोधाद्यरिषड्वर्गः । तं व्यजेष्ट विजितवान् । अस्थाने

१ पितॄनतार्प्सीत् T2, T3, T4, Com.; पितॄनतारीत् E1; पितॄनतार्पीत् noticed by E1.

कामक्रोधादिरहित इत्यर्थः । जयतेर्लुङि "विपराभ्यां जेः" इत्यात्मनेपदम् । स्वरान्तत्वादनिट्त्वम् । सिचोऽकित्वाद्गुणः । नीतौ सामादिसंध्यादिप्रयोगविधौ । अरंस्त विस्रब्धं व्यवहृतवान् इत्यर्थः । रमेर्लुङि सिचोऽकित्वान्नानुनासिकलोपः । नीतिकौशल्यस्य फलमाह । अरीन् बाह्यशत्रूंश्च । समूलं हत्वा समूलघातम् ॥ "समूलाकृतजीवेषु हन्कृञ्ग्रहः" इति णमुल्प्रत्ययः ॥ उपधावृद्धिः ॥ "हो हन्ते—" इति कुत्वम् ॥ "हनस्तोऽचिण्णलोः" इति तत्वम् ॥ न्यवधीत् निहतवान् ॥ "कषादिषु यथाविध्यनुप्रयोगः" ॥ "लुङि च" इति हनो वधादेशः ॥ अदन्तत्वादिडागमः । अतो लोपस्य स्थानिवद्भावात् "अतो हलादेर्लघोः" इति वैभाषिकी च वृद्धिर्न भवति ॥ "इट ईटि" इति सिज्लोपः ॥ इह काव्ये प्रयोगवैचित्री तावदेकोऽलंकारः सार्वत्रिकः । अन्येऽपि शब्दार्थालंकारास्तत्र तत्र यथासंभवमुद्भावयिष्यन्ते । अत्र ह्यध्ययनादिक्रियायौगपद्यात्समुच्चयभेदोऽलंकारः । 'गुणक्रियायौगपद्ये समुच्चयः' इति लक्षणात् ॥

वसूनि तोयं घनवद्व्यकारीत्
सहासनं गोत्रभिदाऽध्यवात्सीत् ।
न त्र्यम्बकादन्यमुपास्थितासौ
यशांसि सर्वेषुभृतां निरास्थत् ॥ ३ ॥

३. वसूनीति ॥ असौ नृपः वसूनि धनानि । 'रिक्थं धनं वसु' इत्यमरयादवौ । तोयं घनवत् ॥ "तेन तुल्यम्—" इत्यादिना वतिप्रत्ययः ॥ व्यतारीत् वितीर्णवान् अर्थिभ्य इति शेषः । तरतेर्लुङि "इट ईटि" इति सिज्लोपः । मेघौपम्यान्निर्व्याजोपकारित्वं बहुप्रदत्वं सार्वत्रिकत्वं चोक्तम् । गोत्रभिदा इन्द्रेण सह आसनमध्यवात्सीत् । एकासने स्थितवानित्यर्थः । विजयसहकारित्वादिति भावः ॥ "उपान्वध्याङ्वसः" इति कर्मत्वम् ॥ वसेर्निवासार्थादनिटो लुङ् ॥ "अस्तिसि-

१ व्यतारीत् $T_2$, $T_4$, Com.

चोऽपृक्ते" इति ईट् ॥ "वदव्रज—" इत्यादिना हलन्तलक्षणा वृद्धिः ॥ "सः स्यार्धधातुके" इति सकारस्य तकारः ॥ किं च । त्र्यम्बकात् त्रिलोचनात् । 'अक्षि लोचनमम्बकम्' इति यादवः । अन्यं देवं नोपास्थित नासेविष्ट किमुतार्वाचीनमिति भावः । उपपूर्वात् तिष्ठतेर्लुङि देवपूजायामात्मनेपदम् ॥ "स्थाघ्वोरिच्च" इति इत्वकित्वे ॥ "ह्रस्वादङ्गात्" इति सिज्लोपः ॥ सर्वेषामिषुभृतां धनुर्भृतां यशांसि निरास्थत् निरस्तवान् । एतेन भुजार्जितसंपत्त्वमुक्तम् ॥ "अस्यतिवक्तिख्यातिभ्योऽङ्" ॥ "अस्यतेस्थुक्" ॥ उपमासमुच्चययोः संसृष्टिः ॥

पुण्यो महाब्रह्मसमूहजुष्टः
सन्तर्पणो नाकसदां वरेण्यः ।
जज्वाल लोकस्थितये स राजा
यथाध्वरे वह्निरभिप्रणीतः ॥ ४ ॥

४. पुण्य इति ॥ पुनातीति पुण्यः पावनः ॥ "पूञो यण्णुग्ह्रस्वश्च" इति औणादिको यदन्तः । महाब्रह्मणां महाब्राह्मणानां समूहैर्जुष्टः ॥ "कुमहद्भ्यामन्यतरस्याम्" इति समासान्तविकल्पात् । वसिष्ठाद्युत्तमद्विजसंघसेवित इत्यर्थः । 'ब्रह्मा विरिञ्चिद्विजयोः' इति विश्वः । नाकसदां दिविषदाम् । संपदादित्वात्किप् । कर्मणि षष्ठी । संतर्पयतीति संतर्पणः यज्ञादिभिः सन्तर्पयिता अग्निमुखत्वाद्देवानां तर्पणः ॥ "कृत्यल्युटो बहुलम्" इति कर्त्तरि ल्युट् ॥ वरेण्यः वरणीयः श्रेष्ठः ॥ "वृञ एण्यः" इत्यौणादिक एण्यप्रत्ययः ॥ स राजा दशरथः अध्वरे यज्ञे अभिप्रणीतः गार्हपत्यादुद्धृत्याहवनीयायतने मन्त्रैराभिमुख्येन स्थापितो वह्निर्यथा आहवनीय इव लोकानां स्थितये प्रतिष्ठायै जज्वाल दिदीपे। प्रजापालने जागरूकोऽभूदित्यर्थः । अन्यथा सर्वलोकविप्लवः स्यात् । अग्नेरप्यज्वलने लौकिकवैदिकसर्वक्रियाप्रतिबन्धात् स एव दोषः स्यादिति भावः । श्रौतपूर्णोपमालंकारः ॥

स पुण्यकीर्त्तिः शतमन्युकल्पो
महेन्द्रलोकप्रतिमां समृद्ध्या ।
अध्यास्त सर्वर्तुसुखामयोध्या-
मध्यासितां ब्रह्मभिरिद्धबोधैः ॥ ५ ॥

५. स इति ॥ पुण्यकीर्त्तिः शतमन्युकल्पः शतक्रतूपमः । ईषदसमाप्तौ कल्पप् । 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः । स राजा समृद्ध्या संपदा महेन्द्रलोकः प्रतिमा प्रतिमानं यस्यास्तां अमरावतीकल्पां सर्वर्तुषु सुखयतीति सर्वर्तुसुखाम् । पचाद्यच् । इद्धबोधैर्दीप्तप्रज्ञानैः ब्रह्मभिर्ब्राह्मणैः अध्यासितामधिष्ठितामयोध्यामध्यास्त अधिष्ठितवान् । आसेः कर्त्तरि लङ् ॥ "अधिशीङ्स्थासां कर्म" इति कर्मत्वम् । अत्राधिष्ठानाधिष्ठात्रोरानुरूप्यात्समालंकारः । 'सा समालंकृतिर्योगे वस्तुनोरनुरूपयोः' इति लक्षणात् । सा चेन्द्रामरावत्युपमाद्वयानुप्राणितेति सङ्करः । एतेनान्योन्योपकारकत्वलक्षणोऽन्योन्यालंकारो ध्वन्यत इत्यलंकारेणालंकारध्वनिः ॥

निर्माणदक्षस्य समीहितेषु
सीमेव पद्मासनकौशलस्य ।
ऊर्ध्वस्फुरद्रत्नगभस्तिभिर्या-
स्थितावहस्येव पुरं मघोनः ॥ ६ ॥

६. अथ त्रिभिरयोध्यां वर्णयति निर्माणेत्यादिभिः ॥ समीहितेषु संकल्पितार्थेषु विषये निर्माणदक्षस्य अपूर्वसृष्टिसमर्थस्य पद्मासनस्य ब्रह्मणः कौशलस्य नैपुण्यस्य सीमा परमावधिरिव स्थितेत्युत्प्रेक्षा । अतोऽधिकसृष्टौ सोऽपि न समर्थ इत्यर्थः । पद्मासनकौशलस्येत्यत्र न "पूरणगुण—" इत्यादिना षष्ठीसमासप्रतिषेधः । शुक्लः पटः पटस्य शुक्ल इति गुणे गुणिनि च दृष्टानां शुक्लादिशब्दानामेव निषेधात् । केवलगुणवच-

१ महेन्द्रकल्प° $T_4$.
२ ब्रह्मविशुद्धबोधैः $T_2$.
३ मरीचिभिर्या $E_1$.
४ स्थिता विहस्येव $E_3$, D, Com. स्थितापहस्येव $T_3$.
५ स्थितावहस्येव $T_2$.

नानां कौशलं चापलं गन्धो रस इत्यादीनामनिषेधात्। 'तत्स्थैश्च गुणैः षष्ठी समस्यते' इति वचनाद्बहुलमभियुक्तप्रयोगात्। पत्रपीतिमेत्यादौ बलाकायाः शौक्ल्यमित्यादिभाष्यकारप्रयोगेण निषेधज्ञापनादित्यादि प्रपञ्चितमस्माभिः किरातार्जुनीयव्याख्याने घण्टापथेऽर्थगौरवमित्यत्रोपरम्यते। किं च ऊर्ध्वं स्फुरद्भिः उपरि प्रसर्पद्भिः रत्नानां गभस्तिभिर्मयूखैर्मघोन इन्द्रस्य पुरीममरावतीं विहस्य हसित्वेव स्थितेति पूर्वोत्प्रेक्षया सजातीयया संकरः॥

सद्रत्नमुक्ताफलवज्रभाञ्जि
विचित्रधातूनि सकाननानि[1]।
स्त्रीभिर्युतान्यप्सरसामिवौघै-
र्मेरोः शिरांसीव गृहाणि यस्याम्॥ ७॥

७. सदिति॥ यस्यामयोध्यायां सन्ति सम्यञ्चि रत्नानि पद्मरागादीनि मुक्ताफलानि वज्राणि च। ब्राह्मणपरिव्राजकवत्पृथङ्निर्देशः। तानि भजन्तीति तद्भाञ्जि। भजो ण्विः। विचित्रा धातवो येषां तानि। चित्रशालित्वादिति भावः। सकाननानि सोपवनानि अप्सरसामोघैरिव स्त्रीभिः स्त्रीसंघैर्युतानि गृहाणि मेरोः शिरांसि शिखराणीव भान्तीति शेषः। उपमालंकारः॥

अन्तर्निविष्टोज्ज्वलरत्नभासो
गवाक्षजालैरभिनिष्पतन्त्यः[2]।
हिमाद्रिटङ्कादिव भान्ति यस्यां
गङ्गाम्बुपातप्रतिमा गृहेभ्यः॥ ८॥

८. अन्तरिति॥ यस्यां पुरि हिमाद्रेर्हिमवतष्टङ्को भित्तिस्तट इति यावत्। 'न स्त्री पर्वतभित्तौ च' इति टङ्कशब्दार्थेषु विश्वः। तस्माट्टङ्कादिव। जातावेकवचनम्। टङ्केभ्य इव गृहेभ्यो गवाक्षजालैर्गवाक्षसमूहैः अभिनिष्पतन्त्यः बहिर्निष्पतन्त्यः अन्तर्निविष्टानामभ्यन्तरे स्थितानामुज्ज्व-

---

[1] सनातनानि T3. | [2] अभिनिस्सतन्त्यः E3, अभिनिष्पतन्त्यः D.

ळरत्नानां भासः प्रभाः गङ्गाम्बुनो गङ्गाजलस्य पतन्तीति पाताः प्रवाहास्तत्प्रतिमास्तदुपमास्सत्यो भान्ति त इव भान्तीत्यर्थः । अत एव फलतोऽनेकेवेयमुपमा ॥

धर्म्यासु कामार्थयशस्करीषु[1]
मतासु लोकेऽधिगतासु[2] काले ।
विद्यासु विद्वानिव सोऽभिरेमे[3]
पत्नीषु[4] राजा तिसृषूत्तमासु ॥ ९ ॥

९. धर्म्यास्विति ॥ स राजा धर्म्यासु धर्मादनपेतासु । धर्मचारित्वादन्यत्र धर्मप्रतिपादकत्वाच्चेति भावः । कामार्थयशांसि कुर्वन्ति नियमेनेति तत्करीषु ॥ "कृञो हेतु—" इत्यादिना हेत्वर्थे टप्रत्यये ङीप् ॥ "अतः कृकमि—" इत्यादिना विसर्जनीयस्य सत्वम् ॥ लोके मतासु पूजितासु काले योग्यकाले अधिगतासु गृहीतासु । उत्तमासु महत्यवरोधे सत्यपि प्रधानभूतासु । अन्यत्राङ्गभूतविद्यान्तरापेक्षया अङ्गिनीषु इत्यर्थः । तिसृषु पत्नीषु कौसल्यादिषु ॥ "पत्युर्नो यज्ञसंयोगे" इति ईकारो नकारश्च ॥ तिसृषु विद्यासु ऋगादिषु विद्वान् विपश्चिदिव अभिरेमे विजहार ॥ "अत एकहल्—" इत्यादिना एत्वाभ्यासलोपौ ॥

पुत्रीयता तेन वराङ्गनाभि-
रानायि विद्वान् क्रतुषु क्रियावान् ।
विपक्त्रिमज्ञानगतिर्मनस्वी[5]
मान्यो मुनिः स्वां पुरमृष्यशृङ्गः[6] ॥ १० ॥

१०. पुत्रीयतेति ॥ पुत्रमात्मन इच्छता पुत्रीयता पुत्रकामेन ॥ "सुप आत्मनः क्यच्" ॥ "क्यचि च" इति ईकारः ॥ क्यजन्ताल्लटः शत्रादेशः । तेन राज्ञा क्रतुषु यज्ञेषु विषये विद्वान् शास्त्रार्थनिर्णेता । विदेः

१ कामार्थयशःकरीषु E2.
२ विगतासु T2.
३ तासु रेमे T2.
४ पत्नीति T3.
५ निधि D.
६ ऋश्यशृङ्गः T3, Com.

शतुर्वसुः । क्रियावान् स्वयं कर्मानुष्ठानवान् । भूमार्थे मतुप् । विपाकेन निर्वृत्तं विपक्किमं परिपक्वम् । पचेः "ड्वितः क्त्रिः" । "क्त्रेर्मम्नित्यम्" । तस्य ज्ञानस्य आत्मज्ञानस्य निधिः तत्त्ववेत्तेत्यर्थः । मनस्वी स्थिरचित्तः । प्रशंसायां मत्वर्थीयो विनिः । मान्यो लोकपूज्यः ऋश्यस्य शृङ्गमिव शृङ्गमस्यास्तीति ऋश्यशृङ्गो नाम मुनिः विभाण्डकसुतः स एव ऋश्यशृङ्ग इति पुराणप्रसिद्धः । वराः श्रेष्ठा अङ्गना वराङ्गनास्ताभिः प्रयोज्यकर्त्रीभिः स्वां पुरमानायि आनायितः । नयतेर्ण्यन्तात् 'दुह्याच्पच्—' इत्यादिना द्विकर्मकात् 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' इति वचनात्प्रधानकर्मणि लुङि चिण् वृद्ध्यायादेशौ ॥

ऐहिष्ट तं कारयितुं कृतात्मा[1]
क्रतुं नृपः पुत्रफलं मुनीन्द्रम् ।
ज्ञाताशयस्तस्य ततो व्यतानीत्
स कर्मठः कर्म सुतानुबन्धि[2] ॥ ११ ॥

११. ऐहिष्टेति ॥ कृतात्मा एवं करिष्यामीति निश्चितबुद्धिः । 'आत्मा यत्नो धृतिर्बुद्धिः' इत्यमरः । नृपो दशरथस्तं मुनीन्द्रं पुत्रः फलं यस्य तं क्रतुं पुत्रीयामिष्टिं कारयितुं तेन कारयितुमित्यर्थः ॥ "हृक्रोरन्यतरस्याम्" इति विकल्पादणि कर्तुः कर्मत्वम् ॥ ऐहिष्ट ईहितवान् ऐच्छदित्यर्थः । 'इच्छा काङ्क्षा स्पृहेहा तृड्' इत्यमरः । ईहतेर्लुङि तङि सिचीडागमः । ततः कर्मणि घटते चेष्टते सम्यक् करोतीति कर्मठः कर्मशूरः । 'कर्मशूरस्तु कर्मठः' इत्यमरः ॥ "कर्मणि घटोऽठच्" ॥ "नस्तद्धिते" । स मुनीन्द्रस्तस्य नृपस्य ज्ञाताशयो ज्ञातनृपाशयः सन्नित्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । 'अभिप्रायश्छन्द आशयः' इत्यमरः । सुतानुबन्धः पुत्रलाभोऽस्मिन्निति सुतानुबन्धि । मत्वर्थीय इनिप्रत्ययः न तु "सुप्यजातौ—" इति णिनिः । सुपीत्यनुवृत्तौ पुनः सुब्ग्रहणेनोपसृष्टधातोस्तन्निषेधात् । सुताननुबध्नाति सन्त-

१ यतात्मा $T_4$. | २ सुतानुबन्धम् D., $T_1$, $T_2$, $T_3$, $T_4$, C., N.

नोतीति सुतानुबन्धमिति वा पाठान्तरम् ॥ "कर्मण्यण्" ॥ तत्कर्म पुत्रकामेष्टिं व्यतानीत् विततान । तनोतेर्लुङि "इट ईटि" इति सलोपः ॥ "अतो हलादेर्लघोः" इति वैकल्पिकी वृद्धिः ॥

रक्षांसि वेदिं परितो निरास्थ-
दङ्गान्ययाक्षीदभितः प्रधानम् ।
शेषाण्यहौषीत्सुतसंपदे च
वरं वरेण्यो नृपतेरमार्गीत् ॥ १२ ॥

१२. रक्षांसीति ॥ वरेण्यो वरणीयो मुनिः वेदिं परितः वेदेः सर्वतो रक्षांसि कर्मघातुकान् राक्षसान् निरास्थत् निरस्तवान् । अस्यतेर्लुङ् ॥ "अस्यतिवक्तिख्यातिभ्योऽङ्" ॥ "अस्यतेस्थुक्" ॥ प्रधानमभितः प्रधानयागस्योभयतः प्रागूर्ध्वं चेत्यर्थः ॥ "पर्यभिभ्यां च" इति क्रमात् सर्वोभयार्थे तसिल्प्रत्ययः ॥ "अभितःपरितः—"इत्यादिना तद्योगादुभयत्र द्वितीया ॥ अङ्गानि प्राच्यानि प्रयाजादीनि उदीच्यान्यनूयाजादीनि च । अयाक्षीदिष्टवान् । यजेर्लुङि सिचि वृद्धिः । व्रश्चादिना षत्वे "षढोः कस्सि" इति कत्वे "इण्कोः" इति षत्वम् । शेषाणि अङ्गापेक्षया अवशिष्टानि प्रधानहवींष्यहौषीत् यथाक्रममिति भावः । जुहोतेर्लुङि सिचि वृद्धिः । अथ नृपतेः सुतसंपदे पुत्रलाभार्थं वरं च विष्णुदत्तं पुत्रभावभजनलक्षणम् । अमार्गीत् विष्णुं प्रार्थितवानित्यर्थः । 'मार्गणं प्रार्थनेऽन्वेषणे' इति विश्वः । 'याच्ञायां वनतेमार्गत्यमी वनतियाचति' इति भट्टमल्लश्च । मार्ग याच्ञान्वेषणयोरिति धातोर्लुङि "इट ईटि" इति सकारलोपः ॥

निष्ठां गते दत्रिमसभ्यतोषे
विहित्रिमे कर्मणि राजपत्न्यः[3] ।
प्राशुर्हुतोच्छिष्टमुदारवंश्या-
स्तिस्रः प्रसोतुं चतुरः सुपुत्रान्[4] ॥ १३ ॥

---

१ °न्ययाजीद° E1.
२ सुतसंपदर्थम् E1.
३ राज्ञ्यपत्न्यः T2.
४ चतुरस्तनूजान् D., T2, T3.

१३. निष्ठामिति ॥ दत्त्रिमो दानेन निर्वृत्तः सभ्यानां सदस्यानां तोषो यस्मिन्नस्मिन्। क्त्रेर्मप्प्रत्यये ॥ "दोदद्घोः" इति ददादेशः। विहित्रिमे विधिनिर्वृत्ते विहित इत्यर्थः। पूर्ववत् प्रत्यये दधातेर्हिरादेशः। कर्मणि यज्ञकर्मणि निष्ठां समाप्तिं गते सति। उदारवंश्याः महाकुलप्रसूताः। अत्र 'दिगादियतस्तदन्तविधिनिषेधाद्राजवंश्यादयः साध्वर्थे यः' इति वामनः। तिस्रो राजपत्न्यश्चतुरस्तनूजान् पुत्रान् प्रसोतुं यथायोगं प्रसवितुं ॥ "स्वरतिसूति—" इत्यादिना विकल्पादिडभावः। हुतोच्छिष्टं हुतशेषं हविः प्राशुः भक्षयामासुः। अश्नातेर्लिटि "अत आदेः" इति अभ्यासदीर्घः। झेरुस्। अत्र दिव्यपुरुषोपनीतान्नस्य होमानन्तरप्राप्तत्वाद्धुतशिष्टत्वोपचारः ॥

कौशल्ययाऽसावि सुखेन रामः
प्राक् केकेयीतो भरतस्ततोऽभूत्।
प्रासोष्ट शत्रुघ्नमुदारचेष्ट-
मेका सुमित्रा सह लक्ष्मणेन ॥ १४ ॥

१४. कौसल्ययेति ॥ प्राक् प्रथमं कोसलस्य राज्ञोऽपत्यं स्त्री कौसल्या ॥ "वृद्धेत्कोसलाजादाञ्ञ्यङ्" ॥ ततष्टाप्। तया रामः सुखेनाक्लेशेन असावि प्रसूतः। सूतेः सूयतेर्वा कर्मणि लुङि चिण्। ततोऽनन्तरं केकयानाचष्टे स्वजन्मभूमित्वेनेति केकयी कैकयीत्यर्थः। तदाचष्टे इति णिजन्तादौणादिके स्त्रियामिकारप्रत्यये टिलोपे णिलोपे च ॥ "कृदिकारात्–" इति ङीप्। तस्याः केकयीतः कैकेय्याः ॥ "अपादाने चाहीयरुहोः" इति अपादानपञ्चम्यन्तात्तसिप्रत्ययः। भरतोऽभूज्जात इत्यर्थः। सुमित्रात्वेकैव लक्ष्मणेन सह उदारचेष्टं महापराक्रमम्। शत्रून्हन्तीति शत्रुघ्नस्तम्। अमानुषत्वविवक्षया टक्प्रत्ययः। '"अमनुष्यकर्तृके च" इति चकारात्कचिन्मनुष्यकर्तृकेऽपि टक्प्रत्ययः' इति

१ कौसल्यया B., E2, N., Com.
२ केकयीतो E1, T2, T3, T4.
३ सुतोऽभूत् E3.

कौमारः । प्रासोष्ट प्रसूतवती । सूतेः सूयतेर्वा कर्तरि लुङि "स्वरति-सूति—" इत्यादिना विकल्पादिडभावः । अस्मिन् शत्रुघ्नेनेति तृतीया-प्रयोगे छन्दोभङ्गभयाल्लक्ष्मणेनेत्युक्तम् । अस्य च सहवचनस्य सह शाखया प्रस्तरं प्रहरतीत्यत्र शाखाप्रस्तरयोरिव यमयोरनयोः क्रिया-न्वयतुल्यकालताप्रतिपादनमात्रत्वात् पित्रा सहागतः पुत्र इत्यत्र पितु-रिव ज्यायसो लक्ष्मणस्य शब्दतोऽप्राधान्यस्फुरणेऽपि वास्तवप्राधा-न्यस्य न कदाचित्क्षतिरिति संतोष्टव्यम् ॥

आर्चीद् द्विजातीन् परमार्थविन्दा—
नुदेजयान् भूतगणान्न्यषेधीत् ।
विद्वानुपानेष्ट च तान् स्वकाले
यतिर्वसिष्ठो यमिनां वरिष्ठः ॥ १५ ॥

१५. आर्चीदिति ॥ यतिर्जितेन्द्रियः । 'ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते' इत्यमरः । यमिनां योगिनां वरिष्ठः श्रेष्ठः ॥ "प्रिय-स्थिर—" इत्यादिना उरुशब्दस्य वरादेशः ॥ विद्वान्विधिज्ञो वसिष्ठः पुरोधाः परमार्थस्य समस्तवस्तुतत्त्वस्य विन्दन्तीति विन्दान् ज्ञानल-ब्धॄन् सर्वसाक्षात्कारिण इत्यर्थः । विदेर्लाभार्थात् "अनुपसर्गाल्लि-म्पविन्द—" इत्यादिना शप्रत्ययः । द्विजातीन् ब्राह्मणान् आर्चीत् पुत्रजन्मकाले पूजयामास । अर्चतेर्भौवादिकत्वाल्लुङि "इट ईटि" इति सकारलोपः । उदेजयन्त्युत्कम्पयन्तीत्युदेजयान् भीकरान् । अत्रापि तेनैव सूत्रेण शप्रत्ययः । भूतगणान् बालग्रहादिसमूहान् न्यषेधीत् मन्त्रैरुच्चाटयामास । सेधतेरूदित्त्वादिड्विकल्पादिट्यपि "नेटि" इति वृद्धिप्रतिषेधे लघूपधगुणः ॥ "इट ईटि" इति सकारलोपः ॥ सुतान् कुमारान् स्वकाले गर्भैकादशे वर्षे इत्यर्थः । 'गर्भैकादशेषु राजन्यम्' इति स्मरणात् । उपानेष्ट उपनीतवान् । नयतेर्लुङि "सम्मानन-" इत्यादिना आचार्यकरणे आत्मनेपदम् ॥

---

१ वसिष्ठो c., D., C.

वेदोऽङ्गवांस्तैरखिलोऽध्यगायि
शस्त्राण्युपायंसत जित्वराणि ।
ते भिन्नवृत्तीन्यपि मानसानि
समं जनानां गुणिनोऽध्यवात्सुः ॥ १६ ॥

१६. वेद इति ॥ तैरुपनीतैः कुमारैः अङ्गवान् साङ्गोऽखिलो वेदोऽध्यगायि। सर्वे वेदा अधीताः। जातावेकवचनम्। कर्मणि लुङि "विभाषा लुङ्लृङोः" इति गाङादेशे चिणि युगागमः। ते कुमाराः जित्वराणि जैत्राणि॥ "इण्नशजिसर्तिभ्यः क्वरप्" इति क्वरप्॥ पिति तुगागमः। शस्त्राण्युपायंसत उपयेमिरे। 'विवाहोपयमौ समौ' इत्यमरः। राज्ञां शस्त्रेषु दाराभिमानात्तत्परिग्रहे उपयमव्यपदेशः। अत एव यमेर्लुङि "उपाद्यमः स्वकरणे" इत्यात्मनेपदम्। 'स्वकरणं पाणिग्रहणम्' इति काशिकायाम्॥ "विभाषोपयमने" इति सिचः पक्षे कित्वाभावादनुनासिकलोपाभावः। गुणिनो गुणाढ्यास्ते कुमाराः भिन्नवृत्तीनि भिन्नवृत्तीन्यपि जनानां मानसानि सममविषममध्यवात्सुः मानसेष्ववात्सुरित्यर्थः॥ "उपान्वध्याङ्वसः" इत्यधिकरणस्य कर्मत्वम्॥ वसतेर्लुङि सिचि वृद्धिः॥ "सः स्यार्धधातुके" इति सकारस्य तकारः॥ "सिजभ्यस्तविदिभ्यश्च" इति झेर्जुसादेशः॥ भिन्नवृत्तिमनोरञ्जनविरोधस्य गुणत्वेन समर्थनाद्विरोधाभासोऽलंकारः॥

ततोऽभ्यगाद्गाधिसुतः क्षितीन्द्रं
रक्षोभिरभ्याहतकर्मवृत्तिः ।
रामं वरीतुं परिरक्षणार्थं
राजार्जिहत्तं मधुपर्कपाणिः ॥ १७ ॥

१७. तत इति ॥ ततः शस्त्रपरिग्रहानन्तरकाले रक्षोभिरभ्याहतकर्मवृत्तिः विहतानुष्ठानप्रवृत्तिः गाधिसुतो विश्वामित्रः परिरक्षणार्थं यज्ञ-

---

१ शास्त्रा. E.
२ उपायंसत विजित्वराणि $T_2$, उपायंसत च $T_4$.
३ चित्त $T_3$.
४ क्रतुरक्षणार्थम् $T_4$, $E_3$.

रक्षणार्थं रामं वरीतुं स्वीकर्त्तुम् ॥ "वृतो वा" इति वा दीर्घः ॥ क्षितीन्द्रं दशरथम् । अभ्यगात् आपत् ॥ "इणो गा लुङि" ॥ राजा दशरथस्तं गाधिसुतं मधुपर्कपाणिर्दधिमधुयुक्तपाणिः सन् आर्जिहत् अपूजयत् । अर्हेः पूजार्थाच्चौरादिकाण्णौ चङि "नन्द्राः संयोगादयः" इति रेफस्य निषेधात् "अजादेर्द्वितीयस्य" इति हिशब्दस्य द्विर्भावे "कुहोश्चुः" । आड्वृद्धिः ॥

ऐषीः पुनर्जन्मजयाय यत्त्वं
रूपादिबोधान्न्यवृतच्च यत्ते ।
तत्त्वान्यबुद्धाः[१] प्रतनूनि येन
ध्यानं[२] नृपस्तच्छिवमित्यवादीत् ॥ १८ ॥

१८. ऐषीरिति ॥ हे भगवन् ! ते तव येन ध्यानेन पुनर्जन्मनो जयाय निरासाय अपुनर्भवाय तत्त्वमात्मस्वरूपमैषीरज्ञासीः । इष गतौ । ये गत्यर्थास्ते ज्ञानार्थाः । ततो लुङि सिपि सिचि "इट ईटि" इति सिज्लोपः । आड्वृद्धिः । यद् ध्यानं रूपादिबोधाद्रूपादिविषयज्ञानात् न्यवृतत् न्यवर्त्तिष्ट ॥ "द्युद्भ्यो लुङि" इति परस्मैपदम् ॥ द्युतादित्वाच्लेरङादेशः । येन ध्यानेन प्रतनूनि सूक्ष्माणि तत्त्वानि महदादीन्यबुद्धाः अज्ञासीः । बुध्यतेः कर्त्तरि लुङि थासि "लिङ्सिचावात्मनेपदेषु" इति सिचः कित्वान्न लघूपधगुणः ॥ "झलो झलि" इति सिज्लोपः ॥ "झषस्तथोर्धोऽधः" ॥ तत्ते ध्यानं शिवमक्षतमिति काकुः । नृपः प्रत्यवादीत् कुशलमप्राक्षीदित्यर्थः ॥ "वदव्रज—" इत्यादिना सिचि वृद्धिः ॥ "इट ईटि" इति सलोपः ॥

आख्यन्मुनिस्तस्य शिवं समाधे-
र्विघ्नन्ति रक्षांसि वने क्रतूंस्तु[३] ।
तानि द्विषद्वीर्यनिराकरिष्णु-
स्तृणेढु रामः सह लक्ष्मणेन ॥ १९ ॥

---

१ तत्त्वान्यबोधाः (धीः?) E₂.
२ ध्यानिर्नृ (ध्यानी नृ?) T₃.
३ क्रतूंश्च c., N., C., T., E₂.

१९. आख्यादिति ॥ अथ पृष्टो मुनिस्तस्य राज्ञः समाधेर्ध्यानस्य शिवमक्षतिमाख्यदाख्यातवान् ॥ "अस्यतिवक्तिख्यातिभ्योऽङ्" इति च्लेरङादेशः ॥ "आतो लोप इटि च" इत्याकारलोपः । किन्तु रक्षांसि राक्षसाः वने क्रतून्विघ्नन्ति प्रतिबध्नन्ति । हन्तेर्लेटि "झोऽन्तः" ॥ "गमहन—" इत्यादिना उपधालोपः ॥ "हो हन्तेः—" इति कुत्वम् ॥ द्विषतां वीर्यं सामर्थ्यं निराकरिष्णुर्निराकरणशीलः ॥ "अलंकृञ्—" इत्यादिना इष्णुच् ॥ "न लोक—" इत्यादिना षष्ठीप्रतिषेधात् द्वितीयायां "द्वितीया" इति योगविभागात्समासः ॥ रामो लक्ष्मणेन सह तानि रक्षांसि तृणेढु हिनस्तु । तृह हिंसायां लोटि तिपि "एरुः" ॥ "रुधादिभ्यः श्नम्" ॥ "तृणह इम्" ॥ गुणः धत्वष्टुत्वढलोपाः ॥ आख्यदिति चानुषङ्गः ॥

स शुश्रुवांस्तद्वचनं मुमोह
राजाऽसहिष्णुः सुतविप्रयोगम् ।
अहंयुनाथ क्षितिपः शुभंयु-
रूचे वचस्तापसकुञ्जरेण ॥ २० ॥

२०. स इति ॥ स राजा तस्य मुनेर्वचनं शुश्रुवान् संश्रुतवान् ॥ "भाषायां सदवसश्रुवः" इति लिटः क्वसुरादेशः ॥ सुतविप्रयोगमसहिष्णुः सन् ॥ "अलंकृञ्—" इत्यादिना सहेरिष्णुच् ॥ "न लोक—" इत्यादिना षष्ठीप्रतिषेधात् कर्मणि द्वितीया ॥ मुमोह मोहं गतः । अथानन्तरमहंयुना अहंकारयुता तापसकुञ्जरेण पूज्यतापसेन विश्वामित्रेण ॥ "वृन्दारकनागकुञ्जरैः पूज्यमानम्" इति समासः ॥ शुभंयुः शुभवान् ॥ "अहंशुभयोर्युस्" इत्युभयत्र मत्वर्थीयो युस्प्रत्ययः ॥ क्षितिपो राजा वचो वाचमूचे उक्तवान् । दुहादित्वादप्रधाने कर्मणि लिट् ।

मया त्वमाप्थाः शरणं भयेषु[1]
वयं त्वयाप्योप्स्महि[2] धर्मवृद्धयै[3] ।
क्षात्रं द्विजत्वं च[4] परस्परार्थं
शङ्कां कृथा मा प्रहिणु स्वसूनुम् ॥ २१ ॥

१ भयेषु E1.
२ त्वया चाप्स्महि E1.
३ धर्मवृद्धैः E2.
४ हि D.

२१. मयेति॥ हे राजन्! भयेष्वापत्सु धर्मस्य वृद्ध्यै मया त्वं शरणं रक्षिता सन्। 'शरणं गृहरक्षित्रोः' इत्यमरः। आप्थाः प्राप्तोऽसि। आप्नोतेः कर्मणि लुङि थासि "झलो झलि" इति सिज्लोपः। त्वयापि वयं शरणमाप्स्महि प्राप्ताः स्मः। अहमपि प्राप्त इत्यर्थः॥ "अस्मदो द्वयोश्च" इत्येकत्वे बहुवचनम्॥ पूर्ववाक्ये मयेत्येकवचननिर्दिष्टस्यात्रापि तथैव निर्देश्यत्वात्। आप्स्महीत्यत्र आप्नोतेरेव कर्मणि लुङि महीङ्। झलपरत्वाभावान्न सिज्लोपः। तथाहि क्षत्रस्येदं क्षात्रं क्षत्रतेजः द्विजत्वं ब्रह्मतेजश्च परस्परार्थमन्योन्योपकारार्थम्। 'ब्रह्मणैव क्षत्रꣳ सꣳश्यति क्षत्रेण ब्रह्म' इत्यादि। 'नाब्रह्म क्षत्रमृध्नोति नाक्षत्रं ब्रह्म वर्धते। ब्रह्मक्षत्रे तु संपृक्ते इह चामुत्र ऋध्नुतः' इति स्मरणाच्चेति भावः। ततः किमत आह। शङ्कामनर्थोत्प्रेक्षां मा कृथाः मा कुरु। करोतेर्माङि लुङि तङि थास्॥ "न माङ्योगे" इत्यडभावः॥ "लिङ्सिचावात्मनेपदेषु" इति सिचः कित्वाद्गुणाभावः॥ "ह्रस्वादङ्गात्" इति सिचो लोपः॥ स्वसूनुं रामं प्रहिणु प्रेषय। हिनोतेर्लोटि सिपि "उतश्च प्रत्ययात्—" इत्यादिना हेर्लुक्॥ "हिनुमीना" इति णत्वम्॥

घानिष्यते तेन महान्विपक्षः
स्थायिष्यते येन रणे पुरस्तात्।
मा मां महात्मन् परिभूरयोग्ये
न मद्विधो न्यस्यति भारमग्र्यम्॥ २२॥

२२. शङ्कां मा कृथा इत्युक्तं तत्रोपपत्तिमाह। घानिष्यत इति॥ तथाहि तेन रामेण महान् विपक्षः शत्रुः रावणादिरिति भावः घानिष्यते हनिष्यते॥ "स्यसिच्सीयुट्—" इत्यादिना चिण्वदिट् आदिवृद्धिर्घत्वं च। किं च रामेण रणे पुरस्तादग्रे स्थायिष्यते स्थास्यते। तिष्ठतेर्भावे लृटि पूर्ववच्चिण्वदिटि युगागमः। हे महात्मन् महानुभाव! मा माम्॥ "त्वामौ द्वितीयायाः" इति मादेशः॥ मा परिभूः प्रत्याख्यानेन नावमन्य-

१ मा $T_3$, $T_4$, $E_3$, T, Com.

स्वेत्यर्थः । भुवो "माङि लुङ्" ॥ "न माङ्योगे" ॥ तथाहि मम विधेव विधा प्रकारो यस्य स मद्विधो मादृशः । विमृश्यकारीत्यर्थः । योगाय प्रभवतीति योग्यः समर्थः ॥ "योगाद्यच्च" ॥ अयोग्ये असमर्थे जने अर्थ्यं गुरुं भारं न न्यस्यति न निधत्ते तस्मान्मा शङ्किष्ठा इत्यर्थः ॥

क्रुध्यन् कुलं धक्ष्यति विप्रवह्नि-
र्यास्यन् सुतस्तप्स्यति मां समन्युम् ।
इत्थं नृपः पूर्वमवालुलोचे[1]
ततोऽनुजज्ञे[2] गमनं सुतस्य ॥ २३ ॥

२३. अथ राजा किमकार्षीदित्याह । क्रुध्यन्निति ॥ क्रुध्यन् सुतस्याप्रेषणे क्षुभ्यन् विप्र एव वह्निः कुलं धक्ष्यति भस्मीकरिष्यति । दहतेर्लृटि स्यप्रत्यये घत्वादिकार्यम् । यास्यन् प्रयास्यन् सुतः समन्युं सशोकम् । 'मन्युशोकौ तु शुक् स्त्रियाम्' इत्यमरः । मां तप्स्यति तापयिष्यति । इत्थं नृपः पूर्वं प्रथममवालुलोचे आलोचितवान् । तत आलोचनानन्तरं सुतस्य गमनमनुमेने अङ्गीचकार । कुलदाहादात्मसंतापमात्रं वरमिति निश्चयादिति भावः । मन्यतेः कर्तरि लिट् । कौमुद्यां तु ततोऽनुजज्ञ इति पाठमनुसृत्य "अनुपसर्गाज्ज्ञः" इति शास्त्रप्रातिकूल्यमुद्भाव्य नृप इत्यत्र नृपेणेति विपरिणामं कृत्वा दोषपरिहारः कृतः । तदा अनुजज्ञे अनुज्ञातम् । कर्मणि जानाते रूपम् । गमनमिति प्रथमान्तम् ॥

आशीर्भिरभ्यर्च्य मुनिः[4] क्षितीन्द्रं
प्रीतः प्रतस्थे पुनराश्रमाय ।
तं पृष्ठतः प्रष्ठमियाय नम्रो
हिंस्रेषु दीप्तास्त्रधनुः[5] कुमारः ॥ २४ ॥

---

१ मुपालुलोचे T₄.
२ ततोऽनुमेने T., Com., ततोऽनुजज्ञो (ज्ञौ ?) E₃.
३ ततः c., C., N.
४ मुनिः c., C., N.
५ दीप्तास्त्रधरः B., E₁, E₃, दीप्तास्त्रधनुः D., N., दीप्तास्त्रधरः c., C.

२४. आशीर्भिरिति ॥ मुनिः प्रीतः सन् क्षितीन्द्रमाशीर्भिराशीर्वादैरभ्यर्च्य संपूज्य पुनराश्रमाय आश्रमं गन्तुम् ॥ "क्रियार्थोपपदस्य—" इत्यादिना चतुर्थी ॥ प्रतस्थे प्रस्थितः ॥ "समवप्रविभ्यः स्थः" इत्यात्मनेपदम् ॥ हिंस्रेषु रक्षोव्याघ्रादिषु विषये । दीप्रास्त्रं प्रदीप्तविशिखं धनुर्यस्य सः । समासान्तविधेरनित्यत्वात् "धनुषश्च" इति नानङादेशः । कुमारो रामः नम्रः पितरं प्रणतः सन्नित्यर्थः प्रतिष्ठते अग्र इति प्रष्ठमग्रगामिनम् ॥ "आतश्चोपसर्गे" इति कर्तरि कः ॥ "प्रष्ठोऽग्रगामिनि" इति निपातनात्षत्वम् ॥ तं मुनिं पृष्ठतः पश्चादियाय अनुयात इत्यर्थः । इणो लिटि णलि वृद्ध्यायादेशौ ॥ "अभ्यासस्यासवर्णे" इतीयङादेशः ॥ "नमिकम्पि—" इत्यादिना नम्रकम्प्रदीप्रहिंस्रा रप्रत्ययान्ताः ॥

प्रयास्यतः पुण्यवनाय जिष्णो
रामस्य रोचिष्णुमुखस्य धृष्णुः ।
त्रैमातुरः कृत्स्नजितास्त्रशस्त्रः
सध्र्यङ् रतः श्रेयसि लक्ष्मणोऽभूत् ॥ २५ ॥

२५. प्रयास्यत इति ॥ ततोऽनन्तरं पुण्यवनाय तपोवनाय प्रयास्यतस्तपोवनं गमिष्यतः ॥ "गत्यर्थकर्मणि—" इत्यादिना कर्मणि चतुर्थी ॥ "लृटः सद्वा" इति शत्रादेशः ॥ जिष्णोर्जयशीलस्य ॥ "ग्लाजिस्थश्च ग्स्नुः" ॥ गिदयं न कित् ॥ रोचिष्णुमुखस्य रोचमानमुखस्य ॥ "अलंकृञ्—" इत्यादिना इष्णुच् ॥ रामस्य धृष्णुः धृष्टः । 'धृष्टे धृष्णुर्वियातः' इत्यमरः ॥ "त्रसिगृधिधृषिक्षिपेः क्नुः" ॥ तिसृणां मातृणामपत्यं पुमांस्त्रैमातुरः ॥ "तद्धितार्थ—" इत्यादिना समासः । "मातुरुत्संख्यासंभद्रपूर्वायाः" इत्यण्प्रत्यये परत उकारः । तद्दत्तपायसोद्भवत्वेन इतरयोरपि मातृत्वादिति भावः । तदुक्तं रघुवंशे । 'चरोरधार्धभागाभ्यां तामयोजयतामुभे' इति । रामायणविरोधस्तु पुराणभेदात्परिहृतोऽस्माभिः रघुवंशसंजीविन्यामेव । कृत्स्नं यथा तथा

१ अस्त्रशास्त्रः T₄, E., E₂. | २ गतः E.

जितानि स्वायत्तीकृतानि अस्त्राण्याग्नेयादीनि देवताधिष्ठितानि शस्त्राण्यनभिमन्त्रितायुधानि च येन सः लक्ष्मणः श्रेयसि हितकृत्ये । सहाञ्चतीति सध्र्यङ् सहचरः सहायोऽभूत् । 'यः सहाञ्चति सध्र्यङ् सः' इत्यमरः ॥ "ऋत्विग्दधृक्—" इत्यादिना अञ्चतेः क्विन् ॥ "क्विन्प्रत्ययस्य कुः" ॥ सहस्य सध्र्यादेशः । लक्ष्मणोऽपि राममनुगत इत्यर्थः ॥

इषुमति रघुसिंहे दन्दशूकाञ्जिघांसौ
धनुरारिभिरसह्यं मुष्टिपीडं दधाने ।
व्रजति पुरतरुण्यो बद्धचित्राङ्गुलित्रे[1]
कथमपि गुरुशोकान्मा रुदन्[2] माङ्गलिक्यः ॥२६॥

२६. इषुमतीति ॥ इषुमति प्रशस्तबाणमति । प्रशंसायां मतुप् । दंदशूकान् हिंस्रान् राक्षसान् ॥ "यजजपदशां यङः" इति दंशेर्यङन्तादूकप्रत्ययः ॥ "न लोक—" इत्यादिना षष्ठीप्रतिषेधात् कर्मणि द्वितीया ॥ जिघांसौ हन्तुमिच्छौ । हनः सन्नन्तादुप्रत्ययः ॥ "अज्झनगमां सनि" इति दीर्घः ॥ अत एवारिभिरसह्यं दुःसहं ॥ "शकिसहोश्च" इति यत्प्रत्ययः ॥ धनुः मुष्ट्या मुष्टिना वा पीडा निपीडनं यस्मिन्कर्मणि तद्यथा तथा दधाने ॥ "सप्तम्यां चोपपीड—" इत्यादिना णमुल् इति केचित् । तच्चिन्त्यम् । उपोपसर्गव्यभिचारेण तदसंभवादिति । अङ्गुलीस्त्रायत इत्यङ्गुलित्रमङ्गुलित्राणम् ॥ "आतोऽनुपसर्गे कः" ॥ बद्धं चित्रमङ्गुलित्रं येन तस्मिन् । रघुसिंहे रघुश्रेष्ठे रामे व्रजति पुरान्निर्गच्छति सति । गुरुः शोको विप्रयोगदुःखं यासां ताः पुरतरुण्यः पौराङ्गनाः । मङ्गलं प्रयोजनमासां माङ्गलिक्यः मङ्गलप्रयोजनाः सत्यः ॥ "प्रयोजनम्" इति ठक् ॥ "टिड्ढाणञ्—" इत्यादिना ङीप् ॥ कथमपि महता यत्नेनेत्यर्थः । 'ज्ञातहेतुविवक्षायामप्यादि कथमव्ययम् । कथमादि तथाप्यन्तं यत्नगौरवबाढयोः ॥' इति वचनात् । नारुदन् नाश्रूणि मुमुचुः । रुदेर्लुङि

---

[1] बद्धगोधाङ्गुलित्रे $E_2$.

[2] गुरुशोका नारुदन् D., Com.; गुरुशोकान्मा रुदन् $E_1$, $E_2$, $E_3$, T.

"इरितो वा" इति विकल्पात् च्लेरङ् । अन्तः सशोका अपि मङ्गलभयात्कथंचिच्छोकानुभावमश्रुपातं प्रत्यबध्नन्नित्यर्थः ॥

अथ जगदुरनीचैराशिषस्तस्य विप्रा-
स्तुमुलकलनिनादं तूर्य्यमाजघ्नुरन्ये ।
अभिमतफलशंसी चारु पुस्फोर[2] बाहु-
स्तरुषु चुकुवुरु[3]च्चैः पक्षिणश्चानुकूलाः ॥ २७ ॥

२७. अथेति ॥ अथास्मिन्नन्तरे विप्रास्तस्य रामस्य[1] अनीचैरुच्चैराशिषो जगदुः । अन्ये वादकास्तुमुलो महान् कलकलश्च निनादो यस्मिन् तद्यथा तथा तूर्यमाजघ्नुः ताडयामासुः । बाहुरस्य दक्षिणभुजः अभिमतफलशंसी इष्टार्थसिद्धिसूचकः सन् चारु साधु पुस्फोर स्फुरितवान् । णलोऽकित्वाद्गुणः ॥ "शर्पूर्वाः खयः" इत्यभ्यासे पकारः शिष्यते ॥ पक्षिणश्चानुकूलाः सन्तः तरुषूच्चैस्तारं चुकुवुः चुकुजुः । कुशब्दे लिट् । अत्र लिटः कित्वेन गुणाभावादुवङादेशः ॥

इति भट्टिकाव्ये प्रकीर्णकाण्डे रामसंभवो[4] नाम
प्रथमः सर्गः ॥

इति श्रीपदवाक्यप्रमाणपारावारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
भट्टिकाव्यव्याख्याने सर्वपथीनाख्याने प्रथमः सर्गः ॥

---

१ चास्य T2, T3, T4.
२ पुस्फोट E1.
३ चुकुजु E1.
४ रामोत्पत्तिर्नाम C., N., E2, E3; विश्वामित्रगमनो नाम B.

॥ श्रीः ॥

# अथ द्वितीयः सर्गः ।

वनस्पतीनां सरसां नदीनां
तेजस्विनां कान्तिभृतां दिशां च ।
निर्याय तस्याः स पुरः समन्ता-
च्छ्रियं दधानां शरदं ददर्श ॥ १ ॥

१. वनस्पतीनामिति ॥ स रामस्तस्याः पुरो निर्याय निर्गत्य । यातेः समासे क्त्वो ल्यबादेशः । समन्ताद्वनस्पतीनां वृक्षाणाम् । पारस्करादित्वात्सुडागमः । सरसां कासाराणां नदीनां सरितां तेजस्विनां चन्द्रादीनाम् । अथवा मेघापायाद्भास्वराणामिति सर्वविशेषणम् ॥ "नपुंसकमनपुंसकेन—" इत्यादिना नपुंसकैकशेषः ॥ कान्तिभृतामिति च सर्वविशेषणम् । दिशां च श्रियं दधानामादधानां पुष्णन्तीमित्यर्थः । शरदं शरल्लक्ष्मीं ददर्श ॥

तरङ्गसङ्गाच्चपलैः पलाशै-
र्ज्वालाश्रियं सातिशयां दधन्ति ।
सधूमदीप्ताग्निरुचीनि रेजु-
स्ताम्रोत्पलान्याकुलषट्पदानि ॥ २ ॥

२. अथ सप्तभिः श्लोकैः शरदं वर्णयति तरङ्गेत्यादिना ॥ तरङ्गसङ्गाच्चपलैश्चञ्चलैः पलाशैर्दलैः ज्वालानां श्रियं शोभां सातिशयं भूयिष्ठं यथा तथा दधन्ति दधानानि ॥ "नाभ्यस्ताच्छतुः" ॥ "वा नपुंसकस्य" इति विकल्पान्नुमागमः ॥ आकुलाः षट्पदाः येषु तानि ताम्रोत्पलानि रक्तोत्पलानि सधूमस्य दीप्तस्य ज्वलितस्य अग्नेः रुचिरिव रुचिर्येषां तानि सन्ति रेजुः तद्वद्रेजुरित्युपमालंकारः ॥

---

१ समन्ताच्छ्रियं T., G.
२ सातिशयं D., $T_2$, $T_3$, $T_4$, G., T., Com.

$E_2$ gives अदक्षताभासि° &c. as the 2nd verse.

बिम्बागतैस्तीरवनैः समृद्धिं
निजां विलोक्यापहृतां[1] पयोभिः ।
कूलानि सामर्षतयेव[2] तेनुः
सरोजलक्ष्मीं स्थलपद्महासैः[3] ॥ ३ ॥

३. बिम्बेति ॥ बिम्बेन प्रतिबिम्बरूपेणागतैः संक्रान्तैस्तीरवनैरुपलक्षितैः पयोभिः सरोजजलैरपहृतां निजामात्मीयां समृद्धिं वनलक्ष्मीं विलोक्य कूलानि कर्तॄणि सामर्षतयेव स्थलपद्महासैः स्थलकमलविकासैः सरोजलक्ष्मीं पयःसम्बन्धिनीं वितेनुर्विततस्तरुः । पयोभिः प्रतिबिम्बच्छलेन स्वकीयवनशोभापहृतेति कूलैः कोपात् स्थलपद्महासमिषेण तदीयसरोजशोभापहारः कृत इत्युत्प्रेक्षार्थः । पराहतश्रीकाणां तदीयश्रीहरणं युक्तमिति भावः ॥

निशातुषारैर्नयनाम्बुकल्पैः
पर्णान्त[4]पर्यागलदच्छबिन्दुः[5] ।
उपारुरोदेव नदत्पतङ्गः
कुमुद्वतीं तीरतरुर्दिनादौ ॥ ४ ॥

४. निशेति ॥ दिनादौ प्रभाते नयनाम्बुकल्पैस्तदुपमानयोग्यैरित्यर्थः । निशायां तुषारैर्हिमैः पर्णान्तेभ्यः पत्राग्रेभ्यः पर्यागलन्तः स्रवन्तः अश्रुबिन्दवो यस्य सः । नदन्तः कूजन्तः पतङ्गाः पक्षिणो यस्मिन्सः तीरतरुः कुमुद्वतीं कुमुदिनीं प्रतीत्यर्थः । गम्यमानोद्देशक्रियापेक्षया कर्मत्वम् । गम्यमानक्रियापेक्षया कारकोत्पत्तेरिष्टत्वात् ॥ "कुमुदनडवेतसेभ्यो ड्मतुप्" ॥ "झयः" इति वकारः ॥ "उगितश्च" इति ङीप् ॥ उपारुरोदेव । हन्त निःश्रीका मुकुलिता इति साक्रन्दमश्रूणि मुञ्चन्तीवेत्युत्प्रेक्षार्थः ॥

---

१ विलोक्योपहृतां B., विलोक्यापभृतां E₂.
२ सामर्षतयैव T₄.
३ भासैः T₃.
E₃ gives लतानुपातं &c. as the 3rd verse.

४ पत्रान्त E₃, C., N.
५ °दश्रु Com.
E₃ gives तरङ्गसङ्गा &c. as the 4th verse.

वनानि तोयानि च नेत्रकल्पैः
पुष्पैः सरोजैश्च निलीनभृङ्गैः[1] ।
परस्परं[2] विस्मयवन्ति लक्ष्मी-
मालोकयांचक्रुरिवादरेण ॥ ५ ॥

५. वनानीति ॥ वनानि तोयानि च विलीनभृङ्गैः कनीनिकायमानभृङ्गैः इति भावः । अत एव नेत्रकल्पैर्यथासंख्यं पुष्पैः सरोजैश्च परस्परं लक्ष्मीमन्योन्यशोभां विस्मयवन्ति आश्चर्याणि सन्ति आदरेणास्थया आलोकयाञ्चक्रुरिवेत्युत्प्रेक्षा । सा च वनानि तोयानि च इति केवलप्रकृतगोचरया तुल्ययोगितया नेत्रकल्पैरित्युपमया पूर्वोक्तयथासङ्ख्येन चोत्थापितेति सङ्करः ॥

प्रभातवाताहतिकम्पिताकृतिः[3]
कुमुद्वतीरेणुपिशङ्गविग्रहम् ।
निरास भृङ्गं कुपितेव पद्मिनी
न मानिनी संसहतेऽन्यसङ्गमम् ॥ ६ ॥

६. प्रभातेति ॥ प्रभाते वाताहत्या कम्पिताकृतिरिति निषेधचेष्टोक्तिः । पद्मिनी कुमुद्वतीरेणुभिः पिशङ्गविग्रहमन्याङ्गरागारुणाङ्गमित्यर्थः । भृङ्गं कुपितेव खण्डिता नायिकेवेत्यर्थः । 'नीत्वान्यत्र निशां प्रातरागते प्राणवल्लभे । अन्यासंभोगचिह्नैस्तु कुपिता खण्डिता मता' ॥ इति लक्षणात् । निरास निरस्तवती । अस्यतेर्लिट् । "अत आदेः" इत्यभ्यासदीर्घः । तथाहि मानिनी मानवती स्त्री अन्यस्याः सङ्गमन्यसङ्गमं स्वप्रियस्येति शेषः । सर्वनाम्नो वृत्तिमात्रे पूर्वपदस्य पुंवद्भावः । न संसहते न क्षमते । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । वंशस्थं वृत्तम् ॥

---

१ विलीन T., Com.
२ परस्परां c., $T_1$, $T_2$, B., C., N.
$E_2$ gives बिम्बागतै &c. as the 5th verse.

३ वातागम $T_2$, $T_3$, $T_4$.
c gives अदक्षताम्भांसि &c. as the 6th verse. $E_2$ gives निशातुषारैः &c. as the 6th verse.

दत्तावधानं मधुलेहिगीतौ
प्रशान्तचेष्टं हरिणं जिघांसुः।
आकर्णयन्नुत्सुकहंसनादान्[1]
लक्ष्ये[2] समाधिं न दधे मृगावित्॥ ७॥

७. दत्तेति॥ मधुलेहिनो मधुलिहः। लिहेस्ताच्छील्ये णिनिः। तेषां गीतौ गाने दत्तावधानं दत्तचित्तम्। मृगाणां गानप्रियत्वादिति भावः। अत एव प्रशान्तचेष्टं निष्पन्दं हरिणं जिघांसुर्हन्तुमिच्छुः। हन्तेः सन्नन्तादुप्रत्ययः। मृगान्विध्यतीति मृगावित् व्याधः। व्यध ताडने क्विप्॥ "ग्रहिज्यावयि—" इत्यादिना संप्रसारणम्॥ "नहिवृति" इत्यादिना पूर्वस्य दीर्घः॥ उत्सुकानां हृष्टानां हंसानां नादानाकर्णयन्। तदासक्तचित्तः सन्नित्यर्थः। लक्ष्ये शरव्ये मृगे समाधिमेकाग्र्यं न दधे नाधारयत्। अपूर्वो भावो भावान्तरं प्रतिबध्नातीति भावः। अत्र जिघांसादिसामग्रीसद्भावेऽपि लक्ष्यसमाधिलक्षणकार्यस्य हंसकूजिताकर्णनेनानुत्पत्तेरुक्तनिमित्ता विशेषोक्तिरलंकारः 'तत्सामग्र्यामनुत्पत्तौ विशेषोक्तिर्निगद्यते' इति लक्षणात्॥

गिरेर्नितम्बे मरुता विभिन्नं
तोयावशेषेण[3] हिमाभमभ्रम्।
सरिन्मुखाभ्युच्चयमादधानं[4]
शैलाधिपस्यानुचकार लक्ष्मीम्॥ ८॥

८. गिरेरिति॥ गिरेर्नितम्बे कटके मरुता वातेन विभिन्नं विस्तारितं तोयानामवशेषेण तोयेषु गतेषु अवशेषेण अवशिष्टेन निर्जलस्वरू-

c gives लतानुपातं &c., and E₂ वनानि तोयानि &c., as the 7th verse.

१ हंसनादं T₃.

२ लक्ष्ये E₂, E₃.

c and E₃ give प्रभातवाताहति &c. as the 8th verse.

३ तोयाविशेषेण T₄.

४ °भ्युच्छ्रय T., G., Com.

वेण हिमाभं हिमप्रभं सरितां मुखेषु प्रवाहेषु अभ्युच्छ्रयं वृद्धिमादधानं प्राक्क्षण एव वृष्ट्या कृतोच्छ्रयमित्यर्थः । अभ्रं मेघः शैलाधिपस्य हिमाद्रेर्लक्ष्मीमनुचकार तादृशीं शोभां प्रापेत्युपमा ॥

गर्जन्[1] हरिः साम्भसि शैलकुञ्जे[2]

प्रतिध्वनीनात्मकृतान्निशम्य ।

क्रमं[3] बबन्ध क्रमितुं सकोपः

प्रतर्कयन्नन्यमृगेन्द्रनादान् ॥ ९ ॥

९. गर्जन्निति ॥ साम्भसि शैलकुञ्जे गर्जन् अम्भः पीत्वा हर्षात् क्ष्वेडमानो हरिः सिंहः आत्मकृतान् स्वगर्जनकृतान् प्रतिध्वनीन् निशम्य अन्यमृगेन्द्रनादान् प्रतिसिंहनादान् प्रतर्कयन्मन्यमानोऽत एव सकोपः सन् क्रमितुं सहेलमुत्पतितुं क्रमं बबन्ध पादन्यासं चकारेत्यर्थः । अत्र स्वप्रतिध्वनिषु सादृश्यात्प्रतिपक्षगर्जनभ्रान्तेर्भ्रान्तिमदलंकारः ॥

अदृक्षताम्भांसि नवोत्पलानि

रुतानि चाश्रोषत[4] षट्पदानाम् ।

आघ्रायि वान् गन्धवहः सुगन्धै-[5]

स्तेनारविन्दव्यतिषङ्गवांश्च ॥ १० ॥

१०. अदृक्षतेति ॥ तेन रामेण नवान्युत्पलानि येषु तान्यम्भांसि अदृक्षत दृष्टानि । दृशेः कर्मणि लुङि च्विणवादिडभावपक्षे "न दृशः" इति क्सादेशनिषेधः। हलन्तत्वात् "लिङ्सिचावात्मनेपदेषु" इति कित्वान्न गुणः । व्रश्चादिना षत्वम् ॥ "षढोः कः सि" इति कत्वम् "इण्कोः"

C and E2 give दत्तावधानं &c., as the 9th verse.

C gives गिरेर्नितम्बे &c., and E2 तिग्मांशु &c. as the 10th verse.

१ तर्जन् T2.

२ कुञ्जे T2.

३ क्रमे B.

४ वाश्रोषत E1.

५ सुगन्धि B. Noticed also in the Com.

इति षत्वम्॥ षट्पदानां रुतानि अश्रोषत श्रुतानि। शृणोतेः कर्मणि लुङि अहलन्तत्वेन सिचोऽकित्वाद्गुणः। अरविन्दानां व्यतिषङ्गः सम्पर्कः तद्वान् अत एव सुगन्धः शोभनगन्धः। गन्धस्येत्वे तदेकान्तग्रहणादिहेत्वाभावः। सुगन्धिरिति पाठेऽपि कविप्रयोगबाहुल्यादिष्यते। वान्मन्दं गच्छन्। वातेर्लटः शत्रादेशः। वहतीति वहः। पचाद्यच्। गन्धस्य वहो गन्धवहः वायुश्चाघ्रायि आघ्रातः। जिघ्रतेः कर्मणि लुङि चिणि युक्। एवं सर्वतो निर्वृतिलाभान्नाध्वश्रमसंभावनासीदिति भावः॥

लतानुपातं कुसुमान्यगृह्णात्
स नद्यवस्कन्दमुपास्पृशच्च।
कुतूहलाच्चारुशिलोपवेशं
काकुत्स्थ ईषत्स्मयमान आस्त[१]॥ ११॥

११. लतेति॥ स काकुत्स्थो रामः कुतूहलात्कौतुकादीषत्स्मयमानो मन्दं हसन् लतां लतामनुपत्यासाद्य तथा लतामनुपत्यानुपत्य च लतानुपातं कुसुमान्यगृह्णात्। ग्रहेर्लङि श्नाप्रत्यये संप्रसारणम्। नदीं नदीमवस्कन्द्य तथा नदीमवस्कन्द्यावस्कन्द्य च नद्यवस्कन्दमुदकमुपास्पृशत् आचामति स्म। 'उपस्पर्शस्त्वाचमनम्' इत्यमरः। स्पृशेर्लङ्। चारुशिलां चारुशिलामुपविश्य तथा चारुशिलामुपविश्योपविश्य चारुशिलोपवेशमास्त तत्रोपविष्ट इत्यर्थः। आसेर्लङि तङ्। 'देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्' इति सकर्मकत्वम्॥ "विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः" इति सर्वत्र द्वितीयान्त उपपदे विश्यादिभ्यो णमुल्॥ व्याप्यमाने आसेव्यमाने चार्थे गम्ये गेहादिद्रव्याणां विश्यादिक्रियाभिः साकल्येन सम्बन्धो व्याप्तिः क्रियायाः पौनःपुन्यमासेवा॥ "नित्यवीप्सयोः" इति द्वित्वं तु न

१ आस्ते Es.
c gives गर्जन् &c. and Es दिव्या- पिनी &c. as the 11th verse.

भवति ॥ "उपपदमतिङ्" इति समासे तेनैव गम्यमानार्थत्वात् पूर्वोक्तविग्रहवाक्यगतनित्यवीप्साप्रयुक्तक्रियाद्वयगतद्विर्वचनस्याप्रयोगः ॥

तिग्मांशुरश्मिच्छुरितान्यदूरात्
प्राञ्चि प्रभाते सलिलान्यपश्यत् ।
गभस्तिधाराभिरिव द्रुतानि
तेजांसि भानोर्भुवि संभृतानि ॥ १२ ॥

१२. तिग्मेति ॥ प्रभाते अदूरादन्तिके प्राञ्चि प्राच्यानि तिग्मांशोः सूर्यस्य रश्मिभिः छुरितानि स्फुरितानि रञ्जितानि सलिलानि गभस्तिधाराभिः किरणश्रेणिभिः अंशुपरंपराभिः द्रुतानि क्षरितानि सन्ति भुवि संभृतानि राशीकृतानि भानोस्तेजांसि इवापश्यदित्युत्प्रेक्षा ॥

दिग्व्यापिनी लोचनलोभनीया
मृजान्वयाः[1] स्नेहमिव स्रवन्तीः ।
ऋज्वायताः श[2]स्यविशेषपङ्क्ती-
स्तुतोष पश्यन् वितृणान्तरालाः ॥ १३ ॥

१३. दिगिति ॥ दिग्व्यापिनीः अतिविपुलाः लोचनानां लोभनीयाः प्रलोभिकाः दृष्टिमधुराः । बाहुलकः कर्तरि कृत्यः । मृजा शुद्धिः ॥ "षिद्भिदादिभ्योऽङ्"॥ तयान्विताः स्वच्छा इत्यर्थः । स्नेहं चिक्कणतां स्रवन्तीरिवेत्युत्प्रेक्षा । काले मूलसेकादतिमसृणा इत्यर्थः । 'चिक्कणं मसृणं स्निग्धम्' इत्यमरः । ऋजवः समरेखाः पादवक्रा आयता दीर्घाश्च । वितृणान्यन्तरालानि यासां ताः उत्खातान्तस्तृणा इत्यर्थः । सस्यविशेषाणां नानासस्यानां पङ्क्तीः पश्यंस्तुतोष । स्वभावोक्तिरलंकारः ॥

---

E2 gives वियोग &c. as the 12th verse.

E2 gives श्रीभूषणं &c. as the 13th verse.

१ मृजान्विताः T2, T4, G., T., Com.

२ सस्य E1, T3, G., T., Com., E2.

वियोगदुःखानुभवानभिज्ञैः
काले नृपांशं विहितं ददद्भिः।
आहार्यशोभारहितैरमायै-
रैक्षिष्ट पुम्भिः प्रचितान् स गोष्ठान् ॥ १४ ॥

१४. वियोगेति ॥ वियोगेन पुत्रकलत्रादिविप्रयोगेण यो दुःखानुभवस्तस्यानभिज्ञैः विहितं धर्मशास्त्रचोदितं नृपांशं राजदेयं करं काले समये ददद्भिः आहार्यशोभारहितैः कटकमुकुटादिसंपाद्यशोभानपेक्षैरित्यर्थः। अमायैरकपटैः पुम्भिः गोपजनैः प्रचितान् प्रचुरान् गावस्तिष्ठन्त्यत्रेति गोष्ठाः गोनिवासव्रजाः। विशेष्यलिङ्गविवक्षया पुल्लिङ्गनिर्देशः। अत एव 'गोष्ठो भूतपूर्वगोष्ठीनो देशः' इति काशिकायाम्। 'गोष्ठं गोस्थानम्' इत्यमरकोशे। नपुंसकनिर्देशो विशेष्यानुसारादित्यविरोधः॥ "सुपि स्थः" इति कप्रत्ययः। "अम्बाम्बगोभूमि—" इत्यादिना षत्वम् ॥ तान् गोष्ठान् स रामः पेक्षिष्ट अद्राक्षीत्। ईक्षतेर्लुङि ताङि सिचीट्। आड्वृद्धिः॥

स्त्रीभूषणं चेष्टितमप्रगल्भं
चारूण्यवक्राण्यपि वीक्षितानि।
ऋजूंश्च विश्वासकृतः स्वभावान्
गोपाङ्गनानां मुमुदे विलोक्य ॥ १५ ॥

१५. स्त्रीति ॥ स रामो गोपाङ्गनानां सम्बधि स्त्रीणां भूषणमलंकारभूतमप्रगल्भमधृष्टं चेष्टितं व्यापारमवक्राण्यनपाङ्गप्रवृत्तान्यपि चारूणि वीक्षितानि तथा ऋजूननभिसंधिजान् अत एव विश्वासकृतो विश्वासजनकान् भावान्स्वभावांश्च शीलानिति यावत्। 'भावः सत्तास्वभा-

E₂ gives विवृत्त &c. as the 14th verse.
१ नृपांशं च करं T₄, नृपांसं E₂.

E₂ gives विचित्र &c. as the 15th verse.
२ स भावान् G., T., Com.

वाभिप्रायचेष्टास्वजन्मसु ' इत्यमरः । स्वभावानिति पाठेऽप्ययमेवार्थः । 'शीलं स्वभावः' इत्यभिधानात् । विलोक्य मुमुदे ॥

विवृत्तपार्श्वं रुचिराङ्गहारं
समुद्वहच्चारुनितम्बरे[1]म्यम् ।
आमन्द्रमन्थध्वनिदत्ततालं
गोपाङ्गनानृ[2]त्तमनन्दयत्तम् ॥ १६ ॥

१६. विवृत्तेति ॥ विवृत्तपार्श्वं वलितपक्षकं रुचिराङ्गहारं मनोहराङ्गविक्षेपं समुद्वहता सम्यगुन्नमता चारुणा नितम्बेन रम्यमामन्द्रेण गम्भीरेण मन्थध्वनिना मन्थानघोषेण दत्तस्तालः कालक्रियामानं यस्मिन् तत् गोपाङ्गनानां बल्लवीनां नृत्तमिव नृत्तं तात्कालिकाङ्गचलनविशेषः तं राममनन्दयत् । अत्र गात्रकर्मणि नृत्तत्वारोपाद्रूपकालंकारः स्वभावोक्तिसंकीर्णः ॥

विचित्रमुच्चैः प्लवमानमारात्
कुतू[3]हलं त्रस्नु ततान तस्य ।
मेघात्ययोपात्तवनो[4]पशोभं
कदम्बकं वातमजं मृगाणाम् ॥ १७ ॥

१७. विचित्रमिति ॥ विचित्रं चित्ररूपमाराद्दूरादुच्चैरुदग्रं प्लवमानं वल्गत् त्रस्नु चकितम् ॥ "त्रसिगृधि—" इत्यादिना क्नुप्रत्ययः ॥ मेघात्ययेन शरदागमेनोपात्ते बलमुपशोभा च येन तत् । वातमजतीति वातमजं वाताभिगामी वातमृगाख्यो मृगविशेषः । अत एव 'वातप्रमीर्वातमृगः' इत्यमरः । खश्प्रकरणे "वातशुनीतिलशर्धेष्वजधेट्तुदज-

E2 gives गिरेर्नितम्बे &c. as the 16th verse.

१ बिम्बम् T2.

२ नृत्य c., T1, C., N, E3, B.

c gives सितारविन्द &c. and E2 गर्जन् &c. as the 17th verse.

३ कौतूहलं T1, C., T2.

४ बलोपशोभं E1, E3, D., T2, T3, T, G, Com.

ज्ञातीनामुपसंख्यानम्" इति वातोपपदादजेः खशि मुमागमः । मृगाणां कदम्बकं तस्य रामस्य कुतूहलं ततान वितस्तार । स्वभावोक्तिरलंकारः ॥

सितारविन्दप्रचयेषु लीनाः
संसक्तफेणेषु च सैकतेषु ।
कुन्दावदाताः कलहंसमालाः
प्रतीयिरे श्रोत्रसुखैर्निनादैः ॥ १८ ॥

१९. सितेति ॥ सितारविन्दप्रचयेषु पुण्डरीकषण्डेषु तथा संसक्तफेनेषु सैकतेषु च लीना कुन्दावदाताः स्वयं च कुन्दकुसुमधवलाः कलहंसमालाः श्रोत्रसुखैः निनादैः प्रतीयिरे प्रतीताः ज्ञाताः । प्रतिपूर्वादिणः कर्मणि लिट् ॥ "लिटस्तझयोरेशिरेच्" ॥ "इणो यण्" ॥ "द्विर्वचनेऽचि" इति यणःस्थानिवद्भावात् द्विर्वचने "दीर्घ इणः किति" इत्यभ्यासदीर्घः ।' अत्र कलहंसानां पुण्डरीकपुलिनसंदेहगोचराणां निनादैर्निश्चयान्तः संदेहालंकारभेदः । तेन गुणसाम्योत्थवस्त्वन्तरैकतालक्षणः सामान्यालंकारो व्यज्यते ॥

न तज्जलं यन्न सुचारुपङ्कजं
न पङ्कजं तद्यदलीनषट्पदम् ।
न षट्पदोऽसौ न जुगुञ्ज यः कलं
न गुञ्जितं तन्न जहार यन्मनः ॥ १९ ॥

१९. नेति ॥ किं बहुना यज्जलं सुचारुपङ्कजं न तज्जलं नासीत् । पङ्कजं च यदलीनषट्पदं तन्नासीत् । षट्पदोऽपि यः कलं न जुगुञ्ज । गुजि अव्यक्ते शब्दे । लिट् । असावगुञ्जन् षट्पदो नासीत् । गुञ्जितं च यन्मनो न जहार तद्गुञ्जितं नासीत् । किन्तु सर्वं तत्तदुचितगुणविशिष्टमेवा-

c gives विचित्र &c. as the 18th verse.

१ फेनेषु $E_1$, $E_2$, $E_3$, T., G., Com.
२ यत्र विलीन $T_4$.

र्भक्तिरित्यर्थः । अत्र पूर्वपूर्वं प्रत्युत्तरोत्तरस्य निवर्त्तनमुखेन विशेषणत्वोक्तेरेकावलीभेदोऽलङ्कारः । 'यत्रोत्तरोत्तरेषां स्यात्पूर्वपूर्वं प्रति क्रमात् । विशेषकथनं यत्स्यादसावेकावली मता' इति लक्षणात् ॥

तं यायजूकाः सह भिक्षुमुख्यै-
स्तपःकृशाः शान्त्युदकुम्भहस्ताः ।
यायावराः पुष्पफलेन चान्ये[1]
प्रानर्चुरर्च्या[2] जगदर्चनीयम् ॥ २० ॥

२०. तमिति ॥ तपसा कृशाः क्षमाः यायजूकाः इज्याशीलाः ॥ "यजजपदशां यङः" इति यजेर्यङन्तादूकप्रत्ययः ॥ शान्त्यर्थमुदकुम्भः शान्त्युदकुम्भः ॥ "एकहलादौ—" इत्यादिना उदकस्योदादेशः ॥ स हस्ते येषां ते सन्तः । भिक्षुमुख्यैः परिव्राजकवर्यैः सह । 'भिक्षुः परिव्राट् कर्मन्दी' इत्यमरः ॥ "सनाशंसभिक्ष उः" ॥ जगदर्चनीयं जगत्पूज्यं तं रामं प्रानर्चुः प्रकर्षेण पूजयामासुः । अर्चतेर्भौवादिकाल्लिट् ॥ "अत आदेः" ॥ "तस्मान्नुड् द्विहलः" इत्यभ्यासदीर्घनुडागमौ ॥ अर्च्याः पूज्याः ॥ "ऋहलोर्ण्यत्" ॥ अन्ये यायावराः शिलोञ्छमात्रजीविनः गृहस्थविशेषाः ॥ "यश्च यङः" इति यातेर्यङन्ताद्वरच्प्रत्ययः ॥ अल्लोपयलोपौ । पुष्पैश्च फलैश्च पुष्पफलेन ॥ "जातिरप्राणिनाम्" इति बहुप्रकृतिकद्वन्द्वैकवद्भावः ॥ 'अप्राणिनामिति प्रतिषेधे श्रूयमाणं बहुत्वं विधावपि बहुत्वं गमयति' इति न्यासकारवचनात् । प्रानर्चुः ॥

विद्यामथैनं विजयां जयां च
रक्षोगणं क्षिप्नुमविक्षतात्मा[3] ।
अध्यापिपद्गाधिसुतो यथाव-
न्निर्घातयिष्यन्[4] युधि यातुधानान् ॥ २१ ॥

२१. विद्यामिति ॥ अथाविक्षतात्मा रागाद्यनुपहतचित्तः गाधिसुतः युधि यातुधानान् राक्षसान् घातयिष्यन् मारयिष्यन् । हन्तेर्ण्यन्तात्

१ चान्ये E1.
२ प्रानर्चु E2, D., N.
३ अविक्षितात्मा D.
४ निर्घातयिष्यन् T3.

"लृटः सद्वा" इति शत्रादेशः। रक्षोगणं क्षिप्नुं रक्षोगणस्य क्षेप्त्रीं हन्त्रीम्॥ "त्रसिगृधि—" इत्यादिना क्नुप्रत्ययः॥ "न लोक—" इत्यादिना षष्ठीप्रतिषेधः॥ विजयां जयां नाम विद्यामेनं रामं यथावत् यथार्हम्॥ "तदर्हम्" इति वतिप्रत्ययः॥ अध्यापिपत् अध्यापितवान् ग्राहितवानित्यर्थः। इङो णौ चङि गाङादेशाभावपक्षे "क्रीङ्जीनां णौ" इत्यात्वे पुगागमे अजादित्वाद्द्वितीयैकाचः पेर्द्विर्भावः॥

आयोधने[1] स्थायुकमस्त्रजात-
ममोघमभ्यर्णमहाहवाय।
ददौ[2] वधाय क्षणदाचराणां
तस्मै[3] मुनिः श्रेयसि जागरूकः॥२२॥

२२. आयोधन इति॥ श्रेयसि रामहिते जागरूकः प्रबुद्धः अवहितः। जागरूक इति जागर्तेरूकप्रत्ययः। मुनिर्विश्वामित्रः अभ्यर्णमहाहवाय आसन्नमहारणाय। अभ्यर्णेत्यर्देः कर्त्तरि क्तः॥ "अभेश्चाविदूर्ये" इति इट्प्रतिषेधः॥ "रषाभ्याम्—" इति निष्ठानस्य णत्वम्॥ आहूयन्तेऽस्मिन्नित्याहवः॥ "आङि युद्धे" इति ह्वयतेराङ्पूर्वादप्प्रत्ययः संप्रसारणं च॥ तस्मै रामाय क्षणदाचराणां वधाय रक्षोवधार्थम्। आयोधने युद्धे स्थायुकं स्थास्नुं शत्रुभ्यस्तिष्ठमानमित्यर्थः॥ "लषपत—" इत्यादिना उकञ्॥ अमोघमप्रतिहतमस्त्रजातं ददौ उपदिदेशेत्यर्थः॥

तं विप्रदर्शं कृतघातयत्ना
यान्तं वने रात्रिचरी डुढौके।
जिघांसुवेदं धृतभास्वराऽस्त्र[4]-
स्तां ताडकाख्यां[5] निजघान रामः॥२३॥

२३. तमिति॥ विप्रान् साकल्येन दृष्ट्वा विप्रदर्शं कृतघातयत्ना विहितवधोद्योगा रात्रिचरी राक्षसी॥ "चरेष्टः"॥ टित्वात् ङीप्॥ यान्तं

१ आयोधनस्थायुक D., E₂.
२ ददौ T₂.
३ अस्मै T₃.
४ भास्वरास्त्र E₃, com.
५ ताटका T₂, T₄ T., G., Com.

वनेचरं तं रामं डुढौके । ढौकेर्गत्यर्थाल्लिट् । अथ रामस्ताटकाख्यां तां रात्रिचरीं साकल्येन जिघांसुं विदित्वा जिघांसुवेदम् ॥ "कर्मणि दृशिविदोः साकल्ये" इत्युभयत्रापि णमुल्प्रत्ययः ॥ अत्र ताटकाया एकत्वेऽप्यदितिः पाशानिति बहुत्ववदवयवाभिप्रायं साकल्यवचनं वेदितव्यम् । तद्वत्तदवयवेष्वपि जिघांसुत्वसंभवात् । अवयवव्यापारपूर्वकत्वादवयविव्यापारस्येति । धृतं भास्वरं दीप्तमस्त्रं येन स सन् निजघान निहतवान् ॥

अथालुलोके[1] हुतधूमकेतु-
शिखाञ्जनस्निग्धसमृद्धशाखम् ।
तपोवनं भाध्ययनाभिभूत-
समुच्चरचारुपतत्रि[2]शिञ्जम्[3] ॥ २४ ॥

२४. अथेति ॥ अथ ताटकावधानन्तरं रामः हुतस्य हविषा तर्पितस्य धूमकेतोर्धूमध्वजस्याग्नेः शिखानां ज्वालानामञ्जनैस्तदुत्थकज्जलैः स्निग्धाः समृद्धाश्च शाखाः यस्मिन् तत् । प्राध्ययनेन प्रकृष्टेन उच्चतरेण वेदपाठेन अभिभूता तिरोहिता समुच्चरन्ती समन्तादुत्पद्यमाना पतङ्गानां पक्षिणां शिञ्जा रवो यस्मिन् तत् । शिजि अव्यक्ते शब्दे ॥ "गुरोश्च हलः" इति स्त्रियामकारप्रत्ययः ॥ तपोवनमालुलोके ददर्श । लोकृ दर्शने । कर्त्तरि लिट् । तङ् । अभ्यासह्रस्वः ॥

क्षुद्रान्न जक्षुर्हरिणान्मृगेन्द्रा
विशश्वसे पक्षिगणैः समन्तात् ।
नंनम्यमानाः फलदित्सयेव
चकाशिरे तत्र[4] लता विलोलाः ॥ २५ ॥

२५. क्षुद्रानिति ॥ तत्र तपोवने मृगेन्द्राः सिंहाः क्षुद्रान् दुर्बलान् हरिणान् न जक्षुः नाभक्षयन् ॥ "वा लिटि" इत्यदेर्घस्लादेशः ॥ "गमहन—" इत्यादिना उपधालोपः ॥ "शासिवसिघसीनां च" इति

१ लुलोचे C.
२ पतङ्ग T2, T4, T., G., Com.
३ सिञ्जम् D.
४ यत्र E2, E3.

षत्वम् ॥ समन्तात्पक्षिगणैः विशश्वसे विश्वस्तम् । विस्रब्धं चिचेरुरित्यर्थः । श्वसेर्भावे लिट् । विलोलाश्चञ्चलाः लताः फलानां दित्सया दातुमिच्छयेव सुखग्रहणमित्युत्प्रेक्षार्थः । ददातेः "सनि मीमा—" इत्यादिना सन्नभ्यासलोपः। ततः स्त्रियामप्रत्यये टाप् । नंनम्यमानाः फलभरेण भृशं नमन्त्यः । नमेर्यङन्ताल्लटः शानजादेशः । चकाशिरे भान्ति स्म ॥

अपूपुजन् विष्टरपाद्यमाल्यै-
रातिथ्यनिष्णा[1] वनवासिमुख्याः ।
प्रत्यग्रहीष्टां मधुपर्कमिश्रं
तावासनादि[2] क्षितिपालपुत्रौ ॥ २६ ॥

२६. अपूपुजन्निति ॥ अतिथ्यर्थमातिथ्यमतिथिसत्कारः ॥ "अतिथेर्ञ्यः" । तत्र निष्णान्तीति निष्णाः कुशलाः ॥ "आतश्चोपसर्गे" इति कः ॥ "निनदीभ्यां स्नातेः कौशले" इति षत्वम् ॥ वनवासिमुख्याः वानप्रस्थवर्याः । 'वैखानसो वनेवासी वानप्रस्थश्च तापसः' इति यादवः । "शयवासवासिष्वकालात्" इति विकल्पान्नालुक् । क्षितिपालपुत्रौ दाशरथी विष्टरमासनम् । विपूर्वात्स्तृणातेः "ऋदोरप्" ॥ "वृक्षासनयोर्विष्टरः" इति षत्वम् ॥ पादार्थं जलं पाद्यम् । 'पाद्यं पादाय वारिणि' इत्यमरः ॥ "पादार्घाभ्यां च" इति यत्प्रत्ययः ॥ माला एव माल्यानि । चातुर्वर्ण्यादित्वात्साधुः । तैरपूपुजन् पूजयामासुः । पूजेर्णौ चङ्युपधाह्रस्वः । क्षितिपालपुत्रौ च तदासनादि मधुपर्कमिश्रं यथा तथा तेन सहेत्यर्थः । प्रत्यग्रहीष्टां प्रतिगृहीतवन्तौ । तसस्तामादेशः । "ह्म्यन्त—" इति वृद्धिप्रतिषेधः ॥ "ग्रहोऽलिटि दीर्घः" ॥

दैत्याभिभूतस्य युवामवोढ-
मग्नस्य दोर्भिर्भुवनस्य भारम्[3] ।
हवींषि संप्रत्यपि रक्षतं तौ
तपोधनैरित्थमभाषिषाताम् ॥ २७ ॥

---

१ निष्ठा C.
२ तदासनादि T₂, T₄, Com.
३ भारं भुवनस्य दोर्भिः E₁.

२७. दैत्येति ॥ हे दाशरथी युवां दैत्यैरसुरैरभिभूतस्य पीडितस्य अत एव मग्नस्य निरालम्बनस्य भुवनस्य भारं रक्षणधुरां दोर्भिर्भुजैरवोढमूढवन्तौ। भुजबलेन दैत्यवधः कृतोऽवतारान्तरेष्विति भावः। वहेर्लुङि मध्यमद्विवचने थसस्तमादेशे "सहिवहोरोदवर्णस्य" इत्योत्वे धत्वादिकार्यम्। संप्रत्यपि तौ युवां हवींषि पशुपुरोडाशादीनि रक्षतम्। रक्षोभ्य इति भावः। रक्षेः प्रार्थनायां लोटि थसस्तमादेशः। इत्थमनेन प्रकारेण॥ "इदमस्थमुः"॥ तौ तपोधनैरभाषिषातां भाषितौ। भाषेः कर्मणि लुङि सिचीडागमः॥

तान्प्रत्यवादीदथ राघवोऽपि
यथेप्सितं प्रस्तुत कर्म धर्म्यम्।
तपोमरुद्भिर्भवतां शराग्निः
संधुक्ष्यतां नोऽरिसमिन्धनेषु॥ २८॥

२८. तानिति ॥ अथ राघवोऽपि तान्मुनीन् प्रत्यवादीत् प्रत्युवाच॥ "वदव्रज—" इत्यादिना सिचि वृद्धिः॥ "इट ईटि" इति सलोपः॥ तदेवाह। हे तपोधनाः धर्म्यं धर्मादनपेतम्॥ "धर्मपथ्यर्थ—" इत्यादिना यत्प्रत्ययः॥ कर्म यज्ञकर्म यथेप्सितं यथेष्टं विस्रम्भादित्यर्थः। आप्नोतेः सन्नन्तात्कर्मणि क्तः॥ "आप्ज्ञप्यृधामीत्" इतीत्वे "सनि मीमा—" इत्यभ्यासलोपः॥ प्रस्तुत प्रस्तुध्वं प्रक्रमध्वमित्यर्थः। प्रपूर्वात्स्तौतेर्लोटि थस्य तादेशः। तथाहि भवतां तपोभिरेव मरुद्भिः नोऽस्माकं शराग्निरस्त्राग्निररिष्वेव समिन्धनेषु काष्ठेषु संधुक्ष्यते संदीपिष्यते। ब्रह्मक्षत्रसंमेलनस्य पवनाग्निसमागमप्रायत्वादिति भावः। धुक्ष संदीपने इति धातोः कर्मणि लट्। रूपकालंकारः॥

---

१ रघुनन्दनोऽपि T4.
२ संधुक्ष्यते D., T3, T4, T., G., Com., E3. संधुक्षते E1.

प्रतुष्टुवुः कर्म ततः प्रक्लृप्तै-
स्ते यज्ञियैर्द्रव्यगणैर्यथावत् ।
दक्षिण्यदिष्टं कृतमार्त्विजीनै-
स्तद्यातुधानैश्चिचिते प्रसर्पत् ॥ २९ ॥

२९. प्रेति ॥ ततो रामवाक्यानन्तरं ते तपोधनाः प्रक्लृप्तैः संपन्नैर्यज्ञियैर्यज्ञकर्मार्हैर्द्रव्यगणैः पशुसोमादिभिर्यथावद्यथार्हं कर्म यज्ञकर्म प्रतुष्टुवुः प्रारेभिरे । स्तौतेर्लिट् । दक्षिण्यैर्दक्षिणार्हैर्दिष्टमुपदिष्टम् ॥ "कडंकरदक्षिणाच्छ च" इति चकाराद्यत्प्रत्ययः । आर्त्विजीनैः ऋत्विक्कर्मार्हैः । "यज्ञर्त्विग्भ्यां घखञौ" इत्युभयत्र यथासंख्यं घखञौ ॥ "तत्कर्मार्हतीत्युपसंख्यानम्" । कृतमनुष्ठितं प्रसर्पत्प्रवर्तमानं तद्यज्ञकर्म यातुधानैश्चिचिते चेतितं ज्ञातम् । चिती संज्ञाने । कर्मणि लिट् ॥

आपिङ्गरूक्षोर्ध्वशिरस्यकेशैः
शिरालजङ्घैर्गिरिकूटदघ्नैः ।
ततः क्षपाटैः पृथुपिङ्गलाक्षैः
खं प्रावृषेण्यैरिव चानशेऽब्दैः ॥ ३० ॥

३०. आपिङ्गेति ॥ ततो ज्ञानानन्तरमापिङ्गाः सर्वपिङ्गलाः रूक्षाः परुषाः ऊर्ध्वाः स्तब्धाः शिरसि भवाः शिरस्याः ॥ "शरीरावयवाच्च" इति यत्प्रत्ययः ॥ ईदृशाः वालाः केशाः येषां तैः सिरालाः सिरावत्यः जङ्घाः येषां तैः गिरिकूटदघ्नैः पर्वतशिखरप्रमाणैः । प्रमाणार्थे दघ्नच्प्रत्ययः । पृथुपिङ्गलाक्षैः ॥ "बहुव्रीहौ" इति षच् ॥ क्षपास्वटैः क्षपाटैः निशाचरैः । पचाद्यजन्तेन योगविभागात्सप्तमीसमासः । प्रावृषि भवैः

---

१ गुणे T2.
२ दाक्षिण्य C., B., E2.
३ कृतमृत्विजीने T2.
४ यथातुधाने E2.
५ रुक्ष D., B., E1, E2, E3, N., C., T1, T2, T3, T4.
६ बालैः D., E3, T., G., Com.
७ सिराल T4, T., G., Com.
८ चानशेऽभ्रैः B., E3.

प्रावृषेण्यैः ॥ "प्रावृष एण्यः" इति एण्यप्रत्ययः ॥ महद्भिः श्यामैश्चेति भावः । अब्दैर्जलदैरिव ॥ "आतोऽनुपसर्गे कः" ॥ खमाकाशमानशे व्याप्तं च । चकारः पूर्वश्लोकोक्तज्ञानसमुच्चयार्थः । अश्नोतेः कर्मणि लिट् । "अत आदेः" इत्यभ्यासदीर्घः ॥ "अश्नोतेश्च" इति नुट् ॥

अधिज्यचापः स्थिरबाहुमुष्टि-
रुदञ्चिताक्षोऽञ्चितदक्षिणोरुः ।
तांल्लक्ष्मणः सन्नतवामजङ्घो
जघान शुद्धेषुरमन्दकर्षी ॥ ३१ ॥

३१. अधिज्येति ॥ अधिज्यमधिरोपितगुणं चापं येन सः स्थिरं बाहुश्च मुष्टिश्च बाहुमुष्टि यस्य सः उदञ्चिताक्षः ऊर्ध्वप्रसारितदृष्टिः अञ्चितः किञ्चित्कुञ्चितः दक्षिणोरुः यस्य सः सन्नता सम्यङ्नता वामजङ्घा यस्य सः । एतेन धन्विनां स्थानविशेष उक्तः । शुद्धाः स्वरूपतो लोहतो वा निर्दोषा इषवो यस्य सः । अमन्दकर्षी क्षिप्राकर्षी च लक्ष्मणस्तान् राक्षसान् जघान हतवान् ॥

गाधेयदिष्टं विरसं रसन्तं
रामोऽपि मायाचणमस्त्रचुञ्चुः ।
स्थास्नुं रणे स्मेरमुखो जगाद
मारीचमुच्चैर्वचनं महार्थम् ॥ ३२ ॥

३२. गाधेयेति ॥ अस्त्रैर्वित्तः प्रसिद्धोऽस्त्रचुञ्चुः ॥ "तेन वित्तश्चुञ्चुप्चणपौ" ॥ रामोऽपि स्मेरमुखः स्मितमुखः सन् । गाधेरपत्यं पुमान् गाधेयो विश्वामित्रः ॥ "द्व्यचः" ॥ "इतश्चानिञः" इति ढक् ॥ तेन दिष्टमिदन्तया पुरो निर्दिष्टं विरसं कर्णकठोरं यथा तथा रसन्तं गर्जन्तं मायाचणं मायावित्तम् ॥ "तेन—" इत्यादिना चणप् ॥ रणे स्थास्नुं

१ अधिज्यधन्वा T2, T4. अधिज्यचापस्थिरबाहुमुष्टि E3.

स्थायिनम् ॥ "ग्लाजिस्थश्च ग्स्नुः" ॥ मारीचं महार्थमर्थभूयिष्ठं वचनमुच्चैस्तारं जगाद । दुह्यादौ ब्रुवेरर्थपरत्वाद्द्विकर्मकता ॥

आत्मम्भरिस्त्वं पिशितैर्नराणां
फलेग्रहीन् हंसि वनस्पतीनाम् ।
शौवस्तिकत्वं विभवा न येषां
व्रजन्ति तेषां दयसे न कस्मात् ॥ ३३ ॥

३३. आत्मम्भरिरिति ॥ हे पापिष्ठ नराणां पिशितैर्मांसैः आत्मानं बिभर्तीत्यात्मम्भरिः कुक्षिम्भरिस्त्वं वनस्पतीनां वृक्षाणां फलानि गृह्णन्तीति फलेग्रहीन् फलग्राहिणः तन्मात्राहारानित्यर्थः । यद्यपि 'फलेग्रहिर्वृक्षः' इति काशिकायां 'स्यादवन्ध्यः फलेग्रहिः' इत्यभिधानकोशेषु च फलसंबन्धिवृक्षे रूढिः प्रतीयते तथाप्यत्र प्रौढ्या रूढ्यनादरेण योगमात्राश्रयणेन मुनिविशेषणत्वमुक्तम् ॥ "फलेग्रहिरात्मम्भरिश्च" इति ग्रहेर्भृञश्चेन्प्रत्ययः ॥ उपपदे च क्रमादेत्वं मुमागमश्च निपातितम् । हंसि हिनस्सि । हन्तेर्लटि शपो लुक् सिप् । येषां मुनीनां विभवाः सम्पदः श्वोभवाः विद्यमानाः शौवस्तिकाः ॥ "श्वसस्तुट् च" इति ठञि तुडागमः ॥ तेषां भावः शौवस्तिकत्वं न व्रजन्ति श्वो न भवितार इत्यर्थः ॥ तेषां विषयनिस्पृहाणां कस्मान्न दयसे किमिति तान्नानुकम्पस इत्यर्थः ॥ "अधीगर्थ—" इत्यादिना कर्मणि षष्ठी ॥

अद्मो द्विजान् देवयजीन्निहन्मः
कुर्मः पुरं प्रेतनराधिवासम् ।
धर्मो ह्ययं दाशरथे निजो नो
नैवाध्यकारिष्महि वेदवृत्ते ॥ ३४ ॥

३४. अथ मारीचो रामं प्रत्याह अद्म इति ॥ हे दाशरथे राम द्विजातीन् ब्राह्मणानद्मः भक्षयामः । अत्तेर्लटि मसि शपो लुक् । देवानां यजीन् यष्टॄन् । यजेरौणादिक इकारः । निहन्मो निबर्हयामः । हन्तेर्निपूर्वा-

लुटि मसि शपो लुक् ॥ "जासिनिप्रहण—" इत्यत्र संघातविगृहीतविपर्यस्तग्रहणेऽपि शेषग्रहणानुवृत्तेस्तद्विवक्षायामेव षष्ठी । इह तु तदविवक्षायां कर्मणि द्वितीया । पुरं स्वस्थानं प्रेतनराणामधिवासं कुर्मः । सर्वानस्मत्पुरं नीत्वा मारयाम इत्यर्थः । अयं परद्रोहो नोऽस्माकं निजो नित्यो धर्मो हि । 'निज आत्मीयनित्ययोः' इति विश्वः । वेदवृत्ते वेदोक्तानुष्ठाने नाध्यकारिष्महीव नाधिकृता एव । अधिपूर्वात्करोतेः कर्मणि लुङि "स्यसिच्सीयुट्—" इत्यादिना चिण्वद्भावः ॥

धर्मोऽस्ति[1] सत्यं तव राक्षसाय-
मन्यो व्यतिस्ते तु[2] ममापि धर्मः ।
ब्रह्मद्विषस्ते[3] प्रणिहन्मि येन
राजन्यवृत्तिर्धृतकार्मुकेषु[4] ॥ ३५ ॥

३५. पुनस्तं रामः प्रत्याह धर्म इति ॥ हे राक्षस अयं पूर्वोक्तो द्विजातिवधः तव सत्यं वस्तुतो धर्मोऽस्तु । किन्तु ममाप्ययमन्यो धर्मो व्यतिस्ते व्यतिभवते । व्यतिहारेण वर्तत इत्यर्थः । अस्तेर्लटि "कर्तरि कर्मव्यतिहारे" इत्यात्मनेपदे "श्नसोरल्लोपः" । व्यतिहारमेवाह । ब्रह्मद्विषस्ते तव प्रणिहन्मि ब्रह्मद्विषं त्वां हन्मीत्यर्थः ॥ "जासिनिप्रहण—" इत्यादिना कर्मणि शेषे षष्ठी ॥ अत्र रामराक्षसकर्तृकयोः परहिंसालक्षणयोः स्वधर्मयोः वध्यघातुकनिष्ठयोः स्वरूपतो भिन्नकालत्वेऽपि क्रियमाणेष्यमाणयोः समानकालत्वसंभवाद् व्यतिभवनं संभवतीत्यविरोधः । तथा च जिघांसन्नेव हन्यसे कुतो हनिष्यसीति भावः । न चायमधर्मः प्रत्युत धर्म एवेत्याह । येन कारणेन धृतकार्मुकेषु शस्त्रपाणिषु विषये । राज्ञोऽपत्यानि पुंमांसः राजन्याः क्षत्रियाः ॥ "राजश्वशुराद्यत्" ॥ 'राज्ञोऽपत्ये जातिग्रहणम्' । तेषां वृत्तिर्व्यापारः । तेषां दुष्टनिग्रहाधिकारिणामयं परमो धर्म इति भावः ॥

---

१ धर्मोऽस्तु T2, T3, T4, Com.
२ नु E.
३ धर्मद्विष D.
४ धृतकार्मुकेषु E1, E3, T., G., Com.

इत्थं प्रवादं युधि संप्रहारं
प्रचक्रतू रामनिशाविहारौ।
तृणाय मत्वा रघुनन्दनोऽथ
बाणेन रक्षः प्रधनान्निरास्थत्[1] ॥ ३६ ॥

३६. इत्थमिति ॥ इत्थमनेन प्रकारेण युधि युद्धरङ्गे रामश्च निशायां विहारो यस्येति निशाविहारो निशाचरश्च तौ प्रवादं प्रकृष्टवादमन्योन्यप्रवादरूपं संप्रहारं कलहं वाक्कलहमित्यर्थः। प्रचक्रतुः। अथ रघुनन्दनो रामः पृतनां सेनां तृणाय मत्वा तृणं मत्वा अनादृत्येत्यर्थः ॥ "मन्यकर्मण्यनादरे विभाषाप्राणिषु" इति चतुर्थी ॥ रक्षो राक्षसं प्रधानभूतं मारीचं बाणेन निरास वायव्यास्त्रेण दूरं निक्षिप्तवानित्यर्थः ॥

जग्मुः प्रसादं द्विजमानसानि[2]
द्यौर्वर्षुका पुष्पचयं बभूव।
निर्व्याजमिज्या ववृते वचश्च
भूयो[3] बभाषे मुनिना कुमारः ॥ ३७ ॥

३७. जग्मुरिति ॥ मुनीनां मानसानि प्रसादं प्रसन्नतां जग्मुः। द्यौरन्तरिक्षं पुष्पचयं वर्षुका कुसुमराशेर्वर्षित्री ॥ "लषपत—" इत्यादिना उकञ् ॥ "न लोक—" इत्यादिना षष्ठीप्रतिषेधात्कर्मणि द्वितीया ॥ बभूव। इज्या यागः ॥ "व्रजयजोर्भावे क्यप्" ॥ निर्व्याजं निरुपद्रवं यथा तथा ववृते प्रवृत्ता। मुनिना विश्वामित्रेण कुमारो रामो भूयः पुनर्वचश्च वक्ष्यमाणं बभाषे भाषितः। दुहादित्वादप्रधाने कर्मणि क्तः॥

---

१ पृतनां निरास T., G., Com. प्रधनान्निरास T2, T3, T4.

२ मुनिमानसानि T., G., Com.
३ भूयः कुमारो मुनिना बभाषे E1.

महीय्यमाना भवतातिमात्रं
सुराध्वरे घस्मरजित्वरेण।
दिवोऽपि वज्रायुधभूषणाया[1]
ह्रीणीयते[2] वीरवती न भूमिः ॥ ३८ ॥

३८. महीय्यमानेति ॥ सुराणामध्वरे यज्ञे । तदर्थं इत्यर्थः । घस्मराः सर्वभक्षकाः। 'भक्षको घस्मरोऽद्मरः' इत्यमरः॥ "सृघस्यदः क्मरच्"॥ तेषां जित्वरेण जैत्रेण॥ "इण्नशजि—" इत्यादिना करप्॥ भवता अतिमात्रं महीय्यमाना पूज्यमाना। कण्ड्वादियगन्तात्कर्मणि लटि पुनर्यकि अतो लोपे शानचि मुक्। वीरवती वीरस्वामिका च सतीत्यर्थः। प्रशंसायां मतुप्। भूमिर्वज्रायुधभूषणायाः वज्रपाणिस्वामिकाया अपीत्यर्थः। दिवः स्वर्गादपि न घृणीयते न जिह्रेति। प्रत्युत तामेव ह्रेपयतीत्यर्थः 'ह्रियां ह्रीच्छति जिह्रेति लज्जते च घृणीयते' इति भट्टमल्लः॥ घृणिङ् महिङ् इति कण्ड्वादिषु ङित्करणादवयवे कृतं लिङ्गं समुदायस्य भवतीति न्यायात्तङ्॥ "अकृत्सार्वधातुकयोर्दीर्घः"॥

बलिर्बबन्धे जलधिर्ममन्थे
जह्रेऽमृतं दैत्यबलं[3] विजिग्ये।
कल्पान्तदुःस्था वसुधा तथोहे
येनैष भारोऽति गुरुर्न तस्य ॥ ३९ ॥

३९. पुनः स्तौति बलिरिति॥ हे राम येन भवता बलिर्वैरोचनिर्बबन्धे वामनेन सता बद्धः। सर्वत्र कर्मणि लिट्। जलधिर्ममन्थे कूर्मरूपेण मथितः। बन्ध बन्धने। मन्थ विलोडने। क्र्यादिकौ॥ "असंयोगात्—"इति लिटोऽकित्वान्नानुनासिकलोपः। अमृतं जह्रे हृतम्। दैत्यबलं विजिग्ये स्त्रीमायया जितं वञ्चितमित्यर्थः॥ "सन्लिटोर्जेः" इति कुत्वम्। कल्पान्ते दुःखेन तिष्ठतीति दुःस्था॥ "आतश्चोपसर्गे" इति कर्तरि

---

१ भूषणाय D., T2.
२ घृणीयते T., G., Com.
३ दैत्यकुलं N., C., E1, E3.

कः ॥ तथा तेन प्रकारेण वसुधा भूमिर्वराहात्मना ऊहे ऊढा सागरादुद्धृतेत्यर्थः । वहेर्यजादित्वात्संप्रसारणम् । तस्य तव एष भारः मखत्राणरूपः अतिगुरुर्न । बलिबन्धाद्यपेक्षया कियानयं भार इति भावः ॥

इति[1] ब्रुवाणो मधुरं हितं[2] च
तमाजिहन्मैथिलयज्ञभूमिम् ।
रामं मुनिः प्रीतमतिर्मखान्ते[3]
यशांसि राज्ञां निजिघृक्षयिष्यन् ॥ ४० ॥

४०. इत्यमिति ॥ इत्थं मधुरं प्रियं हितं श्रेयस्करं च ब्रुवाणो मुनिः मखान्ते प्रीतमतिः सन् तुष्टमनाः सन् राज्ञां यशांसि निजिघृक्षयिष्यन् निग्रहीतुमेषयिष्यन् । रामस्य धनुर्भङ्गेन राजयशःसंजिहीर्षामुत्पादयिष्यन्नित्यर्थः । ग्रहेः सनि ण्यन्तात् "लृटः सद्वा" इति सत्रादेशः ॥ "रुदविद—" इत्यादिना सनः कित्वात् "ग्रहिज्यावयि—" इत्यादिना संप्रसारणे भष्भावादि । तं रामं मिथिलाया राजा मैथिलो जनकः ॥ 'तस्य राजन्यपत्यवत्' इत्यतिदेशादण्प्रत्ययः । तस्य यज्ञभूमिमाजिहत् आजीगमत् । अहि गतौ इति धातोरिदित्वान्नुमि णौ चङि "द्विर्वचनेऽचि" इति णिलोपस्य स्थानिवद्भावात् "अजादेर्द्वितीयस्य" इति "नन्द्राः—" इति निषेधान्नकारवर्जितस्य हिशब्दस्य द्विर्भावे अभ्यासकार्ये आङ्वृद्धिः ॥ "गतिबुद्धि—" इत्यादिना अणि कर्तुः कर्मत्वम् ॥

ईतः[4] स्म मित्रावरुणौ किमेतौ
किमश्विनौ सोमरसं पिपासू ।
जनं समस्तं जनकाश्रमस्थं
रूपेण तावौजिहतां नृसिंहौ ॥ ४१ ॥

---

१ इत्थं $T_3$, T., G., Com.
२ प्रियं T., G.
३ प्रीतमुखो C.
प्रीतमना C., N., $E_1$, B.

४ एतौ स्म $E_1$, D.
इतः सुमि° $E_2$.
इति स्म $T_2$, $T_4$.
एतौ सु° $T_3$.

४१. इत इति ॥ सोमरसं पातुमिच्छु पिपासू । पिबतेः सन्नन्तादुप्रत्ययः ॥ "न लोक—" इत्यादिना षष्ठीप्रतिषेधात् द्वितीया । मित्रश्च वरुणश्च मित्रावरुणौ ॥ "देवताद्वन्द्वे च" इत्यानङादेशः ॥ इतः स्म किं प्राप्तुतः स्म किम् । इणः कर्त्तरि "लट् स्मे" इति भूते लटि तस् । अश्विनावेतावागतौ किम् । आङ्पूर्वादिणः कर्तरि क्तः । इतीति शेषः । इति तौ नरौ सिंहाविव नृसिंहौ पुरुषश्रेष्ठौ । उपमितसमासः । रूपेण सौन्दर्येण । "रूपं स्वभावे सौन्दर्ये" इति विश्वः । जनकाश्रमे तिष्ठतीति तत्स्थम् ॥ "सुपि स्थः" इति कः । समस्तं जनमौजिहतां समस्तजनेन इत्यूहमकारयतामित्यर्थः । ऊह वितर्के । णौ चङि तसस्तामादेशः । णिलोपस्य स्थानिवद्भावात् "अजादेर्द्वितीयस्य" इति हिशब्दस्य द्विर्भावः । चुत्वम् । किं मित्रावरुणावश्विनौ वेति शुद्धसंदेहात् संदेहभेदोऽलंकारः ॥

अजिग्रहत्तं जनको धनुस्तद्
येनार्दिदद् दैत्यपुरं[१] पिनाकी ।
जिज्ञासमानो बलमस्य बाह्वो-
र्हसन्नभाङ्क्षीद्रघुनन्दनस्तत् ॥ ४२ ॥

४२. अजिग्रहदिति ॥ जनकोऽस्य रामस्य बाह्वोर्बलं जिज्ञासमानो ज्ञातुमिच्छन् । जानातेः सन्नन्तात् "ज्ञाश्रुस्मृदृशां सनः" इत्यात्मनेपदे लटः शानजादेशः । रामं तद्धनुरजिग्रहत् ग्राहयामास । द्विदण्ड्यादिषु ग्राहिमोदीत्यादिज्ञिप्रभृतय इति वचनात् ग्रहेर्द्विकर्मकत्वम् । ग्रहेर्णौ चङ्युपधाह्रस्वः । आदेः सन्वत्कार्यं च । येन धनुषा पिनाकी महादेवः दैत्यानां पुरो दैत्यपुरः । तिस्रोऽपीत्यर्थः । समासान्तविधेरनित्यत्वात् "ऋक्पूर्—" इति नाकारप्रत्ययः । दैत्यपुरमिति पाठे समासान्तः । एकवचनमतन्त्रम् । दैत्यपुराणीत्यर्थः । 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते' इति नपुंसकनिर्देशः । आर्दिदत्

१ दैत्यपुरः T., G., E1, Com. | दैत्यपुरीं T2.

अर्दयामास संजहारेत्यर्थः । अर्देर्हिंसार्थात् चौरादिकाण्णौ चङि रेफवर्जितद्विर्भावादि । रघुनन्दनो रामः हसन् तत् धनुरभाङ्क्षीत् बभञ्ज। भञ्जेर्लुङि सिचि हलन्तलक्षणा वृद्धिः ॥ "अस्तिसिचोऽपृक्ते" इति ईटि कुत्वषत्वे ॥

ततो नदीष्णान्पथिकान् गिरिज्ञा-
नाह्वायकान्भूमिपतेरयोध्याम् ।
दित्सुः सुतां योधहरैस्तुरङ्गै-
र्व्यसर्जयन्मैथिलमर्त्यमुख्यः ॥ ४३ ॥

४३. तत इति ॥ ततो धनुर्भङ्गानन्तरं सुतां सीतां दित्सुः रामाय दातुमिच्छुः । ददातेः सन्नन्तादुप्रत्ययः । मैथिलो जनकः स एव मर्त्यमुख्यो नरेन्द्रः नद्यां स्नान्तीति नदीष्णान् नदीतरणे कुशलानित्यर्थः ॥ "सुपि स्थः" इत्यत्र सुपीति योगविभागात्कः । "निनदीभ्यां स्नातेःकौशले" इति षत्वम् । पथिषु नाना मार्गेषु कुशलान्पथिकान् ॥ "तत्र कुशलः पथः" इति ठक् ॥ "इगुपधज्ञा—" इति कप्रत्ययः । गिरि वाचि ज्ञान् वचनकुशलान् इति च गम्यते । एतावता संदर्भेण अविलम्बगामित्वमुक्तम् । भूमिपतेर्दशरथस्य आह्वायकान् आह्वातॄन् । ह्वयतेर्ण्वुलि युगागमः । योधान् हरन्तीति योधहरैः योधवद्योग्यवयस्कैरित्यर्थः॥ "वयसि च" इत्यच्प्रत्ययः॥ तुरङ्गैः साधनैरयोध्यां प्रति तामुद्दिश्येत्यर्थः । अत एव गम्यमानोद्देशक्रियां प्रति कर्मत्वम् । यथाहुः 'न केवलं श्रूयमाणैव क्रिया निमित्तं कारकभावस्य किन्तु गम्यमानापि' इति । व्यसर्जयत् प्रेषितवान् । सृजेश्चौरादिकाल्लङ् ॥

क्षिप्रं ततोऽध्वन्यतुरङ्गयायी
यविष्ठवद्वृद्धतमोऽपि राजा ।
आख्यायकेभ्यः श्रुतसूनुवृत्ति-
रग्लानयानो मिथिलामगच्छत् ॥ ४४ ॥

१ आख्यायिकेभ्यः C., T₃. प्राख्यायकेभ्यः E₁.

२ वृद्धि D.

३ रम्लान E₁, T., G, Com.

४४. क्षिप्रमिति ॥ ततो वार्त्ताहरप्राप्त्यनन्तरमाख्यायकेभ्यः आख्यातृभ्यः वार्त्ताहारिभ्य इत्यर्थः। ख्यातेर्ण्वुलि युक्। श्रुता सूनोः रामस्य वृत्तिः धनुर्भङ्गादिव्यापारो येन सः। अध्वानमलंगामिनः अध्वन्याः शीघ्रगा इत्यर्थः॥ "अध्वनो यत्खौ" इति यत्प्रत्ययः॥ "ये चाभावकर्मणोः" इति प्रकृतिभावान्न टिलोपः। तैः तुरङ्गैर्यातीति तुरङ्गयायी॥ "सुप्यजातौ—" इत्यादिना णिनिः॥ राजा दशरथः वृद्धतमोऽपि वृद्धः सन्नपि यविष्ठवद्युवतमवत्॥ "तेन तुल्यम्—" इत्यादिना वतिप्रत्ययः॥ युवशब्दादिष्ठनि "स्थूलदूरयुव—" इत्यादिना यणादि परलोपः पूर्वगुणश्च॥ म्लानं म्लानिः। भावे निष्ठा। अम्लानं श्रमरहितं यानं वाहनमश्वादिकं यस्य स सन्। मिथिलां जनकपुरीं क्षिप्रमगच्छत्। गमेर्लङ्॥ "इषुगमियमां छः"॥

वृन्दिष्ठमार्चीद्वसुधाधिपानां
तं प्रेष्ठमेतं गुरुवद्गरिष्ठम्।
सदृङ् महान्तं सुकृताधिवासं
बंहिष्ठकीर्त्तिर्यशसा वरिष्ठम्॥ ४५॥

४५. वृन्दिष्ठमिति ॥ सदृक् समानोऽनुरूप इत्यर्थः। 'समानान्ययोश्च' इत्युपसङ्ख्यानात्समानशब्दोपपदाद् दृशेः क्विप् प्रत्ययः॥ "दृग्दृशवतुषु" इति समानशब्दस्य सभावः॥ इह कर्त्तुर्दर्शनक्रियानन्वयाद्यथा कथंचित्तैलपायिकादिवद्रूढिशब्द इत्याहुः। अथवा समान इव दृश्यते स्वयमेवेति कर्मकर्त्तरि व्युत्पत्त्या निर्वाहः। तदा भाष्यम्। 'कर्मदर्शनकर्त्ता यान्तमिव पश्यन्ति जनाः सोऽयं स इव दृश्यमानस्तमिवात्मानं पश्यन्ति' इति। बंहिष्ठकीर्त्तिर्बहुलतरकीर्त्तिः स जनकः वसुधाधिपानां राज्ञां मध्ये वृन्दिष्ठं वृन्दारकतमं श्रेष्ठमित्यर्थः। 'वृन्दारकः सुरश्रेष्ठे मनोज्ञे पुनरन्यवत्' इति विश्वः। प्रेष्ठं प्रियतमं गुरुवद्गरिष्ठं गुरुतमं पूज्यतममित्यर्थः। महान्तं प्रभुं सुकृताधिवासं धर्मनिलयम्। वसेरधि-

१ सुदृक् E₃.

करमेघञ्प्रत्ययः। यशसा वरिष्ठमुरुतममधिकमित्यर्थः। एतमागतम्। आङ्पूर्वादिणः कर्त्तरि क्तः। तं दशरथमार्चीदर्चितवान्। अर्चतेर्भौवादिकाल्लुङि "इट ईटि" इति सलोपः। वृन्दिष्ठादौ वृन्दारकादिभ्य इष्ठनि "प्रियस्थिर—" इत्यादिना वृन्दाद्यादेशः॥

त्रिवर्गपारीणमसौ भवन्त–
मध्यासयन्नासनमेकमिन्द्रः।
विवेकदृश्वत्वमगात्सुराणां
तं मैथिलो वाक्यमिदं बभाषे ॥ ४६ ॥

४६. त्रिवर्गेति॥ मैथिलो जनकः तं दशरथमिदं वाक्यं बभाषे। ब्रुवीत्यर्थग्रहणात् द्विकर्मकत्वम्। किं तद्वाक्यं तदाह। हे राजन्! असाविन्द्रः त्रयाणां धर्मादीनां वर्गः त्रिवर्गः। 'त्रिवर्गो धर्मकामार्थौ' इत्यमरः। तस्य पारीणं पारगामिनं परिपूर्णमित्यर्थः। "अवारपार—" इत्यादिना खप्रत्ययः। भवन्तमेकमासनमध्यासयन् अधितिष्ठापयन् अर्धासनमधिगम्येत्यर्थः॥ "अधिशीङ्स्थासां कर्म" इत्यधिकरणस्य कर्मत्वम्॥ "गतिबुद्धि—" इत्यादिना अणि कर्त्तुः कर्मत्वम्॥ सुराणां मध्ये विवेकदृश्वत्वं विवेकदर्शित्वम्। "दृशेः क्वनिप्"॥ अगात् प्रापत्॥ "इणो गा लुङि"॥ "गातिस्था—" इत्यादिना सिचो लुक्॥ मान्यमाननाद्विवेकिता भवेदन्यथा मूढता स्यादिति भावः॥

हिरण्मयी शाल्लतेव जङ्गमा
च्युता दिवः स्थास्नुरिवाचिरप्रभा।
शशाङ्ककान्तेरधिदेवताकृतिः
सुता ददे तस्य सुताय मैथिली ॥ ४७ ॥

४७. हिरण्मयीति॥ हिरण्यस्य विकारो हिरण्मयी॥ "दाण्डिनायन—" इत्यादिना निपातनात्साधुः। जङ्गम्यते इति जङ्गमा चरिष्णुः। गमेर्यङि नुगागमे पचाद्यचि "यङोऽचि च" इति यङो लुक्। साललता वृक्ष-

१ साल T2, N.

शाखेवेत्युत्प्रेक्षा । दिवश्च्युता स्थास्नुः स्थिरा ॥ "ग्लाजिस्थश्च ग्स्नुः" ॥ अचिरप्रभा विद्युल्लतेवेत्युत्प्रेक्षा । शशाङ्ककान्तेश्चन्द्रिकाया अधिदेवता तस्या आकृतिरिवाकृतिः स्वरूपं यस्याः सा इत्युपमा । सुता दुहिता मैथिली तस्य दशरथस्य सुताय रामाय ददे दत्ता । कर्मणि लिट् । उपलक्षणमेतत् । लक्ष्मणादिभ्योऽप्यूर्मिलादयो दत्ता इत्यनुसंधेयम् ॥

लब्धां ततो विश्वजनीनवृत्ति-
स्तमात्मनीनामुदवोढ रामः ।
सद्रत्नमुक्ताफलभर्मशोभां[1]
संबंहयन्तीं[2] रघुवर्ग्यलक्ष्मीम्[3] ॥ ४८ ॥

४८. लब्धामिति ॥ ततो दानानन्तरं विश्वस्मै जनाय हिता विश्वजनीना वृत्तिर्यस्य स रामः आत्मने हितामात्मनीनाम् ॥ "आत्मन्विश्वजनभोगोत्तरपदात्खः" ॥ शोभनानां रत्नानां पद्मरागादीनां मुक्तफलानां भर्मणः सुवर्णस्य भूषाः भूषणानि यस्यास्ताम् । 'गाङ्गेयं भर्म कर्बुरम्' इति सुवर्णपर्यायेष्वमरः । रघुवर्गे भवां रघुवर्ग्याम् । वर्गान्तात् "अशब्दे यत्खावन्यतरस्याम्" इति यत्प्रत्ययः । लक्ष्मीं शोभां संबंहयन्तीं सम्यग्बहुलीकुर्वतीम् । संपूर्वाद्बहुलशब्दात् । "तत्करोति—" इत्यादिना ण्यन्ताल्लटः शतरि ङीप् । णाविष्ठवद्भावात् "प्रियस्थिर—" इत्यादिना बहुलशब्दस्य बंह्यादेशः । तां सीतामुदवोढ ऊढवान् । उद्वाहो विवाहः । वहेर्लुङि तङि "सहिवहोरोदवर्णस्य" इत्योत्वे ढत्वादिकार्यम् ॥

सुप्रातमासादितसंमदं[4] तद्
वन्दारुभिः संस्तुतमभ्ययोध्यम् ।
अश्वीय[5]राजन्यकहस्तिकाढ्य-
मगात् सराजं बलमध्वनीनम् ॥ ४९ ॥

---

१ समुद्र T2.
२ भूषां C., Com, G., T., B., E2.
३ वंश B., E2.
वंश्य c., C.
४ प्राग् T3, T., G., Com.
५ आश्वीय D., T., G., Com.

४९. सुप्रातमिति ॥ शोभनं प्रातरस्य सुप्रातं सुप्रभातम् ॥ "सुप्रात-सुश्व—" इत्यादिना बहुव्रीहौ निपातनादच् समासान्तष्टिलोपश्च ॥ आसादितसंमर्दं प्राप्तहर्षम् ॥ "प्रमदसंमदौ हर्षे" इति निपातितः । प्राक् पुरतः वन्दारुभिः बन्दिभिः संस्तुतम् ॥ "शॄवन्द्योरारुः" ॥ अश्वानां समूहः आश्वीयम् ॥ "केशाश्वाभ्यां यञ्छावन्यतरस्याम्" इति छप्रत्ययः ॥ राजन्यकम् ॥ "गोत्रोक्ष—" इत्यादिना वुञ्प्रत्ययः ॥ हस्तिनां समूहो हास्तिकम् ॥ "अचित्तहस्तिधेनोष्ठक्" इति ठक् ॥ तेषां सेनाङ्गत्वात् द्वन्द्वैकवद्भावः । तेनाढ्यं संपन्नम् । अध्वानमलंगाम्यध्वनीनम् ॥ "अध्वनो यत्खौ" इति खप्रत्ययः ॥ "आत्माध्वानौ खे" इति प्रकृतिभावः । तद्बलं सैन्यं सह राज्ञा सराजम् । यौगपद्येऽव्ययीभावः ॥ "अनश्च" इति समासान्तष्टच् ॥ "नस्तद्धिते" इति टिलोपः ॥ अभ्ययोध्यमयोध्यामभि ॥ "लक्षणेनाभिप्रती आभिमुख्ये" इत्यव्ययीभावः ॥ अगात् अगमत् ॥

विशङ्कटो[1] वक्षसि बाणपाणिः
सम्पन्नतालद्वयसः पुरस्तात् ।
भीष्मो धनुष्मानुपजान्वरत्नि-
रैति[2] स्म रामं[3] पथि जामदग्न्यः ॥ ५० ॥

५०. विशङ्कट इति ॥ विशङ्कटे विशाले ॥ "वेः शालच्छङ्कटचौ" इति शङ्कटच्प्रत्ययः ॥ वक्षसि बाणः पाणौ यस्य वक्षोनिहितबाणयुक्तपाणिरित्यर्थः ॥ "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ" इति पाणिशब्दस्य परनिपातः ॥ संपन्नोऽखण्डस्तालः तालवृक्षः स प्रमाणमस्य सः संपन्नतालद्वयसः । महातालप्रांशुरित्यर्थः ॥ "प्रमाणे—" इत्यादिना द्वयसच् प्रत्ययः ॥ बिभ्यत्यस्मादिति भीष्मः भयङ्करः ॥ "भियःषुग्वा"

१ विसङ्कटे वक्षसि E1.
विसङ्कटो E2.
विशङ्कटे वक्षसि T2, T., G., Com.

२ एति स्म G., T., Com.
३ रामः T3, T4.

इत्यौणादिको मक्प्रत्ययः ॥ "भीमादयोऽपादाने" इत्यपादानार्थे साधुः ॥ धनुष्मान्धन्वी । संसर्गे प्रशंसायां मतुप् । जानुनोः समीपमुपजानु । समीपार्थेऽव्ययीभावः तत्रारत्निर्लक्षणया बाहुर्यस्य सः आजानुबाहुरित्यर्थः । जमदग्नेरपत्यं पुमान् जामदग्न्यः परशुरामः । गर्गादिपाठादपत्येऽपि गोत्रत्वारोपात् यञ् । साक्षादपत्यत्वविवक्षायां त्वृष्यणि जामदग्नो भवति । पथि मार्गे पुरस्तात् पुरोऽग्रे ॥ "अस्ताति च" इति पूर्वशब्दात्सप्तम्यर्थादस्तातिप्रत्ययः पूर्वस्य पुरादेशश्च ॥ एति स्म इतवान् प्राप्त इत्यर्थः ॥ "लट् स्मे" इति इणो भूते लट् ॥

उच्चैरसौ राघवमाह्वतेदं[1]
धनुः सबाणं कुरु मातियासीः ।
पराक्रमज्ञः प्रियसंततिस्तं
नम्रः क्षितीन्द्रोऽनुनिनीषुरूचे ॥ ५१ ॥

५१. उच्चैरिति ॥ असौ जामदग्न्यो राघवं रामं एवं वक्ष्यमाणप्रकारेण उच्चैस्तारमाह्वत सस्पर्धमाहूतवान् । ह्वेञो लुङि "स्पर्धायामाङः" इति तङ् ॥ "आत्मनेपदेष्वन्यतरस्याम्" इति च्लेरङादेशः ॥ "आतो लोप इटि च" इत्याकारलोपः । तं प्रकारमेवाह । धनुश्चापं सबाणं कुरु मया सह युध्यस्वेत्यर्थः । मातियासीः अतिक्रम्य मागा इत्यर्थः । यातेः "माङि लुङ्" ॥ "न माङ्योगे" ॥ "यमरमनमातां सक् च" इति सगिटौ ॥ "इट ईटि" इति सलोपः । पराक्रमं जामदग्न्यसामर्थ्यं जानातीति तज्ज्ञः॥"आतोऽनुपसर्गे कः"॥ प्रिया संततिर्यस्य सोऽपत्यवत्सलः क्षितीन्द्रो दशरथः तं जामदग्न्यं नम्रः प्रणतः अनुनिनीषुः अनुनेतुमिच्छुः । नयतेः सन्नन्तादुप्रत्ययः । ऊचे उवाच । ब्रुवः कर्तरि लिट् । वचिरादेशः ॥

---

१ माह्वतेनं T₄. | माह्वतेवं T₃, T., G., Com.

अनेकशो निर्जितराजकस्त्वं
पितॄनतार्प्सीर्नृपरक्ततोयैः।
संक्षिप्य संरम्भमसद्विपक्षं
कास्थार्भकेऽस्मिंस्तव राम रामे ॥ ५२ ॥

५२. अनेकश इति ॥ हे जामदग्न्य! त्वमेकैकवारमेकशः ॥ "संख्यैकवचनाच्च वीप्सायाम्" इति शस्प्रत्ययः ॥ ततो नञ्समासे अनेकशो बहुवारमित्यर्थः। निर्जितानि राजकानि राजसमूहाः येन स सन् ॥ "गोत्रोक्ष—" इत्यादिना वुञ् ॥ नृपरक्तैरेव तोयैः पितॄनतार्प्सीः तर्पितवानसि। तृप प्रीणने इति धातोर्लुङि "स्पृशमृशकृषतृपदृपां सिज्वा वक्तव्यः" इति विकल्पात्सिचि "अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्" इति अमभावपक्षे रूपमित्युक्तं प्राक्। तस्मादसद्विपक्षमविद्यमानप्रतिपक्षं निर्विषयमिति यावत्। संरम्भं कोपम्। 'संरम्भः संभ्रमे कोपे' इति विश्वः। संक्षिप्य संहर। क्षिपेर्दैवादिकाल्लोटि सिपि "अतो हेः" इति हिलोपः। अर्भके डिम्भे। 'पोतः पाकोऽर्भको डिम्भः' इत्यमरः। "अर्भकपृथुकपाका वयसि" इत्यौणादिको निपातः। अस्मिन् रामे मत्पुत्रे तव का आस्था कोऽभिनिवेशः। नायं बालस्ते कोपस्य लक्ष्यमित्यर्थः ॥

अजीगणद् दाशरथं न वाक्यं
यदा स[3] दर्पेण तदा कुमारः।
धनुर्व्यकार्क्षीर्द्[4] गुरुबाणगर्भं
लोकानलावीद्विजितांश्च तस्य ॥ ५३ ॥

५३. अजीगणदिति ॥ यदा स जामदग्न्यो दर्पेण दशरथस्येदं दाशरथं वाक्यं नाजीगणत् न गणितवान्। गण संख्याने इति धातोः स्वार्थण्यन्ताल्लुङि "ई च गणः" इत्यभ्यासस्य वैभाषिक ईकारः। तदास्मिन्

१ विपक्षे E₃, c.
२ नाम T₂.
३ स्वदर्पेण D., T₄.
४ व्यकार्क्षीद्गुरु T., G., Com.

काले कुमारो रामः उरुर्बाणो गर्भे यस्य तद् धनुर्जामदग्न्यचापं व्यकार्क्षीत् विकृष्टवान् चकर्षेत्यर्थः। पूर्ववत् "स्पृशमृशकृषतृप—" इत्यादिना पक्षे सिच्यमभावे रूपम्। हलन्तलक्षणा वृद्धिः॥ "षढोः कः सि" इति कत्वम्। शेषं पूर्ववत्। विजितान् तपोजितान् तस्य जामदग्न्यस्य लोकान् पुण्यलोकानलावीत्। निस्पृहस्य तस्य अनुज्ञयैव चिच्छेद चेत्यर्थः। रामबाणस्यामोघवर्त्तित्वादिति भावः॥

जिते नृपारौ[१] सुमनीभवन्ति
शब्दायमानान्यशनैरशङ्कम्।
वृद्धस्य राज्ञोऽनुमते[२] बलानि
जगाहिरेऽनेकमुखानि[३] मार्गान्॥ ५४॥

५४. जित इति॥ नृपारौ क्षत्रियान्तके जामदग्न्ये जिते सति असुमनांसि सुमनांसि संपद्यमानानि भवन्ति सुमनीभवन्ति॥ "अरुर्मनश्चक्षुः—" इत्यादिना च्वौ अन्त्यस्य लोपे "अस्य च्वौ" इतीकारः ततो लटः शत्रादेशे नपुंसके जसि नुमागमश्च॥ अत एवाशनैरमन्दमशङ्कं निःशङ्कं शब्दायमानानि शब्दं कुर्वाणानि क्ष्वेडमानानीत्यर्थः॥ "शब्दवैर—" इत्यादिना क्यङन्ताल्लटः शानजादेशः॥ बलानि सैन्यानि वृद्धस्य राज्ञो दशरथस्य अनुमतेरनुज्ञानात् अनेकमुखानि बहुमुखानि सन्ति मार्गान् नानापथान् जगाहिरे प्रविविशुः॥

अथ पुरुंजवयोगान्नेदयद्[४] दूरसंस्थं
दवयदतिरयेण प्राप्तमुर्वीविभागम्।
क्रमरहितमचेतन्नीरजीकारितक्ष्मां
बलमुपहितशोभां[५] तूर्णमायादयोध्याम्॥ ५५॥

---

१ नृपाले T₃.
२ नुमतेर्ब T., G., Com.
३ मुखांश D.
४ पुरजव D., T₃. गुरुजव E₁.
५ बलमभिहित T₃.

५५. अथेति ॥ अथ नानापथगमनानन्तरं पुरुर्महान् । पूर्यतेः पृणातेर्वा औणादिककुप्रत्ययः । तादृग्जवयोगात् । दूरे संस्था संस्थितिर्यस्य दूरसंस्थं वस्तु ॥ "आतश्चोपसर्गे" इत्यङ् ॥ प्रत्ययान्तोत्तरपदबहुव्रीहिः । नेदयत् अन्तिकस्थं कुर्वत् । अन्तिकशब्दात् "तत्करोति" इति ण्यन्ताल्लटः शत्रादेशः । णाविष्ठवद्भावात् ॥ "अन्तिकबाढयोर्नेदसाधौ" इति नेदादेशः ॥ तथा प्राप्तमासन्नमुर्वीविभागमतिरयेण दवयत् दूरीकुर्वत् । दूरशब्दात् "तत्करोति" इति ण्यन्ताल्लटः शत्रादेशः । णाविष्ठवद्भावात् "स्थूलदूर—" इत्यादिना यणादिपरलोपः पूर्वगुणश्च । क्रमरहितमक्रममखेदमचेतत् इयद्दूरं गतमित्यजानत् । चिती संज्ञाने इति धातोर्लटः शत्रादेशः । बलं सैन्यम् । अनीरजा नीरजा संपद्यमाना कारिता नीरजीकृता । सुमनीवत्प्रक्रिया । तादृशी क्ष्मा भूर्यस्यास्तामुपहितशोभां ध्वजपताकादिभिराहितश्रीकामयोध्यां तूर्णं त्वरितम् ॥ "रुष्यमत्वरसंघुषास्वनाम्" इति विकल्पादनिट्पक्षे "ज्वरत्वर—" इत्यादिना वकारोपधयोरूट् ॥ "रदाभ्याम्" इति निष्ठानत्वम् ॥ णत्वम् । आयात् प्राप्तं यातमित्यर्थः । यातेर्लङ् ॥

इति भट्टिकाव्ये प्रकीर्णकाण्डे सीतापरिणयो नाम द्वितीयः सर्गः ।

इति श्रीपदवाक्यप्रमाणपारावारपारीणमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते भट्टिकाव्यव्याख्याने सर्वपथीनाख्याने द्वितीयः सर्गः ॥

---

१ C omits सीतापरिणयो नाम.

॥ श्रीः ॥

# अथ तृतीयः सर्गः

वधेन सङ्ख्ये पिशिताशनानां
क्षत्रान्तकस्याभिभवेन चैव ।
आढ्यंभविष्णुर्यशसा कुमारः
प्रियंभविष्णुर्न स यस्य नासीत् ॥ १ ॥

१. वधेनेति ॥ सङ्ख्ये युद्धे पिशिताशनानां कौशिकमखध्वंसिनां क्रव्यादां वधेन क्षत्रान्तकस्य जामदग्न्यस्य अभिभवेन च। एवकारः पादपूरणे । उभयत्र कृद्योगे कर्मणि षष्ठी । यशसा अनाढ्य आढ्यो भवतीत्याढ्यंभविष्णुः रक्षोवधजामदग्न्यविजयसंजातकीर्तिसंपन्न इत्यर्थः ॥ "आढ्यसुभग—" इत्यादीनामनुवृत्तौ " कर्तरि भुवः खिष्णुच्खुकञौ" इति खिष्णुच् प्रत्ययः । एवंभूतः कुमारो रामः यस्य । अप्रियः प्रियो भवतीति प्रियंभविष्णुः । पूर्ववत्प्रक्रिया । सोऽप्रियरामो जनो नासीत् । रामस्य सर्वप्रियंकरत्वादिति भावः । एतेनास्य यौवराज्याभिषेकहेतुर्जनानुराग उक्तः ॥

ततः सुचेतीकृतपौरभृत्यो
राज्येऽभिषेक्ष्ये सुतमित्यनीचैः ।
आघोषयन्भूमिपतिः समस्तं
भूयोऽपि लोकं सुमनीचकार ॥ २ ॥

२. तत इति ॥ ततो जनानुरागानन्तरम् । सुचेतीकृताः सम्यक्पालनेनानुरक्तचित्तीकृताः पौराः पौरजनाः भृत्याश्च येन सः भूमिपतिर्दशरथः सुतं रामं राज्येऽभिषेक्ष्ये अभिषेक्ष्यामि । सिचः कर्त्तरि लृट् तङ् । अनीचैरुच्चैः प्रकाशमाघोषयन् भूयोऽपि पुनरपि समस्तं लोकं

---

१ भूमिपतिस्तदानीं C.

सुमनीचकार संतुष्टचित्तं चकार ॥ "अरुर्मनश्चक्षुः—" इत्यादिना सुचेती सुमनी साधुः ॥ रामाभिषेकवार्त्ता सर्वलोकानन्दकरी जातेत्यर्थः ॥

आदिक्षदादीप्तकृशानुकल्पं
सिंहासनं तस्य सपादपीठम्।
सन्तप्तचामीकरवल्गुवज्रं
विभागविन्यस्तमहार्घरत्नम् ॥ ३ ॥

३. आदिक्षदिति ॥ तस्य रामस्य आदीप्तकृशानुकल्पं सौवर्णत्वात्प्रज्वलिताग्निसवर्णम्। ईषदसमाप्तौ कल्पप्। किं च संतप्तं यच्चामीकरं सुवर्णं तद्वद्वल्गूनि वज्राणि यस्य तत्। विभागेषु तत्तत्प्रदेशेषु विन्यस्तानि महार्घाणि महापूज्यानि रत्नानि पद्मरागादीनि यस्मिन् तत्। सपादपीठं पादपीठसहितं सिंहासनमादिक्षत् सज्जीक्रियतामित्यादिष्टवान्। दिशेर्लुङि "शल इगुपधादनिटः क्सः" ॥

प्रास्थापयत्पूगकृतान् स्वपोषं
पुष्टान्प्रयत्नाद् दृढगात्रबन्धान्।
सभर्मकुम्भान्पुरुषान् समन्तात्
पत्काषिणस्तीर्थजलार्थमाशु ॥ ४ ॥

४. प्रास्थापयदिति ॥ अपूगाः पूगाः कृतान् सङ्घीकृतान्। श्रेण्यादिषु च्व्यर्थवचनात् "श्रेण्यादयः कृतादिभिः" इति च्व्यर्थसमासः। स्वेन धनेन पुष्टान् स्वपोषं पुष्टान्। "स्वे पुषः" इति णमुल् ॥ "अमैवाव्ययेन" इति समासः। कषादिषु यथाविध्यनुप्रयोगः। दृढगात्रबन्धान् दृढगात्रसंधीन् भारवहने योग्यानित्यर्थः। सहेमकुम्भान् सुवर्णकलशयुक्तान् ॥ "तेन सह—" इति बहुव्रीहिः ॥ "वोपसर्जनस्य" इति सहस्य सभावः ॥ पादौ कषन्तीति पत्काषिणः ॥ "सुप्यजातौ—"

१ वर्णे D., वर्णवज्रं T2, वर्णवस्रं E1.
२ महार्हं C., महार्घ्य B.
३ स्व B., C.
४ हेम D., T2, T3, T., G., Com.

इति ताच्छील्ये णिनिः॥ "हिमकाषिहतिषु च" इति पादशब्दस्य पदादेशः। पुरुषान् तीर्थजलार्थं तदानयनार्थमित्यर्थः। समन्तादाशु प्रयत्नादुत्साहात् प्रास्थापयत् प्रस्थापितवान्। तिष्ठतेर्ण्यन्ताल्लुङ्॥ "अर्त्तिह्री—" इत्यादिना पुगागमः॥

उक्षांप्रचक्रुर्नगरस्य मार्गान्।
ध्वजान्बबन्धुर्मुमुचुः खधूपान्।
दिशश्च पुष्पैश्चकरुर्विचित्रै-
रर्थेषु राज्ञा निपुणा नियुक्ताः॥ ५॥

५. उक्षामिति॥ अर्थेषु कर्त्तव्यार्थेषु निपुणाः दक्षाः राज्ञा नियुक्ताः अधिकृताः पुरुषाः नगरस्य मार्गान् उक्षांप्रचक्रुः धूलिप्रशमनार्थं निषिषिचुः। उक्ष सेचने लिट्॥ "इजादेश्च गुरुमतोऽनृच्छः" इत्याम्प्रत्यये कृञोऽनुप्रयोगः॥ "कृञ्चानुप्रयुज्यते लिटि" इत्यत्र अनुग्रहणस्य व्यवहितविपर्ययनिषेधार्थत्वात् व्यवहितप्रयोगस्यासाधुत्वेऽपि उक्षांचक्रुरित्यत्र अनुप्रयोगवदुपसर्गाणामपि "ते प्राग्धातोः" इति व्यवहितविपर्यस्तपूर्वप्रयोगनियमाद् धात्वर्थाभिव्यञ्जकत्वादिना धात्वक्षरप्रायत्वाच्च प्रोपसर्गस्य न व्यवधायकत्वमिति नासाधुत्वम्। "तं पातयां प्रथममास" "प्रभ्रंशयां यो नहुषं चकार" इत्यादावुपसर्गेतरस्य व्यवधानादसाधुत्वमेव। यत्तु पदमञ्जर्यामुभयमप्यसाधुत्वेनोदाहृतं तदनास्थेयमित्यवगन्तव्यम्। यत्तु जयमङ्गलाकारेण व्यवधानभयात् "गुरोश्च हलः" इत्यकारप्रत्यये ततो मत्वर्थीयाकारे च 'उक्षान् उक्षावतः सेकवतः' इति शसन्तं पाठं परिकल्प्य व्याख्यातं तदतिप्रसिद्धपाठत्यागादत्यन्ताप्रसिद्धपाठकल्पनाच्च साहसमेवेत्युपेक्ष्यमेवेत्यलं प्रसक्तानुप्रसक्त्या। ध्वजान् बबन्धुः उदनीनमन्नित्यर्थः। खं व्यापिनो धूपान् खधूपान्मुमुचुः प्रसारयामासुरित्यर्थः। दिशश्चविचित्रैर्नानाविधैः पुष्पैः चकरुः दिक्षु पुष्पाणि विचिक्षिपुरित्यर्थः। सर्वशक्तियो-

१ उक्षान् N., D., E3.
२ मुमुचुश्च धूपान् E1.
३ निपुणाः प्रयुक्ताः E1.

गित्वात् वैवक्षिकी कारकोत्पत्तिः । तदुक्तम् ॥ 'अनेकशक्तियुक्तस्य विश्वस्यानेककर्मणः । सर्वदा सर्वथाभावात्कचित्किञ्चिद्विवक्ष्यते' इति ॥

मातामहावाससमुपेयिवांसं
मोहादपृष्ट्वा[1] भरतं तदानीम् ।
तत्केकयी[2] सोढुमशक्नुवाना
ववार रामस्य वनप्रयाणम्[3] ॥ ६ ॥

६. मातामहेति ॥ तद्रामाभिषेचनं सोढुमशक्नुवाना अशकनशीला ॥ "शकिधृषि—" इत्यादिना सहेस्तुमुन्प्रत्ययः । शक्नोतेरात्मनेपदत्वाभावाच्चाच्छील्ये चानश्प्रत्ययः । श्नोरुवङादेशः । प्रथमसर्गे केकयी व्याख्याता । तदानीं वरप्रार्थनाकाले । मातुः पिता मातामहः ॥ "पितृव्यमातुलमातामहपितामहाः" इति डामहच्प्रत्ययान्तो निपातः ॥ तस्या वसत्यस्मिन्नित्यावासमावसथम् । अधिकरणेऽर्थे घञ् । उपेयिवांसमुपगतम् ॥ "उपेयिवाननाश्वाननूचानश्च" इति क्वस्वन्तो निपातः ॥ भरतं मोहान्मौढ्यात् । अपृष्ट्वा एवं करिष्यामीत्यननुयुज्य रामस्य कर्त्तुः वनाय प्रयाणं गमनं वनप्रयाणम् ॥ "गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ—" इत्यादिना कृद्योगषष्ठ्यपवादेन चतुर्थी ॥ "चतुर्थी" इति योगविभागात्समासः । ववार वरमयाचतेत्यर्थः । वृणोतेर्लिट् ॥

कर्णेजपैराहित[4]राज्यलोभा
स्त्रैणेन नीता विकृतिं लघिम्ना ।
रामप्रवासे व्यमृशन्न[5] दोषं
जनापवादं[6] सनरेन्द्र[7]मृत्युम् ॥ ७ ॥

७. कर्णेजपैरिति ॥ कर्णेजपैः उपांशु सूचयन्तीति कर्णेजपाः पिशुनाः । 'कर्णेजपः सूचकः स्यात्पिशुनः' इत्यमरः । तैराहितराज्यलोभा जनित-

---

१ मोहादपृष्ट्वा $T_2$, $T_3$.
२ कैकयी D., $T_3$, $T_4$, $E_1$.
३ प्रवासम् $T_2$, $T_4$.
४ °राहृत $T_2$.
५ व्यमृषन् C., B.
६ जनापरागं $T_2$, $T_3$, $T_4$.
७ न $E_4$.

राज्यतृष्णा स्त्रैणेन स्त्रीसंबन्धिना । 'स्त्रीणां पुंसां च यत्किञ्चित्स्त्रैणं पौंस्नमिति क्रमात्' इत्यमरः ॥ "स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्" इति नञ्प्रत्ययः ॥ लघिम्ना तुच्छत्वेन । पृथ्वादीमनिचि टिलोपः । विकृतिं प्रकृतिवैपरीत्यं नीता कैकयी रामप्रवासे सति सनरेन्द्रमृत्युं दशरथमरणसहितं जनापवादं लोकनिन्दापवादं लोकनिन्दारूपं दोषं न व्यमृशत् न व्यचारयत् । मृशेर्लङ् ॥

वसूनि[1] देशांश्च निवर्तयिष्यन्
रामं नृपः सङ्गिरमाण एव ।
तयावजज्ञे भरताभिषेको
विषादशङ्कुश्च मतौ निचख्ने ॥ ८ ॥

८. वसूनीति ॥ नृपो राजा रामं निवर्तयिष्यन् वनगमनान्निवर्त्तयितुकाम इत्यर्थः ॥ "लृट् शेषे च" इति चकारात्क्रियोपपदे लृट् ॥ वसूनि धनानि देशान् जनपदांश्च संगिरमाण एव देव्यै एतानि ते दास्यामीति प्रतिजानान एव । गिरतेस्तौदादिकात् "समः प्रतिज्ञाने" इत्यात्मनेपदे लटः शानजादेशः ॥ "ऋत इद्धातोः" इति रेफपर इकारः ॥ तया देव्या अवजज्ञे रामविवासनेन अवज्ञात इत्यर्थः । जानातेः कर्मणि लिट् । किं च भरताभिषेक एव विषादशङ्कुः शोकशल्यं च मतौ मनसि निचख्ने निखातः । खनतेः कर्मणि लिट् ॥ "गमहन—" इत्यादिना उपधालोपः ॥ रामविवासनं भरताभिषेचनं चेति वरद्वयमयाचतेत्यर्थः ॥

ततः प्रविव्राजयिषुः कुमार-
मादिक्षदस्याभिगमं[3] वनाय ।
सौमित्रिसीतानुचरस्य राजा
सुमन्त्रनेत्रेण रथेन शोचन् ॥ ९ ॥

---

१ वधूनिदेशांश्च T₃.
२ निजघ्ने T³.
३ °दस्यागमनं T₃.

९. तत इति॥ ततो वरप्रार्थनानन्तरं राजा दशरथः कुमारं रामं प्रव्राजयितुं प्रवासयितुमिच्छुः प्रविव्राजयिषुः सन्। व्रजतेर्ण्यन्तात्सनि उप्रत्ययः। सुमित्रायाः अपत्यं पुमान् सौमित्रिः लक्ष्मणः॥ "बाह्वादिभ्यश्च" इति इञ्प्रत्ययः॥ स च सीता च सौमित्रिसीतम्। 'सर्वो द्वन्द्वो विभाषैकवद्भवति' इति वचनादेकवद्भावः। अन्यथानुचरशब्दः पचादिषु चरडिति टित्करणात् स्त्रियां ङीपि "नद्यृतश्च" इति कप्प्रसंगात्। समासान्तानित्यत्वेऽपि पुंवद्भावानुपपत्तेरिति। तदनुचरं यस्य तस्य तथोक्तस्य रामस्य। कर्तरि षष्ठी। सुमन्त्रो नेत्रो नेता सारथिर्यस्य। नयतेरौणादिकष्ट्रन्। बाहुलकात्कर्त्तर्यर्थे। 'नेत्रं मथिगुणे वस्त्रे तरुमूले विलोचने। नेत्रं रवे च नाड्यां च नेत्रो नेतरि भेदवत्' इति विश्वः। रथेन वनाय॥ "गत्यर्थकर्मणि—" इत्यादिना चतुर्थी॥ अभिगमोऽभिगमनं प्रयाणम्॥ "ग्रहवृदृनिश्चिगमश्च" इत्यप्रत्ययः॥ शोचन् रुदन् आदिक्षदादिष्टवानाज्ञापितवान्। दिशेर्लुङि "शल इगुपधादनिटः क्सः"॥

केचिन्निनिन्दुर्नृपम[1]प्रशान्तं
विचुक्रुशुः केचन सास्रमुच्चैः।
ऊचुस्तथा[2]न्ये भरतस्य मायां
धिक् कैक[3]यीमित्यपरो[4] जगाद॥ १०॥

१०. केचिदिति॥ एवं रामप्रव्राजनादेशे केचिज्जनाः अप्रशान्तं नैर्घृण्यात्क्रूरं नृपं निनिन्दुः निन्दितवन्तः। णिदि कुत्सायां लिट्। इदित्वान्नुमागमः। केचन सास्रं सबाष्पमुच्चैस्तारं विचुक्रुशुः हा राम रामेति चक्रन्दुः। क्रोशतेर्लिट्। तदा अस्य भरतस्य मायामूचुः स्वयमपसृत्य मातृमुखेनेदं कपटनाटकमाचरतीत्यूचुः। अपरे कैकयीं धिगिति जजल्पुः व्यक्तमूचुः। अतिपापिष्ठेयमिति निनिन्दुरित्यर्थः॥ 'धिङ्निर्भ-

१ नृपति प्रकाशं T2, T4.
२ °स्तदा T., G., Com.
३ कैकयी D., T3, T4, E1.
४ °त्यपरे जजल्पुः T2, T4, T., G., Com.

त्सनिन्दयोः' इति विश्वः ॥ धिग्योगे द्वितीया । जल्प व्यक्तायां वाचि । लिट् ॥

गतो[1] वनं श्वो भवितेति रामः
शोकेन देहे जनतातिमात्रम् ।
धीरास्तु तत्र च्युतमन्यवोऽन्ये
दधुः कुमारानुगमे मनांसि ॥ ११ ॥

११. गत इति ॥ जनानां समूहो जनता ॥ "ग्रामजन—" इत्यादिना समूहार्थे तल्प्रत्ययः ॥ रामः श्वः परेद्यवि वा वनं गतो भविता भविष्यति ॥ "अनद्यतने लुट्" ॥ अत्र धातुसंबन्धे प्रत्यया इति वचनात्कृतः गतः श्वो भवितेति भूतभविष्यतोर्विशेषणविशेष्यभावेन संबन्धः साधुः । विशेषणस्य विशेष्यकालानुरोधित्वात् इति । शोकेनातिमात्रं देहे दग्धा । दहतेः कर्मणि लिट् ॥ "अत एकहल—" इत्यादिना एत्वाभ्यासलोपौ ॥ तत्र जनतायामन्ये कतिचिद्धीराः धैर्यवन्तस्तु च्युतमन्यवः वीतशोकाः सन्तः । 'मन्युशोकौ तु शुक् स्त्रियाम्' इत्यमरः । कुमारानुगमे रामानुव्रजने मनांसि दधुः निदधुः राममनुगन्तुमीषुरित्यर्थः । अतस्तेषां रामवियोगाभावाच्च्युतमन्यव इत्युक्तम् ॥

प्रस्थास्यमानावुपसेदुषस्तौ[2]
शोशुच्यमानानिदमूचतुस्तान्[3] ।
किं शोचतेहाभ्युदये बतास्मान्
नियोगलाभेन पितुः कृतार्थान् ॥ १२ ॥

१२. प्रस्थास्यमानाविति ॥ प्रस्थास्यमानौ प्रयास्यन्तौ ॥ "समवप्रविभ्यः स्थः" इत्यात्मनेपदम् ॥ "लृटः सद्वा" इति शानजादेशः ॥ तौ रामलक्ष्मणौ उपसेदुषः उपसन्नान् ॥ "भाषायां सदवसश्रुवः" इति सदेर्लिटः क्वसुरादेशः ॥ शोशुच्यमानान् भृशं शोचतः । शोचतेर्यङन्ता-

१ वनं गतः D., E2.
२ °स्तौ T2, T4, T., G.
३ °स्तान् T2, T4, T., G.

ष्टुट: शानजादेशः। तान् जनानिदं वक्ष्यमाणमूचतुः। ब्रुवि शास्तीति द्विकर्मकता। तदेवाह हे जनाः पितुर्नियोगलाभेन आज्ञाकरणलाभेन कृतार्थान् कृतकृत्यानस्मान् अशोच्यानित्यर्थः। इहास्मिन्नभ्युदये गुर्वाज्ञाकरणमहोत्सवे किमर्थं शोचत न शोचितव्यमित्यर्थः। अधीष्टे लोट्। बतेत्याश्चर्ये। संतोष्टव्ये शोचनादाश्चर्यम्।

अस्रष्ट यो यश्च भयेष्वरक्षीद्
यः सर्वदास्मानपुषत्स्वपोषम्।
महोपकारस्य किमस्ति तस्य
तुच्छेन यानेन वनस्य मोक्षः॥ १३॥

१३. अस्रष्टेति॥ किं च यः पिता अस्मानस्रष्ट सृष्टवान्। प्रथमं तावदिदं शरीरं तद्दत्तमित्यर्थः। सृजेस्तौदादिकस्य परस्मैपदित्वादैवादिकात्कर्त्तरि लुङि तङ्॥ "झलो झलि" इति सलोपः॥ व्रश्चादिना षत्वम्। ष्टुत्वम्। यो भयेष्वापत्सु अरक्षीत् रक्षितवान्। रक्षेर्लुङि "इट ईटि" इति सलोपः। यः सर्वदा स्वेन पुष्टान् स्वपोषम्। गतमेतत्। अपुषत् पुष्टवान्। पुष्यतेर्लुङ्। पुषादित्वाच्लेरङादेशः। तस्य पितुः संबन्धिनो महोपकारस्य ऋणभूतस्येति भावः। तुच्छेनात्यल्पेन वनस्य यानेन तदाज्ञया वनगमनेन मोक्षो निवृत्तिरानृण्यमस्ति किम्। नास्त्येवेत्यर्थः॥

विद्युत्प्रणाशं स वरं[1] प्रणेष्टो[2]
यद्द्रोर्ध्वशोषं तृणवद्विशुष्कः[3]।
अर्थे दुरापे[4] किमुत प्रवासे
न शासनेऽवास्थित यो गुरूणाम्॥१४॥

१४. विद्युदिति॥ उत किं च प्रवासे अत्यल्पे वनप्रवासे किं किन्तु दुरापे दुःशकेऽपि। कृच्छ्रार्थे खल्प्रत्ययः। अर्थे कर्त्तव्यार्थे विषये यो गुरूणा शासने वा नावास्थित नावस्थितः। अवपूर्वात् तिष्ठतेर्लुङि

---

१ नरः E1, T3, T4.
२ प्रनष्टो N., C., E1.
३ तरु T3.
४ दुरापेऽपि किमु T2, T3, T4.

"समवप्रविभ्यः स्थः" इत्यात्मनेपदे "स्थाघ्वोरिच्च" इति कित्वमित्वं च॥ "ह्रस्वादङ्गात्" इति सिचो लोपः॥ सः विद्युदिव प्रणाशं विद्युत्प्रणाशं वरं प्रणष्टः सद्य एव मृतप्राय इत्यर्थः॥ "उपमाने कर्मणि च" इति चकारात्कर्त्तर्युपमानोपपदे णमुल्प्रत्ययः॥ कषादित्वादनुप्रयोगः॥ "उपसर्गादसमासेऽपि णोपदेशस्य" इत्युभयत्रापि णत्वम्॥ यद्वा तृणवदूर्ध्वं शुषित्वा ऊर्ध्वशोषम्॥ "ऊर्ध्वे शुषिपूरोः" इति कर्त्तर्यूर्ध्वे उपपदे णमुल्प्रत्ययः॥ पूर्ववदनुप्रयोगः। विशुष्कः॥ "शुषः कः" इति निष्ठातकारस्य कः। शुष्कतृणवन्निःसार इत्यर्थः॥

पौरा निवर्त्तध्वमिति न्यगादीत्
तातस्य शोकापनुदा भवेत।
मा दर्शतान्यं भरतं च मत्तो
निवर्त्तयेत्याह रथं स्म सूतम्॥ १५॥

१५. पौरा इति॥ हे पौराः निवर्त्तध्वं प्रतियात। विधौ लोट्। तातस्य पितुः शोकमपनुदन्तीति शोकापनुदः दुःखापहर्त्तारः॥ "तुन्दशोकयोः परिमृजापनुदोः" इति कप्रत्ययः॥ "आलस्यसुखाहरणयोरिति वक्तव्यम्"॥ भवेत। विधौ प्रार्थनायां वा लिङ्। भरतं मत्तोऽन्यं मा दर्शत न पश्यत। दृशेर्माङि लुङ्॥ "इरितो वा" इति विकल्पाच्लेरङादेशः॥ "ऋदृशोऽङि गुणः" इति गुणः॥ इति न्यगादीत् निगदितवान्। गदेर्लुङि "अतो हलादेर्लघोः" इति वृद्धिः॥ "इट ईटि" इति सलोपः॥ सूतं च रथं निवर्त्तयेत्याह स्म उक्तवान्॥ "लट् स्मे"॥ "ब्रुवः पञ्चानामादित आहो ब्रुवः"॥

ज्ञात्वेङ्गितैर्गत्वरतां जनाना-
मेकां शयित्वा रजनीं सपौरः।
रक्षन् वनेवासकृताद् भयात्तान्
प्रातश्छलेनापजगाम रामः॥ १६॥

१ °भिजगाम T2. °पजहार T3. | °नोपजगाम E1.

१६. ज्ञात्वेति ॥ रामः इङ्गितैश्चेष्टितैः जनानां पौरजनानां गत्वरतां सहगन्तृत्वम् ॥ "गत्वरश्च" इति करबन्तो निपातः ॥ ज्ञात्वा सपौरः पौरजनसहितः एकां रजनीम्। अत्यन्तसंयोगे द्वितीया। तान् पौरजनान् वने वासो वनेवासः ॥ "शयवासवासिष्वकालात्" इत्यलुक्। तेन कृतात् संभावितात् भयात् सिंहव्याघ्रादिभयाद्रक्षन् ॥ "भीत्रार्थानाम्" इत्यपादानत्वम् ॥ शयित्वा सुप्त्वा ॥ "न क्त्वा सेट्" इति कित्वप्रतिषेधात् गुणायादेशौ ॥ प्रातः प्रभाते छलेन संमानादिव्याजेन अपजगाम अपगतः ॥

अस्राक्षुरस्त्रं[1] करुणं रुवन्तो[2]
मुहुर्मुहुर्न्यश्वसिषुः कवोष्णम्[4]।
हा राम हा कष्टमिति ब्रुवन्तः
पराङ्मुखैस्ते[3] न्यवृतन्मनोभिः ॥ १७ ॥

१७. अस्राक्षुरिति ॥ ते पौराः करुणं दीनं रुवन्तो विलपन्तः। रौतेर्लटः शत्रादेशः। अस्त्रं बाष्पमस्राक्षुरमुञ्चन्। सृजेस्तौदादिकाल्लुङि ॥ "सृजिदृशोः—" इत्यमागमः ॥ हलन्तलक्षणा वृद्धिः। कुत्वादिकार्यम्। मुहुर्मुहुः पुनः पुनः कवोष्णमीषदुष्णं यथा तथा ॥ "कवं चोष्णे" इति कोः कवादेशः ॥ न्यश्वसिषुः निश्वसितवन्तः। श्वसेर्लुङि ॥ "ह्यन्तक्षणश्वस—" इत्यादिना वृद्धिप्रतिषेधः। हा राम हा कष्टमिति ब्रुवन्तः क्रन्दन्तः पराङ्मुखैर्बहिर्मुखैर्येन गतो रामस्तेन गतैरित्यर्थः। मनोभिरुपलक्षिताः न्यवृतन्निवृत्ताः॥ "द्युद्भ्यो लुङि" इति परस्मैपदम् ॥ द्युतादित्वादङ्॥

सूतोऽपि गङ्गासलिलैः पवित्वा
सहाश्वमात्मानमनल्पमन्युः।
सतीतयो राघवयोरधीयन्
श्वसन् कदुष्णं पुरमाविवेश[5] ॥ १८ ॥

---

१ °रास्त्रं T3, T3, T4.
२ रुदन्तो B., E1, E2, T3.
३ °स्तैर्न्यवृतन् E1.
४ कवोष्णं B.
५ पुरमाजगाम T3.
पुनराजगाम T2, T4.

१८. सूत इति ॥ सूतः सारथिः सुमन्त्रोऽपि सहाश्वं साश्वम् ॥ "वोपसर्जनस्य" इति विकल्पात्सहस्य सभावः ॥ आत्मानं गङ्गासलिलैः पवित्वा पूत्वा शोधयित्वेत्यर्थः ॥ "पूङश्च" इति विकल्पादिट् ॥ अनल्पमन्युः प्रभूतशोकः सन् ससीतयोः सीतासहितयोः राघवयोः अधीयन् रामलक्ष्मणौ सीतां च संस्मरन्नित्यर्थः । इक् स्मरणे इति धातोः शतरि इयङादेशः ॥ "अधीगर्थ—" इत्यादिना कर्मणि शेषे षष्ठी ॥ कदुष्णमीषदुष्णं श्वसन् ॥ "कवं चोष्णे" इति चकारात्कोः कदादेशः॥ पुरमयोध्यामाविवेश ॥

प्रतीय सां[1] पूर्ददृशे जनेन
द्यौर्भानुशीतांशुनिरोकृतेव[2] ।
राजन्यनक्षत्रसमन्वितापि
शोकान्धकारक्षतसर्वचेष्टा ॥ १९ ॥

१९. प्रतीयति ॥ जनेन रामानुयायिना प्रतीय प्रत्येत्य । ईङ् गतौ इति धातोः क्त्वो ल्यपि रूपम् । न त्विणः । तस्य "षत्वतुकोरसिद्धः" इत्येकादेशस्यासिद्धत्वात् तुकि प्रतीत्येति स्यात् । प्रतीयुषेति पाठान्तरे "उपेयिवाननाश्वाननूचानश्च" इति उपोपसर्गस्यातन्त्रत्वात् अत्र इणो लिटः क्वसुप्रत्ययो निपातितः। राजन्यैः क्षत्रियैरेव नक्षत्रैः समन्वितापि शोकेनैवान्धकारेण क्षतसर्वचेष्टा निरस्तसर्वव्यापारा सा पूरयोध्या भानुशीतांशुविनाकृता रामलक्ष्मणवियोगादर्केणेन्दुना वियोजिता द्यौरिव ददृशे तद्वदशोभतेत्यर्थः। कर्मणि लिट्। रूपकोपमयोः संकरः॥

विलोक्य रामेण विना सुमन्त्र-
मच्योष्ट[3] सत्वान्नृपतिश्च्युताशः ।
मधूनि नैषीद् व्यलिपन्न गन्धै-
र्मनोरमैर्[4] न व्यवसिष्ट वस्त्रे ॥ २० ॥

---

[1] प्रतीयुषा c, T2, T4.
प्रतीय पूः संददृशे D.
[2] विनाकृतेव D1, T2, T4, T., G., Com.
[3] च्युत D.
क्षित T3.
[4] मनोहरे T2, T4.

१०. विलोक्येति ॥ नृपतिर्दशरथो रामेण विना ॥ "पृथग्विना—" इत्यादिना तृतीया ॥ सुमन्त्रं विलोक्य च्युताशः रामागमने निराशः सन् सत्वात्स्वभावात् । 'सत्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः' इति विश्वः । अच्योष्ट च्युतः । धैर्याद् भ्रष्ट इत्यर्थः । च्यवतेरनिटो लुङि तङि च्लेः सिच् । किं च मधूनि मद्यानि नैषीत् नैच्छत् । इषेर्लुङि "नेटि" इति सिचि वृद्धिप्रतिषेधः । आड्वृद्धिः ॥ "इट ईटि" इति सिज्लोपः ॥ गन्धैः कुङ्कुमचन्दनादिभिः । 'गन्धस्तु सुरभे मृत्यौ गन्धने गर्वलेशयोः । स एव द्रव्यवचनो बहुत्वे पुंसि च स्मृतः' इति वचनाद्बहुवचनम् । न व्यलिपत् न समालब्धः ॥ "लिपिसिचिह्वश्च" इति च्लेरङादेशः ॥ मनोरमे वस्त्रे न व्यवसिष्ट नाच्छादितवान् । वसेराच्छादनार्थाल्लुङि सिचीट् । अतिशोकादरत्यपरनामा विषयद्वेषो जात इत्यर्थः ॥

आसिष्ट नैकत्र शुचा व्यरंसीत्
कृताकृतेभ्यः क्षितिपालभाग्भ्यः ।
सचन्दनोशीरमृणालदिग्धः
शोकाग्निनागाद् द्युनिवासभूयम् ॥ २१ ॥

२१. आसिष्टेति ॥ चन्दनैरुशीरैर्नलदैर्मृणालैश्च दिग्धः दाहशान्त्यर्थं लिप्तः । दिहेः कर्मणि क्तः । घत्वादिकार्यम् । स राजा शुचा शोकेन एकत्र नासिष्ट नोपविष्टः । तेनानवस्थालक्षणरूपः शोकानुभाव उक्तः । आसेर्लुङि तङि सिचीडागमः । क्षितिपालभाग्भ्यः राजार्हेभ्यः ॥ "भजो ण्विः" ॥ कृतानि चाकृतानि च ॥ "क्तेन नञ्विशिष्टेनानञ्" इति समानाधिकरणसमासः ॥ तेभ्यः कृताकृतेभ्यः हेमरूप्येभ्यः तन्मयभूषणभजानादिभ्य इत्यर्थः । 'हेमरूप्ये कृताकृते' इत्यमरः । "जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्" इत्यपादानत्वम् ॥ "अपादाने पञ्चमी" ॥ व्यरंसीत् विरतः विरक्तोऽभूदित्यर्थः । रमेर्लुङि "व्याङ्-

१ सकृच T3, T4.

पद्भ्यो रमः" इति परस्मैपदम् ॥ "यमरमनमातां सक् च" इति सगिटौ ॥ "नेटि" इति वृद्धिप्रतिषेधः । किं बहुना शोकाग्निना दिवि निवासो यस्य तस्य भावं द्युनिवासभूयं देवभूयमगात् स्वर्गं गत इत्यर्थः ॥ "भुवो भावे" इति क्यप् ॥

विचुक्रुशुर्भूमिपतेर्महिष्यः
केशाँल्लुलुञ्चुः स्ववपूंषि जघ्नुः ।
विभूषणान्युन्मुमुचुः क्षमायां
पेतुर्बभञ्जुर्वलयानि चैव ॥ २२ ॥

२२. विचुक्रुशुरिति ॥ अथ भूमिपतेर्दशरथस्य महिष्यो दाराः विचुक्रुशुः हा नाथेत्याजुहुवुः रुरुदुश्चेत्यर्थः । क्रुश आह्वाने रोदने च । लिट् । केशान् शिरोरुहान् लुलुञ्चुः चिच्छिदुः । स्ववपूंषि जघ्नुः ताडयामासुः । विभूषणान्युन्मुमुचुः तत्यजुः । क्षमायां भुवि पेतुः पतिताः ॥ "अत एकहल्—" इत्यादिना एत्वाभ्यासलोपौ । वलयानि कटकानि बभञ्जुश्च । एवकारः पादपूरणे । क्रियासमुच्चयोऽलंकारः ॥

ताः सान्त्वयन्ती भरतप्रतीक्षा
तं बन्धुता न्यक्षिपदाशु तैले ।
दूतांश्च राजात्मजमानिनीषून्[1]
प्रास्थापयन्मन्त्रिमतेन यूनः ॥ २३ ॥

२३. ता इति ॥ अथ बन्धुता बन्धुसमूहः ॥ "ग्रामजनबन्धु—" इत्यादिना सामूहिकस्तल्प्रत्ययः ॥ भरतं प्रतीक्षते संस्कारार्थमिति भरतप्रतीक्षा सती ॥ "ईक्षिक्षमिभ्यां च" इत्युपसंख्यानात्कर्मण्यण्प्रत्ययः । ता राजमहिषीः सान्त्वयन्ती आश्वासयन्ती तं नृपमाशु तैले तैलद्रोण्यामित्यर्थः । 'आहिताग्निं जनाः प्रमीतं तैलद्रोण्यामवधाय

१ °मानिनीषुः D., E₁, T., G., Com.

शकटेनाहरन्ति' इति दूरमृतस्य कर्तृप्राप्तिपर्यन्तं तद्विधानात् । न्यक्षिपत् निक्षिप्तवती अविक्रियार्थमित्यर्थः । क्षिपेर्लङ् । तथा राजात्मजं भरतमानिनीषुरानेतुमिच्छुः सती । आनिनीषूनिति पाठे दूतविशेषणम् । यथानियोगकारिण इत्यर्थः । दूतान्संदेशहरान् मन्त्रिणां मतेनानुमत्या प्रास्थापयत् प्रस्थापितवती च । तिष्ठतेर्ण्यन्ताल्लङ् ॥ "अर्त्तिह्री—" इत्यादिना पुगागमः ॥

सुप्तो नभस्तः पतितं निरीक्षां-
चक्रे विवस्वन्तमधः स्फुरन्तम् ।
आख्यद्वसन्मातृकुले सखिभ्यः[1]
पश्यन्प्रमादं भरतोऽपि राज्ञः ॥ २४ ॥

२४. सुप्त इति ॥ अथ मातृकुले मातुलगृहे निवसन् । 'कुलं जनपदे गृहे' इति विश्वः । भरतोऽपि सुप्तो निद्राणः सन् नभस्तः नभसः ॥ "पञ्चम्यास्तसिल्" ॥ पतितं भ्रष्टमधो भूतले स्फुरन्तं विवस्वन्तं सूर्यं निरीक्षांचक्रे स्वप्ने अद्राक्षीदित्यर्थः । ईक्षतेः कर्त्तरि लिट् ॥ "इजादेश्च गुरुमतोऽनृच्छः" इत्याम्प्रत्ययः ॥ अथ राज्ञः सूर्यकल्पस्य प्रमादमनर्थं पश्यन् प्रेक्षमाणः सखिभ्य आख्यत् तं दुःस्वप्नमचकथत् । ख्यातेर्लुङि "अस्यतिवक्तिख्यातिभ्योऽङ्" ॥

अशिश्रवन्नाशयिकं तमेत्य
दूता यदार्थं[2] प्रयियासयन्तः ।
आंहिष्ट जाताञ्जिहिषस्तदासा-[3]
वुत्कण्ठमानो भरतो गुरूणाम् ॥ २५ ॥

२५. अशिश्रवनिति ॥ यदा दूताः प्रत्यागत्य तं प्रयियासयन्तः प्रयातुमेषयन्तः जिगमिषयन्त इत्यर्थः । यातेः सन्नन्ताण्णिचि लटः शत्रा-

---

[1] आख्यान्द्र° E2.
[2] यदा तं C. · तमर्थं T2, T4.
[3] °स्तदानीमुत्क° E1.

देशः। तं भरतमात्ययिकमत्ययमात्रफलकम्॥ "प्रयोजनम्" इति ठञ्॥ तमर्थं कैकेयीवृत्तान्तं नाशिश्रवन् न श्रावयन्ति स्म। अनर्थमश्रावयित्वैव मिषान्तरेण जिगमिषामजीजनन्नित्यर्थः। तदा अश्रवणकाले गुरूणां तातपादानामुत्कण्ठमानः अनर्थशङ्कया सशोकं स्मरन्नित्यर्थः। कठि शोके। उपसर्गवशात् स्वार्थं विना भूतार्थान्तरता॥ "अधीगर्थ—" इत्यादिना कर्मणि शेषे षष्ठी॥ असौ भरतः अंहितुमिच्छा अञ्जिहिषा। अहि गतौ इति धातोर्भौवादिकात्सन्नन्तादप्रत्यये इट्। इदित्वान्नुम्॥ "नन्द्राः—" इति नकारवर्जमजादित्वाद्द्वितीयैकाचो द्वित्वम्। चुत्वादिकार्यम्। सा जाता यस्य सः जाताञ्जिहिषः जातजिगमिषः सन्। उपसर्जनह्रस्वः। आंहिष्ट अगमत्। जातजिगमिषो गत इत्यर्थः। तस्मादेव धातोर्लुङि सिचि आड्वृद्धिः॥

बन्धूनशङ्किष्ट समाकुलत्वा—
दासेदुषः स्नेहवशादपायम्।
गोमायुसारङ्गगणाश्च सम्यक्
नायासिषुर्भीममरासिषुश्च॥ २६॥

२६. बन्धूनिति॥ समाकुलत्वात् दुःस्वप्नदूतागमनादिना व्याकुलचित्तत्वात्स्नेहवशाच्च बन्धून् पित्रादीनपायमनर्थमासेदुषः प्राप्तान्॥ "भाषायां सदवस—" इत्यादिना क्वसुः॥ अशङ्किष्ट शङ्कितवान्। शकेर्लुङि तङि सिचीट्। 'प्रेम पश्यति भयान्यपदेऽपि' किमुतात्र पद इति भावः। गोमायवः क्रोष्टारः सारङ्गा हरिणाः तेषां तस्य वा गणाश्च॥ "विभाषा वृक्षमृग—" इत्यादिना वैभाषिकैकवद्भावात्॥ सम्यगनुकूलं नायासिषुः नागमन्। यातेर्लुङि सगिटौ। शृगालाः प्रदक्षिणं मृगाश्च सव्यमित्यर्थः। भीमं प्रतिकूलमरासिषुः रसितवन्त इत्यर्थः। रसतेः शब्दकर्मणो लुङ्॥ "अतो हलादेः—" इति सिचि वृद्धिः॥

---

१ शारङ्ग N., C., E1, B.

स प्रोषिवानेत्य पुरं प्रवेक्ष्यन्
शुश्राव घोषं न जनौघजन्यम्।
आकर्णयामास न वेदनादान्
न चोपलेभे वणिजां पणाय्यान्॥ २७॥

२७. स इति॥ स भरतः प्रोषिवान् इयन्त्यहानि प्रोषितः सन्॥ "भाषायां सदवसश्रुवः" इति क्वसुः। यजादित्वात्संप्रसारणम्॥ "वस्वेकाजाद्घसाम्" इतीट्॥ एत्यागत्य पुरमयोध्यां प्रविश्य जनौघजन्यं जनसंघजातम्॥ "भव्यगेय—" इत्यादिना कर्त्तरि निपातः॥ "अचो यत्" इत्यत्र "तकिशासिचतियतिजनीनामुपसंख्यानम्" इति केचित्। घोषं न शुश्राव वेदनादान् नाकर्णयामास नाकर्णितवान्। 'प्रातिपदिकाद् धात्वर्थे' इति ण्यन्ताल्लिट्। तथा वणिजां व्यवहारिणां पणानां कार्षापणादीनामायान् लाभांश्च। 'पणो वराटमाने स्यात् मूल्ये कार्षापणे ग्लहे' इति विश्वः। पणायामिति टाबन्तपाठे वणिजां पणायां परस्परव्यवहारस्तुतिकौशलं चेत्यर्थः॥

चक्रन्दुरुच्चैर्नृपतिं समेत्य
तं मातरोऽभ्यर्णमुपागतास्ताः।
पुरोहितामात्यमुखाश्च योधा
विवृद्धमन्युप्रतिपूर्णमन्याः॥ २८॥

२८. चक्रन्दुरिति॥ मातरः कौसल्यादयः पुरोहितामात्यौ मुखं प्रधानं येषां ते। पुरस्कृतपुरोहितामात्या इत्यर्थः। अमात्यस्याजाद्यदन्तत्वेऽपि पुरोहितस्याभ्यर्हितत्वात् पूर्वनिपातः। युध्यन्ते इति योधाः वीरभटाश्च। पचाद्यच्। अभ्यर्णमविदूरमासन्नमित्यर्थः। अभिपूर्वादर्देः

---

१ प्रविश्य $T_3$, $T_4$, T., G., Com. प्रविष्टः D.
२ वादान् $T_3$, $T_4$, $E_1$. वादं D.
३ न चोपलेभे c.
४ पणायाः c. पणायाम् $E_1$, $E_2$, $E_3$.
५ तमेत्य c.
६ तन्मातरो c, B.
७ वीरा $T_3$, $T_4$.

कर्तरि क्तः ॥ "अभेश्चाविदूर्ये" इतीट्प्रतिषेधात् "रदाभ्यां—" इति निष्ठानत्वम् ॥ णत्वम्। तं भरतं समेत्य प्राप्य। विवृद्धाभ्यां मन्युभ्यां पितृशोकमातृक्रोधाभ्याम्॥ 'मन्युः स्यात्क्रोधशोकयोः' इति शाश्वतः। प्रतिपूर्णा कोष्ठवायुपीडनादस्पन्दपुटिता मन्या ग्रीवापृष्ठसिरा येषां ते। "पश्चाद्ग्रीवा सिरा मन्या" इत्यमरः ॥ "संज्ञायां समजनि—" इत्यादिना क्यप् ॥ उपागतास्राः उदीर्णबाष्पाश्च सन्तः उच्चैर्नृपतिं चक्रन्दुः हा नाथ क गतोऽसीति चुक्रुशुरित्यर्थः ॥

दिदृक्षमाणः परितः ससीतं
रामं यदा नैक्षत लक्ष्मणं च।
रोरुद्यमानः स तदाभ्यपृच्छद्
यथावदाख्यन्नथ वृत्तमस्मै ॥ २९ ॥

२९. दिदृक्षमाण इति ॥ स भरतः परितो दिदृक्षमाणः द्रष्टुमिच्छन् पश्यन्नदृष्ट्वा पुनः पुनः द्रष्टुमिच्छन्निवेत्यर्थः ॥ "ज्ञाश्रुस्मृदृशां सनः" इति दृशेः सन्नन्तादात्मनेपदम्। शानच्। "हलन्ताच्च" इति सनः कित्वात् "सृजिदृशोः—" इत्यम् न भवति "अकिति" इति प्रतिषेधात्। यदा ससीतं रामं लक्ष्मणं च नैक्षत नापश्यत्। ईक्षतेर्लङ्याड्वृद्धिः। तदा रोरुद्यमानः भृशं रुदन्। रुदेर्यङन्ताल्लटः शानजादेशः। अभ्यपृच्छत्। क्वैते गता इत्यप्राक्षीदित्यर्थः। अस्मै भरताय। क्रियाग्रहणाच्चतुर्थी। वृत्तं भूतमर्थं यथावत् यथार्हमित्यर्थः ॥ "तदर्हम्" इति वतिप्रत्ययः ॥ आख्यन् कैकेयीदुश्चेष्टमेतदित्याचख्युरित्यर्थः ॥ "अस्यतिवक्तिख्यातिभ्योऽङ्" ॥

आबद्धभीमभ्रुकुटीविभङ्गः
शोश्वीयमानारुणरौद्रनेत्रः।
उच्चैरुपालभ्य स केकयीं च
शोके मुहुश्चाविरतं न्यमाङ्क्षीत् ॥ ३० ॥

१ भ्रुकुटी E2.
२ शोशूयमाना° E1.
३ कैकयीं D., T4, E1.

३०. आबद्धेति ॥ स भरतः भ्रुवोः कुटी कौटिल्यं भ्रुकुटी भ्रूभङ्गः । कुट कौटिल्ये इति धातोरौणादिक इकारः ॥ "कृदिकारात्" इतीकारः ॥ "इको ह्रस्वोऽङ्यो गालवस्य" इति विकल्पात्पूर्वस्येको ह्रस्वः ॥ आबद्धः संबद्धः भीमो भयंकरो भ्रुकुट्येव विभङ्गो विकारो येन स सन् । शेश्वीयमाने अतिरोदनात् भृशं शूने उच्छूने इति यावत् । श्वयतेर्यङन्ताल्लटः शानजादेशः ॥ "विभाषा श्वेः" इति विकल्पात् असंप्रसारणपक्षे रूपम् ॥ "गुणो यङ्लुकोः" इति दीर्घश्च ॥ अरुणे अतिरोदनादतिकोपाच्च रक्ते रौद्रे रोषाद्भयंकरे नेत्रे यस्य स सन् केकयीं मुहुरुपालब्ध च । अयि पापिष्ठे किं कृतमिति मुहुराकुक्षच्च । लभतेर्लुङि तङि "झलो झलि" इति सलोपः । धत्वादिकार्यम् । इह मुहुरशब्दस्य निमज्जनवाक्यस्थस्यापि योग्यत्वादुपालम्भेन संबन्धः । निमज्जनसंबन्धे अविरतत्वविरोधात् । शोके शोकसागरे इत्यर्थः । निमज्जनलिङ्गात् । अविरतं न्यमाङ्क्षीत् निमग्नश्च । मस्जेर्लुङि सिचि "मस्जिनशोर्झलि" इत्यन्तात्पूर्वं नुम्विधानात् संयोगादिलोपानुषङ्गसिद्धिश्च । हलन्तलक्षणा वृद्धिः । हल्ग्रहणस्य समुदायप्रतिपत्त्यर्थत्वात् कुत्वषत्वानुस्वारादिपरसवर्णादिकार्यम् । केकयी व्याख्याता ॥

नृपात्मजौ चिक्लिशतुः ससीतौ
ममार राजा विधवा भवत्यः ।
शोच्या वयं भूरनृपा लघुत्वं
केकय्युपज्ञं[1] बत बह्वनर्थम् ॥ ३१ ॥

३१. उपालम्भमेवाह नृपेति ॥ ससीतौ सीतासहितौ ॥ "तेन सह—" इति बहुव्रीहौ उपसर्जनह्रस्वत्वम् ॥ नृपात्मजौ रामलक्ष्मणौ चिक्लिशतुः वनवासादिना क्लिष्टावित्यर्थः । क्लिश्यतेरकर्मकाल्लिट् । राजा ममार मृतः ॥ "म्रियतेर्लुङ्लिङोश्च" इति नियमात्परस्मैपदम् । भवती च पताश्च भवत्यः । त्यदाद्येकशेषः । विधवाः स्थ । न केवलं त्वमेव

१ कैकेय्यु° D., T2, E3, T., G., Com.

किन्त्वेता अपि त्वया हता इत्यर्थः। वयं शोच्याः निन्दाभाजनत्वादितिभावः। भूरनृपा शोच्या। 'शोच्यं राज्यमराजकम्' इति न्यायात्। त्वमपि शोच्येत्यर्थः। केकयस्यापत्यं स्त्री कैकेयी॥ "जनपदशब्दात्क्षत्रियादञ्" इति केकयशब्दादञ्प्रत्ययः॥ "केकयमित्रयुप्रलयानां यादेरियः" इतीयादेशो गुणः॥ उपज्ञायत इत्युपज्ञा॥ "आतश्चोपसर्गे" इति कर्मण्यङ् प्रत्ययः॥ कैकेय्याः उपज्ञा कैकेय्युपज्ञम्। कृद्योगषष्ठीसमासः। कैकेय्या प्रथममुपज्ञातमित्यर्थः॥ "उपज्ञोपक्रमं तदाद्याचिख्यासायाम्" इति नपुंसकत्वम्॥ बहवोऽनर्थाः पूर्वोक्ताः यस्मिन् तत् लघुत्वमत्यन्तायुक्तकारित्वलक्षणं तुच्छत्वमित्यहो महदसाधारण्यं संपादितं पापिष्ठेत्युपालम्भार्थः॥

नैतन्मतं मत्कमिति ब्रुवाणः
सहस्रशो[1]ऽसौ शपथानशप्यत्[2]।
उद्वाश्यमानः[3] पितरं सरामं
लुठ्यन्[4] सशोको[5] भुवि रोरुदावान्॥ ३२॥

३२. तं प्रति स्वापराधं परिहरति नेति॥ सशोकः असौ भरतः सरामं पितरमुद्वाश्यमानः हा तात हा रामेति उभावपि नामग्रहमुच्चैः क्रोशन्नित्यर्थः। वाशृ शब्दे इति दैवादिकात्कर्तरि लटः शानजादेशः। भुवि लुठ्यन्। लुठेर्दैवादिकाल्लटः शत्रादेशः। रोरुदा भृशं रोदनम्। रुदेर्यङन्तात्॥ "अप्रत्ययात्" इत्यप्रत्ययः। अल्लोपयलोपौ। तद्वान् भृशं रुदन्नित्यर्थः। एतत्कैकेय्यनुष्ठितं मतं पक्षः। अहं ग्रामणीरस्य मत्कं मत्कर्तृकं न॥ "स एषां ग्रामणीः" इति कन्प्रत्ययः॥ "प्रत्ययोत्तरपदयोश्च" इत्यस्मदो मपर्यन्तस्य मादेशः॥ इति ब्रुवाणः सहस्रशः अनेकवारं शपथान् विश्वासवचनानि अशप्यदकरोदित्यर्थः। स तपोऽतप्य-

१ सहस्रधा T2, T4.
२ °नशाप्सीत् T3.
३ उद्वास्यमानः B., E1, E2.
४ लुठन् T3.
५ सशोकं C.

त्तेतिवत् निर्देशात् । शपेर्दैवादिकाल्लुङ् । 'शपते शप्यति शपत्याक्रो-शत्यपि शप्यते' इति भट्टमल्लः ॥

तं सुस्थयन्तः सचिवा नरेन्द्रं
दिधक्षयन्तः समुदूहुरारात् ।
अन्त्याहुतिं हावयितुं सविप्रा-
श्चिचीषयन्तोऽध्वरपात्रजातम् ॥ ३३ ॥

३३. तमिति ॥ अथ सचिवास्तं भरतं स्वस्थयन्तः सुखस्थं प्रकृतिस्थं कुर्वन्तः आश्वासयन्त इत्यर्थः । 'तत्करोति' इति ण्यन्ताल्लटः शत्रादेशः । नरेन्द्रं दशरथं दिधक्षयन्तः दग्धुमेषयन्तः । दहेः सन्नन्ताण्णिचि लटः शत्रादेशः । घत्वादिकार्यम् । सविप्राः विप्रसहिताः सन्तः अन्त्याहुतिं प्रेताहुतिं हावयितुमग्नौ प्रक्षेपयितुम् । जुहोतेर्ण्यन्तात् "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" इति तुमुन् । अध्वरपात्रजातं जुह्वादियज्ञपात्रसमूहं चिचीषयन्तो यजमानाङ्गेषु यथाविधि चेतुं निधातुमेषयन्तः । चिनोतेः सन्नन्ताण्णिचि शतृप्रत्ययः । आरान्नगरस्य नातिदूरे समुदूहुः । अन्तर्भावितण्यर्थो निर्देशः । उद्वाहयामासुः । चितामारोपयन्नित्यर्थः । वहेर्लिट् । यजादित्वात्संप्रसारणम् ॥

उदक्षिपन् पट्टदुकूलकेतू-
नवादयन् वेणुमृदङ्गकांस्यम्[३] ।
कम्बूंश्च तारानधमन् समन्ता-
त्तथानयन्[४] कुङ्कुमचन्दनानि ॥ ३४ ॥

३४. उदेति ॥ पट्टदुकूलानि ब्राह्मणपरिव्राजकवन्निर्देशः । तेषां केतून् ध्वजानुदक्षिपन् उत्क्षिप्तवन्तः । वेणुरिति वंशादिसुषिरवाद्योपलक्षणम् । मृदङ्ग इति मुरजाद्यानामुपलक्षणम् । कंसोयस्य विकारः

१ स्वस्थयन्तः D., T2, T3, E1, T., G., Com.
२ सविपाग्नि° T., G., Com.
३ कांस्यम् C., कास्यं T2, T3, वाद्यम् E1.
४ °सयन् T., G., Com., अधानयन् T4.

कांस्य इति तालादिवाद्योपलक्षणम् ॥ "कंसीयपरशव्ययोर्यञञौ लुक् च" इति यञ्प्रत्ययः छस्य लुक् च। तेषाम् ॥ "जातेरप्राणिनाम्" इति द्वन्द्वैकवद्भावः। न तूर्याङ्गत्वात्। मार्दङ्गिकपाणविकादिवन्मृदङ्गादितूर्याणां तूर्याङ्गताभावात्। अवादयन् वादितवन्तः। तारांस्तारध्वनीन् कम्बून् शंखांश्चाधमन् अपूरयन् ॥ "पाघ्रा—" आदिना ध्मो धमादेशः। तथा समन्तात् कुङ्कुमचन्दनानि आसयन् अकिरन्नित्यर्थः। सर्वत्र लङ् ॥

श्रोत्राक्षिनासावदनं सरुक्मं
 कृत्वाजिने प्राक्शिरसं निधाय[1]।
संचित्य पात्राणि यथाविधान-
 मृत्विग्जुहाव ज्वलितं चिताग्निम्[2] ॥ ३५ ॥

३५. श्रोत्रेति ॥ ऋतुमृतावृतुप्रयुक्तो वा यजतीति ऋत्विक् संस्कर्त्ता भरतः ॥ "ऋत्विग्—" इत्यादिना क्विन्नन्तो निपातः। अजिने कृष्णाजिने प्राक्छिरसं विधाय। 'रज्जुषु चैव कृष्णाजिने चैव चोत्तानः शेते' इति शास्त्रात् तथा कृत्वा। सर्वेषु संवेशनेषु दक्षिणाशिरसमिति शास्त्रे सति प्राक्छिरस्त्वाभिधानं चिन्त्यम्। शाखाभेदाद्वा समाधेयम्। श्रोत्रे अक्षिणी नासा वदनं च तथोक्तम्। प्राण्यङ्गत्वादेकवद्भावः। सरुक्ममाधाय। प्राणायतनेषु हिरण्यशकलं कृत्वा। पात्राणि यज्ञपात्राणि तथाविधानं, संचित्य। 'पात्राणि चिनोति सर्वाण्यनुलोमानि ध्रुवावर्जं तस्य दक्षिणे हस्ते स्रुवं जुहूं च निदधाति सव्य उपभृतमुरसि ध्रुवामरणीं च मुखेऽग्निहोत्रहवणीं नासिकयोः स्रुवादि' इत्यादि 'स एष यज्ञो युधि यजमानोऽञ्जसा स्वर्गलोकमेति' इत्यन्तशास्त्रोक्तविधानात् तत्तदवयवेषु निधायेत्यर्थः। ज्वलितं चिताग्निं जुहाव आहुतिभिरतार्प्सीदित्यर्थः ॥

---

[1] विधाय T., G., Com. | [2] ज्वलिते चिताग्नौ T₂, T₄.

कृतेषु पिण्डोदकसञ्चयेषु
हित्वाभिषेकं प्रकृतं प्रजाभिः।
प्रत्यानिनीषुर्विनयेन रामं
प्रायादरण्यं भरतः सपौरः॥ ३६॥

३६. कृतेष्विति॥ अथ भरतः पिण्डश्च उदकं च संचयोऽस्थिसंचयः तेषु कृतेषु सत्सु। श्राद्धसमाप्तावित्यर्थः। प्रजाभिरमात्यादिभिः प्रकृतं प्रक्रान्तम्॥ "आदिकर्मणि क्तः कर्त्तरि च" इति चकारात्कर्मणि क्तः॥ अभिषेकं पट्टबन्धनं हित्वा परिहृत्य रामं प्रत्यानिनीषुः अभिषेकाय प्रत्यानेतुमिच्छुः। नयतेः सन्नन्तादुप्रत्ययः। सपौरः पौरसहितः। तैरप्यानाययितुमिति भावः। अरण्यं विनयेन प्रायात्। अन्यथा रामस्याविश्वासादिति भावः। यातेर्लङ्॥

शीघ्रायमाणैः ककुभोऽश्नुवानै-
र्जनैरपन्थानमुपेत्य सृप्तैः।
शोकादभूषैरपि भूश्चकासा-
ञ्चकार नागेन्द्ररथाश्वमिश्रैः॥ ३७॥

३७. शीघ्रायमाणैरिति॥ अशीघ्रैः शीघ्रैर्भवद्भिः शीघ्रायमाणैः। रामदर्शनोत्कण्ठयेति भावः। भृशादिक्यङन्ताल्लटः शानजादेशः। ककुभः अश्नुवानैः आनन्त्याद्दिशो व्याप्नुवद्भिः। अश्नोतेः शानचि उवङादेशः। अत एव अपन्थानमपर्याप्तत्वादपन्थानमुपेत्य॥ "पथो विभाषा" इति पाक्षिकः समासान्ताभावः। सृप्तैः प्रसर्पद्भिरित्यर्थः। सृपेः कर्तरि क्तः। शोकादभूषैः भूषारहितैरपि नागेन्द्ररथाश्वेन हस्तिरथाश्वेन मिश्रैः॥ "पूर्वसदृश—" इत्यादिना तृतीयासमासः। बह्वष्वनियमाद्धस्तिनां प्राधान्याच्च बह्वचोऽपि नागेन्द्रस्य पूर्वनिपातः। जनैर्हेतुभिः। भूश्चकासाञ्चकार विरेजे। स्वयमभूषितत्वेऽपि भुवनभूषायमाणहस्त्यादियोगात्तैरभूष्येव भूरिति भावः। 'कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थम्' इति लिटि चकासेराम्प्रत्ययः॥ "आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य" इत्यत्र पूर्ववद्ग्रहणाननुवृत्तेश्चकास्तिवत्कर्त्रभिप्रायेऽपि कृञः परस्मैपदम्॥

उच्चिक्यिरे पुष्पफलं[1] वनानि[2]
सस्नुः पितॄन् पिप्रियुरापगासु ।
आरेमुरित्वा[3] पुलिनान्यशङ्कं
छायां समाश्रित्य[4] विशश्रमुश्च[5] ॥ ३८ ॥

३८. उदिति ॥ किं च ते जनाः वनानि पुष्पाणि फलानि च पुष्पफलम् ॥ "जातिरप्राणिनाम्" इत्येकवद्भावः ॥ उच्चिक्यिरे अपचिक्यिरे । चिनोतेः कर्त्तरि लिटि ञित्वात्तङ् ॥ "विभाषा चेः" इति कुत्वम् ॥ "एरनेकाचः—" इति यण् ॥ 'दुहियाचिरुधिप्रच्छिभिक्षिचिञाम्—' इति द्विकर्मकत्वम् । अपां समूहः आपम् ॥ "तस्य समूहः" इत्यण् ॥ तेन गच्छन्तीत्यापगाः नद्यः ॥ 'डोऽन्यत्रापि दृश्यते' ॥ तासु सस्नुः स्नातवन्तः । स्नातेर्लिट् । झेरुस् ॥ "उस्यपदान्तात्" इति पररूपत्वम् । पितॄन् पिप्रियुः निवापाञ्जलिभिः प्रीणयामासुः । प्रीणातेर्लिट्युसि इयङादेशः । पुलिनानि सैकतानि इत्वा गत्वा । इणः क्त्वाप्रत्ययः । अशङ्कं विस्रब्धमारेमुराक्रीडन् ॥ "व्याङ्परिभ्यो रमः" इति परस्मैपदम् ॥ "अत एकहल्—" इत्यादिना एत्वाभ्यासलोपौ ॥ छायां समाश्रित्य विशश्रमुः श्रान्ताः ॥

संप्राप्य तीरं तमसापगाया[6]
गङ्गाम्बुसंपर्कविशुद्धिभाजः ।
विगाहितुं यामुनमम्बु पुण्यं
ययुर्निरुद्धश्रमवृत्तयस्ते ॥ ३९ ॥

३९. संप्राप्येति ॥ ते जनाः गच्छतीति गङ्गा भागीरथी ॥ "गन्गम्योः" इति गमेरौणादिक गन्प्रत्ययः । तदम्बुसंपर्केण विशुद्धिभाजोऽतिपवित्रायास्तमसापगायाः तमसानद्यास्तीरं संप्राप्य निरुद्धश्रमवृ-

१ पुष्पफले E1.
२ बलानि E2.
३ आरेट्ट N.
४ छायाः समाश्रित्य T3.
५ विशश्रमुश्च E2.
६ तरसा D., E1, also noticed by c.

त्सयः निरस्तखेदसंक्रान्तयः सन्तः । पुनातीति पुण्यं यामुनमम्बु यमुनाजलं विगाहितुं ययुः ॥

ईयुर्भरद्वाजमुनेर्निकेतं
यस्मिन्विशश्राम समेत्य रामः ।
च्युताशनायैः फलवद्विभूत्या
व्यसन्नुदन्यां शिशिरैः पयोभिः ॥ ४० ॥

४०. ईयुरिति ॥ ते जनाः भरद्वाजमुनेर्निकेतमाश्रममीयुः जग्मुः । एतेर्लिट् । "इणो यण्" इति यणादेशः ॥ "दीर्घ इणः किति" इत्यभ्यासदीर्घः ॥ यस्मिन्नाश्रमे रामः समेत्यागत्य विशश्राम विश्रान्तः । अतस्तेऽपि तत्र सोत्कण्ठास्तस्थुरिति भावः । अथ फलवतां फलवृक्षाणां विभूत्या संपदा च्युताशनायाः निवृत्तक्षुधाः सन्तः शिशिरैः पयोभिरुदन्यां पिपासाम् ॥ "अशनायोदन्यधनायाबुभुक्षापिपासागर्धेषु" इति निपातः । व्यास्यन् अपानयन् । अस्यतेर्लङ्याद्वृद्धिः ॥

वाचंयमान्स्थण्डिलशायिनश्च
युयुक्षमाणाननिशं मुमुक्षून् ।
अध्यापयन्तं विनयात्प्रणेमुः
पद्गा भरद्वाजमुनिं सशिष्यम् ॥ ४१ ॥

४१. वाचंयमानिति ॥ अथ वाचं यच्छन्तीति वाचंयमान् मौनव्रतिनः ॥ "वाचि यमो व्रते" इति खच् ॥ "वाचंयमपुरन्दरौ च" इति निपातनान्मुमागमः । स्थण्डिले शेरत इति स्थण्डिलशायिनः । तद्व्रतिनश्चेत्यर्थः । अनिशं युयुक्षमाणान् योक्तुमिच्छतः । योगाभ्यासिन इत्यर्थः । युजेः सन्नन्ताल्लटः शानजादेशः । मुमुक्षून् मोक्तुमिच्छून् । विरक्तानित्यर्थः । मुचेः सन्नन्तादुप्रत्ययः । विनयादध्यापयन्तम् । ब्रह्मविद्यां ग्राहयन्तमित्यर्थः ॥ "क्रीङ्जीनां णौ" इत्यात्वे पुगागमः ॥ सशिष्यं भरद्वाज-

---

१ च्युताशनायाः D., E1, G., T., Com. | २ व्यास्य° Com.

मुनिम्। पादाभ्यां गच्छन्तीति पद्गाः पादचारिणः सन्तः। 'डोऽन्यत्रापि दृश्यते' इति गमेर्डप्रत्ययः॥ "पादस्य पदाज्यातिगोपहतेषु" इति पादशब्दस्य पदादेशः॥ विनयात्प्रणेमुः प्रणताः। नमेर्लिटि "अत एकहल्—" इत्यादिना एत्वाभ्यासलोपौ॥

आतिथ्यमेभ्यः परिनिर्विवप्सोः
कल्पद्रुमा योगबलेन फेलुः।
धामप्रथिम्नो म्रदिमान्वितानि
वासांसि च द्राघिमवन्त्युदूहुः॥ ४२॥

४२. आतिथ्यमिति॥ एभ्यो भरतानुगमेभ्यः। संप्रदाने चतुर्थी। अतिथ्यर्थमातिथ्यमतिथिसत्कारम्॥ "अतिथेर्ञ्यः"॥ परिनिर्विवत्सोः निर्वस्तुं परिकल्पयितुमिच्छोः। वसेर्निवासार्थकात्सन्नन्तादुप्रत्ययः। उपसर्गवशादर्थान्तरत्वम्॥ "सः स्यार्धधातुके" इति सकारस्य तकारः॥ धामप्रथिम्नः तेजोराशेर्मुनेरित्यर्थः। तेजोविशेषद्योतनार्थं 'तेजसां हि न वयः समीक्ष्यते' इति वत् तेजस्तद्वतोरभेदेन व्यपदेशः। योगबलेन योगमहिम्ना कल्पद्रुमाः संकल्पोपनताः कल्पवृक्षाः फेलुः भक्ष्यभोज्यादिकम्। फलतेर्लिट्॥ "तॄफलभजत्रपश्च" इत्येत्वाभ्यासलोपौ॥ तथा म्रदिमान्वितानि मृदुत्वमुपगतानि द्राघिमवन्ति दैर्घ्ययुक्तानि वासांसि वस्त्राणि च उदूहुः उद्वहन्ति स्म। यजादित्वात्संप्रसारणम्। पृथुमृदुदीर्घशब्देभ्यः तस्य भावः इत्यर्थे पृथ्वादिभ्यः इमनिच्। पृथुमृदुशब्दयोः॥ "र ऋतो हलादेर्लघोः" इति रादेशः॥ दीर्घशब्दस्य "प्रियस्थिर—" इत्यादिना द्राघादेशः॥ पश्चान्मतुप्॥

आज्ञां प्रतीषुर्विनयादुपास्थु-
र्जगुः सरागं ननृतुः सहावम्।
सविभ्रमं नेमुरुदारमूचु-
स्तिलोत्तमाद्या वनिताश्च तस्मिन्॥ ४३॥

१ परिनिर्विवत्सोः T., G., Com.
२ प्रतीयुः E₂.

३ सभावम् T₂, T₄. T., G., Com.

४३. आज्ञामिति ॥ तस्मिन् तत्काले तिलोत्तमाद्या वनिता अप्सरसः आज्ञां भरतानुगादेशं प्रतीषुः अग्रहीषुः यथोक्तं चक्रुरित्यर्थः । इषेर्लिटि द्विर्भावादिकार्ये सवर्णदीर्घादिकार्यम् । विनयादुपास्थुः असेवन्त इत्यर्थः । तिष्ठतेर्लुङि "गातिस्था—" इत्यादिना सिचो लुक् ॥ "आतः" इति झेर्जुस् ॥ "उस्यपदान्तात्" इति पररूपत्वम् । सरागं रागबन्धयुक्तं जगुरगायन् । गातेर्लिटि द्विर्भावे "कुहोश्चुः" पररूपत्वं च ॥ सभावं शृङ्गारचेष्टायुक्तं ननृतुः अनृत्यन् । नृतेर्लिटि "उरत्" इत्यभ्यासऋकारस्यात्वम् । "असंयोगात्—" इति लिटः कित्वान्न गुणः ॥ सविभ्रमं सविलासं नेमुः प्रणेमुः । नमेर्लिटि "अत एकहल्—" इत्येत्वाभ्यासलोपौ । उदारं गंभीरमूचुः व्याजह्रुः । वचेर्ब्रूआदेशस्य लिटि संप्रसारणे द्विर्भावे सवर्णदीर्घः ॥

वस्त्रान्नपानं शयनं च नाना
कृत्वावकाशे रुचिरं[1] संप्रकॢप्तम् ।
तान् प्रीतिमा[2]नाह मुनिस्ततः स्म[3]
निवध्वमाध्वं पिबताद्य शेध्वम् ॥ ४४ ॥

४४. वस्त्रेति ॥ अथ मुनिर्भरद्वाजः वस्त्राणि अन्नानि पानानि च वस्त्रान्नपानम् । 'सर्वो द्वन्द्वो विभाषैकवद्भवति' इत्येकवद्भावः । शयनं च ॥ जातावेकवचनम् । नानावकाशे यथाभिमते पृथक्पृथक्प्रदेशे रुचिरं मनोज्ञं यथा तथा प्रकॢप्तं सज्जं कृत्वा प्रीतवान् हृष्टः सन् । प्रीञः प्रीत्यर्थाद् दैवादिकादकर्मकात्कर्त्तरि निष्ठा । तान् भरतानुगानाह स्म उक्तवांश्च । किं तत् । तदाह । हे जनाः अस्मिन्नाश्रमे निवध्वं यथेच्छं वस्त्राणि परिधत्त । वसेराच्छादनार्थाल्लोटि ध्वमि धातुसकारस्य ॥ "झलां जश् झशि" इति जश्त्वम् ॥ आन्तरतम्याद्दकारः ।

---

१ रुचिरं प्रकल्पतम् B., T3, E1, T., G., Com.
२ प्रीतवान् T. G. Com.
३ मुनिःस्म तस्मिन् T2, T., Com. मुनिस्ततोऽस्मिन् G. मुनिस्तु तस्मिन् T3.

आध्वमुपविशत। आस उपवेशने। सर्वं पूर्ववत्। पिबत पेयजातं यथेच्छं धयत। पा पाने। थस्य तादेशः॥ "पाघ्रा–" इत्यादिना पिबादेशश्च। अत्त सुष्ठु भक्ष्याणि भक्षयत। अदेर्लोटि थस्य तादेशः। शेध्वं विस्रब्धं संविशत। शीङो लोटि ध्वमि शपो लुक्॥ "शीङः सार्वधातुके गुणः" इति गुणः। सर्वत्र "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च" इत्यतिसर्गे लोट्। अतिसर्गः कामचाराभ्यनुज्ञा। अत्र सर्वत्र विधौ लोडिति पूर्वव्याख्यातारस्तदसत्। न तावत्किञ्चिदत्र ज्योतिष्टोमादिवत्किञ्चिदप्यपूर्वं विधेयमस्ति रागत एवैषां प्राप्तत्वात्। नाप्यत्रर्तौ जायामुपेयादितिवन्नियम्यते तदनिच्छतामकरणे प्रत्यवायाभावात्। नापि स्थानान्तरविहारपरिसंख्यापरत्वमिति वाच्यम्। पञ्चेतरपञ्चनखभक्षणवत् स्थानान्तरविहारे दोषाभावात्। दोषत्रयदुष्टत्वादस्मदुक्तमेव युक्तम्॥

ते भुक्तवन्तः सुसुखं[1] वसित्वा
वासांस्युषित्वा रजनीं प्रभाते।
द्रुतं समध्वा रथवाजिनागै-
र्मन्दाकिनीं रम्यवनां समीयुः॥ ४९॥

४५. त इति॥ ते जनाः भुक्तवन्तः वासांसि वसित्वा आच्छाद्य। वसेराच्छादनार्थात् क्त्वाप्रत्ययः। वलादित्वादिट्। सुष्ठु सुखं यथा भवति तथा सुसुखं रजनीमुषित्वा स्थित्वा। अत्यन्तसंयोगे द्वितीया। "वसतिक्षुधोरिट्"॥ यजादित्वात्संप्रसारणम्। प्रभाते संप्राप्ता अध्वानं समध्वाः अध्वगता इत्यर्थः। प्रादिसमासः॥ "उपसर्गादध्वनः" इति समासान्तष्टच्प्रत्ययः। द्रुतं रथवाजिना युक्तैर्नागै रथवाजिनागैः। मध्यमपदलोपिसमासाश्रयणेन सेनाङ्गद्वन्द्वैकवद्भावं वारयन्ति। रम्यवनां मन्दाकिनीं नाम चित्रकूटनिकटस्थां कांचन नदीं न तु गङ्गामित्यारण्य-

---

[1] ससुखं D., E1, ससुखं T3.

काण्डे द्रष्टव्यम् । समीयुः । इणो लिटि झेरुसि "इणो यण्" ॥ "दीर्घ इणः किति" इत्यभ्यासदीर्घः ॥

वैखानसेभ्यः श्रुतरामवार्त्ता-
स्ततो विशिञ्जानपतत्त्रिसङ्घम् ।
अभ्रंलिहाग्रं रविमार्गभङ्ग-
मानंहिरेऽद्रिं प्रति चित्रकूटम् ॥ ४६ ॥

४६. वैखानसेभ्य इति ॥ ततो मन्दाकिनीगमनानन्तरं वैखानसेभ्यो वानप्रस्थेभ्यः ।'वैखानसवनेवासिवानप्रस्थाश्च तापसाः' इति यादवः॥ "आख्यातोपयोगे" इत्यपादानत्वम् । श्रुता रामवार्त्ता चित्रकूटगमनवृत्तान्तो यैस्ते सन्तः । विशेषेण शिञ्जानपतङ्गसङ्घं कूजत्पक्षिकुलम् । शिञ्जेर्लटः शानजादेशः । अभ्रं लिहन्तीत्यभ्रंलिहानि अभ्रंकषाणि ॥ "वहाभ्रे लिहः" इति खचि मुमागमः ॥ तान्यग्राणि शिखराणि यस्य तम् । अत एव रविमार्गस्य भङ्गः प्रतिरोधोऽस्यास्तीति तथोक्तम् । मत्वर्थीयोऽकारः । चित्रकूटमद्रिं प्रति आनंहिरे जग्मुः । अहि गतौ इति धातोर्लिट् ॥ "अत आदेः" इत्यभ्यासदीर्घः ॥ "तस्मान्नुड्द्विहलः" इति नुडागमः ॥

दृष्ट्वोर्णुवानान् ककुभो बलौघान्
वितत्य शार्ङ्गं कवचं पिनह्य ।
तस्थौ सिसंग्रामयिषुः शितेषुः
सौमित्रिराक्षिभ्रुवमुज्जिहानः ॥ ४७ ॥

४७. दृष्ट्वेति ॥ सुमित्राया अपत्यं पुमान् सौमित्रिः । बाह्वादित्वादिञ् । ककुभो दिशः ऊर्णुवानान् व्याप्नुवतः । ऊर्णोतेः शानच् उवङादेशश्च । बलौघान् सेनासमूहान् दृष्ट्वा शृङ्गस्य विकारः शार्ङ्गं धनुः वितत्य

१ श्रुता° T2, T4.
२ ततोऽवशिञ्जान T3, विसिञ्जान D, E1, E2.
३ पतङ्ग T3, T4, T, G., Com.
४ दृष्ट्वोर्णवानान् E2.
५ बलौघान् C.
६ °माजिहानः T3, T4.

विस्तार्य सज्जं कृत्वेत्यर्थः। तनोतेः समासे क्त्वो ल्यप्। तुक्। अनुनासिकलोपः। कवचं वर्म पिनह्य। नहेर्ल्यप्। 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इति विकल्पादल्लोपः। सिसंग्रामयिषुः संग्रामयितुं योद्धुमिच्छुः। संग्राम युद्धे इति धातोश्चुरादिण्यन्तात् सन्नन्तादुप्रत्ययः। अत एव शितेषुः निशितबाणः सन्। अक्षिणी च भ्रुवौ च अक्षिभ्रुवम्॥ "अचतुर—" इत्यादिना निपातनात्साधुः। उज्जिहानः उद्गमयन्। णिजर्थगर्भो निर्देशः। जहातेः कर्त्तरि लटः शानजादेशः। तस्थौ स्थितवान्। प्रतिपक्षभ्रान्त्या सन्नद्ध इत्यर्थः॥

शुक्लोत्तरासङ्गभृतो विशस्त्रान्
पादै[1]ः शनैरापततः[2]समन्यून्।
औहि[3]ष्ट तान् वीतविरुद्धबुद्धीन्
विवन्दिषून् दाशरथिः स्ववर्ग्यान्॥ ४८॥

४८. शुक्लेति॥ अथ दाशरथी रामः शुक्लोत्तरासङ्गभृतः शुक्लोत्तरीयधारिणः न तु कवचभृतः। क्विप्। विशस्त्रान् निरायुधान् न तूद्यतायुधान्। पादैः शनैरापतन्तः आगच्छतः न तु यानैस्तूर्णम्। प्रमन्यून् प्रभूतशोकान् रुदत इत्यर्थः। नतु क्ष्वेडमानान्। भरतानुगान् वीतविरुद्धबुद्धीन् विगतवैराभिसन्धीन्। किं तु विवन्दिषून् वन्दितुं प्रणन्तुमिच्छून्। स्ववर्ग्यान् स्ववर्गे भवान् स्वपक्षपातिन इत्यर्थः॥ "वर्गान्ताच्च"॥ "अशब्दे यत्खावन्यतरस्याम्" इति यत्प्रत्ययः॥ औहिष्ट ऊहितवान्। ऊहतेर्लुङि सिच्याड्वृद्धिः। अनुद्धतवेषलिङ्गेन सुहृद्भावेनागताश्चिश्चिकायेत्यर्थः॥

समूलकाषं चकषू रुदन्तो
रामान्तिकं[4] बृंहितमन्युवेगाः।
आवेदयन्तः क्षितिपालमुच्चैः-
कारं मृतं रामवियोगशोकात्॥ ४९॥

---

१ पदैः T3.
२ प्रमन्यून् D., T3., T4, T., G., Com.
३ ऐहिष्ट E2.
४ रामान्तिके E2.

४९. समूलेति ॥ अथैते बृंहितमन्युवेगाः प्रवृद्धशोकवेगाः अत एव रुदन्तः क्षितिपालं दशरथं रामवियोगशोकान्मृतम् उच्चैःकारमुच्चैः कृत्वा आवेदयन्तः पुत्रशोकान्मृत इत्युच्चैः कथयन्त इत्यर्थः ॥ "अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ" इति णमुल्प्रत्ययः । नीचैराख्येयस्यानिष्टस्य उच्चैराख्यानमेवात्र अयथाभिप्रेताख्यानम् । रामान्तिकं रामसमीपदेशं समूलकाषं स्वशरीरलुण्ठनैः पतनैः समूलं काषित्वा चकषुः । आमूलाच्चकषुरित्यर्थः ॥ "निमूलसमूलयोः कषः" इति णमुल्प्रत्ययः ॥ "कषादिषु यथाविध्यनुप्रयोगः" ॥

चिरं रुदित्वा करुणं सशब्दं
गोत्राभिधायं सरितं समेत्य ।
मध्ये जलाद्राघवलक्ष्मणाभ्यां
प्रत्तं जलं द्व्यञ्जलमन्तिकेऽपाम् ॥ ५० ॥

५०. चिरमिति ॥ अथ राघवः रामः लक्ष्मणसाहचर्यात् । तथा च रामलक्ष्मणाभ्यामित्यर्थः । चिरं करुणं दीनं सशब्दं सध्वानं च यथा तथा रुदित्वा परिदेव्य सरितमेत्य नदीं गत्वा मध्ये जलस्य मध्येजलं तस्माज्जलमध्यादित्यर्थः । ल्यब्लोपे पञ्चमी । तत्र स्नात्वा निर्गत्येत्यर्थः ॥ "पारे मध्ये षष्ठ्या वा" इत्यव्ययीभावः । "अपञ्चम्याः" इति निषेधान्न लुगम्भावौ । अपामन्तिके तीरे । द्वौ अञ्जली समाहृतौ द्व्यञ्जलम् ॥ "तद्धितार्थ—" इत्यादिना समाहारे द्विगुः ॥ "द्वित्रिभ्यामञ्जलेः" इति समासान्तष्टच् ॥ द्व्यञ्जलमिति लक्षणया द्व्यञ्जलिगृहीतमित्यर्थः । अन्यथा घटः पट इति वत् द्व्यञ्जलं जलमिति सामानाधिकरण्यायोगात् । न तु द्व्यञ्जलिः प्रमाणमस्येति सामानाधिकरण्यसिद्धिः ॥ "द्विगोर्लुगनपत्ये" इति प्रमाणतद्धितलुकि समासान्तानुपपत्तिप्रसङ्गात् । तत्र "अतद्धितलुकि" इत्यनुवृत्तेरिति । किं चात्र द्व्यञ्जलमिति साधनद्वित्वमुच्यते । द्वयोः कर्त्रोरञ्जल्योरपि द्वित्वात् । न तु देयजलाञ्जलित्वम् । अतो न तन्नित्वैकोत्तरवृद्धिः विधायकशास्त्रविरोध इति सर्वं

समीहितम् । ईदृग्जलं गोत्रमभिधाय गोत्राभिधायं नामग्राहम् 'गोत्रं नाम्नि कुलेऽचले' इति यादवः ॥ "द्वितीयायां च" इति णमुल्प्रत्ययः ॥ "आतो युक्चिण्कृतोः" इति युक् ॥ प्रत्तं दत्तम् । प्रपूर्वाद्ददातेः कर्मणि क्तः ॥ "अच उपसर्गात्तः" इति ददस्तकारादेशः ॥

अरण्ययाने सुकरे पिता मां
प्रायुङ्क्त राज्ये बत दुष्करे त्वाम् ।
मा गाः शुचं वीर भरं वहामु-
माभाषि रामेण वचः कनीयान् ॥ ५१ ॥

५१. अथ रामो राज्याय भरतमनुनयन्नाह अरण्येति ॥ हे वत्स पिता दशरथो मां प्रगल्भमपीति भावः । सुकरेऽरण्ययाने वनवासे प्रायुङ्क्त नियुक्तवान् ॥ "प्रोपाभ्यां युजेः" इत्यात्मनेपदम् ॥ त्वां बालमपीति भावः । दुष्करे राज्ये प्रायुङ्क्त । बतेत्यनौचित्यार्थे । हे धीर धैर्यसंपन्न शुचं मद्वनवासनिमित्तं शोकं मा गाः मा गमः । सुकरत्वात्तस्येति भावः ॥ "इणो गा लुङि" ॥ "न माङ्योगे" ॥ किन्त्वमुं भरं पितृदत्तं राज्यभरं दुर्वहमपीति भावः । भृ भरणे इति धातोः क्र्यादिकात् "ऋदोरप्"। वह संपादय । विधौ लोट् । पित्राज्ञाया दुर्लङ्घ्यत्वादिति भावः । रामेण कनीयाननुज इत्यर्थः ॥ "युवाल्पयोः कनन्यतरस्याम्" इति कनादेशः ॥ पूर्वोक्तमाभाषि भाषितः । ब्रुवेरर्थग्रहणाद्द्विकर्मकत्वम् । 'अप्रधाने दुहादीनाम्' इत्यप्रधाने कर्मणि लुङ् ॥

कृती श्रुती वृद्धमतेषु धीमां-
स्त्वं पैतृकं चेद्वचनं न कुर्याः ।
विच्छिद्यमानेऽपि कुले परस्य
पुंसः कथं स्यादिह पुत्रकाम्या ॥ ५२ ॥

---

१ आरण्य E2.
२ प्रायुक्त D.
३ च सुदुष्करे E1.
४ धीर E1, T., G., Com.
५ वहाशुभार° c.
६ °मभाषि D., T3, T4.

५२. कृतीति ॥ किं च वत्स वृद्धमतेषु ज्ञानवृद्धाचारेषु श्रुतमनेन श्रुती कृतमनेन कृती । तेषां श्रोता अनुष्ठाता चेत्यर्थः ॥ "इष्टादिभ्यश्च" इति इनिप्रत्ययः ॥ "क्तस्येन्विषयस्य कर्मणि सप्तमी वक्तव्या"। धीमान् त्वं पितुरिदं पैतृकम् ॥ "पितुर्यच्च" इति चकाराट्ठञ् ॥ वचनं न कुर्याश्चेत् न पालयेश्चेत् । इह लोके परस्यान्यस्यापि पुंसः कुले विच्छिद्यमानेऽप्युत्साद्यमानेऽपि पुत्रकाम्या आत्मनः पुत्रेच्छा । पुत्रशब्दात्काम्यजन्तादप्रत्यये टाप् । कथं स्यात् न कथंचिदपि स्यादित्यर्थः । अविधेयपुत्रादपि कुलोच्छेद एव वरमिति न कोऽपि पुत्रकामः स्यादिति भावः ॥

अस्माकमुक्तं बहुमन्यसे चे-
द्यदीशिषे त्वं न मयि स्थिते च ।
जिह्रेष्यतिष्ठन्यदि तातवाक्ये
जहीहि[1] शङ्कां व्रज शाधि पृथ्वीम् ॥ ५३ ॥

५३. अस्माकमिति ॥ अस्माकमुक्तमस्मद्वचनं बहु मन्यसे चेत् पितृसमो ज्येष्ठ इति मानयसि चेत् । मयि ज्येष्ठे स्थिते त्वं नेशिषे न प्रभवस्यपि यदि किं तु मत्परतन्त्रोऽसि मदाज्ञाकरोऽसि चेदित्यर्थः । तथा तातवाक्ये पितृशासने अतिष्ठन् अस्थितः सन् जिह्रेषि यदि लज्जसे चेत् । ह्रीलज्जायाम् "श्लौ" इति द्विर्भावः । गुणः । शङ्कामनुशयं जहीहि ॥ "ई हल्यघोः" इतीकारः ॥ व्रजायोध्यां गच्छ पृथ्वीं शाधि पालय ॥ "शा हौ" इति शाभावस्यासिद्धत्वात् "हुझल्भ्यो हेर्धिः" ॥

वृद्धौरसां[2] राज्यधुरां[3] प्रवोढुं
कथं कनीयानहमुत्सहेयं[4] ।
मा[5] मां प्रयुक्थाः[6] कुलकीर्तिलोपे[7]
प्राह स्म रामं भरतोऽपि धर्म्यम् ॥ ५४ ॥

---

१ जहाहि E1.
शङ्कां जहीहि E2.
२ वृद्धोरसे E1.
३ राज्यधुरं T2.
४ °मुत्सहेयम् c., D., T2, T4.
५ मां मा E2.
मा मा B., T2, T4.
६ प्रयुङ्क्था: c., C., T1.
७ कोपे T2, T3, T4.
नाशे E.

५४. अथ भरतो रामं प्रत्याह वृद्धेति ॥ उरसा निर्मितः औरसः उदर्यः पुत्रः॥ "उरसोऽण् च" इत्यण्प्रत्ययः॥ वृद्धो ज्येष्ठ औरसो यस्यास्तां राज्यस्य धुरां राज्यधुराम्॥ "ऋक्पूर्—" इत्यादिना समासान्तोऽप्रत्ययः॥ परवल्लिङ्गतायां स्त्रियां टाप्। प्रवोढुम्॥ "शकधृष—" इत्यादिना तुमुन्॥ "सहिवहोरोदवर्णस्य" इत्योकारः॥ ढत्वादिकार्यम्। कनीयान् कनिष्ठोऽहं कथमुत्सहेय रोचयेय। गर्हितमेतदित्यर्थः॥ "विभाषा कथमि लिङ् च" इति गर्हायां सहेर्लिङि तङि "इटोऽत्"॥ कुलकीर्तिं लुम्पत्युच्छिनत्तीति तल्लोपम्॥ "कर्मण्यण्"॥ तस्मिन्कर्मणि मां मा प्रयुङ्क्थाः मा नियुङ्क्ष्व। युजेर्लुङि तङि सिचि॥ "झलो झलि" इति सिज्लोपः॥ इति भरतोऽपि रामं धर्म्यं धर्मादनपेतं वाक्यम्॥ "धर्मपथ्यर्थन्याय—" इत्यादिना यत्प्रत्ययः॥ प्राह स्म॥ "लट् स्मे" इति भूते लट्॥

ऊर्जस्वलं हस्तितुरङ्गमेत-
दमूनि रत्नानि च राजभाञ्जि।
राजन्यकं चैतदहं क्षितीन्द्र-
स्त्वयि स्थिते स्यामिति[1] शान्तमेतत्॥ ५५॥

५५. ऊर्जस्वलमिति॥ ऊर्क् बलं तद्वदूर्जस्वलम्॥ "ज्योत्स्नातमिस्रा—" इत्यादिना निपातनात्साधुः॥ हस्तितुरङ्गम्॥ सेनाङ्गत्वादेकवद्भावः। एतत् राजभाञ्जि राजार्हाणि रत्नानि चामूनि। राजन्यानां समूहो राजन्यकं चैतदिति पुरोवर्तिनिर्देशः॥ "गोत्रोक्ष—" इत्यादिना वुञ्। त्वयि स्थिते अहं क्षितीन्द्रः स्यामिति एतत्पापं शान्तं निरस्तमस्तु। तदेतदुच्चारणमपि नार्हतीति भावः॥

इति निगदितवन्तं राघवस्तं जगाद
व्रज भरत गृहीत्वा[2] पादुके त्वं मदीये।
च्युतनिखिलविशङ्कः[3] पूज्यमानो जनौघैः
सकलभुवनराज्यं कारयास्मन्मतेन॥ ५६॥

---

१ स्यादिति T2.
२ मदीये पादुके त्वं गृहीत्वा T2, T3, T4, E3.
३ सकलविशङ्कः T2, T4.

५६. इतीति ॥ राघवो रामः इति निगदितवन्तमुक्तवन्तं भरतं जगाद । किमिति । हे भरत त्वं मदीये पादुके गृहीत्वा व्रज गच्छ । च्युतनिखिलविशङ्को निरस्तसमस्तातङ्कः तथा जनौघैः पूज्यमानः सन् अस्मन्मतेनास्मदनुमत्यैव सकलभुवनराज्यं सर्वलोकाधिपत्यं कारय पादुकाभ्यां प्रयोज्याभ्यामित्यर्थः ॥

इति भट्टिकाव्ये प्रकीर्णकाण्डे रामप्रवासो[1] नाम
तृतीयः सर्गः ।

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते भट्टिकाव्यव्याख्याने सर्वपथीनाख्याने तृतीयः सर्गः ॥

---

१ वनगमनो C.

॥ श्रीः ॥

# अथ चतुर्थः सर्गः ।

निवृत्ते भरते धीमानत्रे रामस्तपोवनम् ।
प्रपेदे पूजितस्तस्मिन् दण्डकारण्यमीयिवान् ॥ १ ॥

१. निवृत्त इति ॥ धीमान् पुनः पौराः मा गमन्निति बुद्धिमान् रामः भरते निवृत्ते सति अत्रेरत्रिमहर्षेस्तपोवनं प्रपेदे प्राप्तः । अत्रात्रिवने पूजितः शीताङ्गरागादिना सत्कृतः सन् दण्डकारण्यं दण्डकाख्यवनमीयिवान् प्राप्तः ॥ "उपेयिवान्—" इति क्वस्वन्तनिपातने उपोपसर्गाभ्यासस्यातन्त्रत्वादन्योपसृष्टोऽनुपसृष्टो वा साधुरेव ॥

अटाट्यमानोऽरण्यानीं ससीतः[1] सहलक्ष्मणः ।
बलाद्बुभुक्षुणोत्क्षिप्य जह्रे भीमेन रक्षसा ॥ २ ॥

२. अटाट्यमान इति ॥ सहसीतः सलक्ष्मणः ॥ "तेन सह—" इति बहुव्रीहिः । "वोपसर्जनस्य" इति सहशब्दस्य सभावविकल्पादुभयत्रापि प्रयोगः ॥ अरण्यानीं महारण्यम् । 'कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् । देशश्चाकर्मकाणां च कर्मसंज्ञा भवेदिह' ॥ इति वचनाद्देशस्याप्यरण्यान्याः कर्मत्वम् । "इन्द्रवरुण—" इत्यादिना "हिमारण्ययोर्महत्त्वे" इति ङीपानुगागमश्च ॥ अटाट्यमानो भृशमटन् । यङ्विधाने "सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनामनेकाजहलाद्यर्थमुपसंख्यानम्" इत्यटतेर्यङन्ताल्लटः शानजादेशः ॥ "दीर्घोऽकितः" इत्यभ्यासदीर्घः ॥ रामो बुभुक्षुणा भोक्तुमिच्छुना क्षुधितेनेत्यर्थः । भुजेः सन्नन्तादुप्रत्ययः । बिभ्यत्यस्मादिति भीमेन भयंकरेण रक्षसा विराधाख्येन बलादुत्क्षिप्य ऊर्ध्वं क्षिप्त्वा जह्रे हृतः । यद्यपि सीता हृता न रामः 'स जहार तयोर्मध्ये मैथिलीं लोकशोषणे' इति दर्शनात् । तथापि तद्धरणस्यात्महरणप्रायत्वात्तथाव्यपदेशः ॥

---

१ सहसीतः सलक्ष्मणः T2, T3, T4, T., G., Com. | २ वना° C.

अवाक्शिरसमुत्पादं कृतान्तेनापि दुर्दमम् ।
भङ्क्त्वा भुजौ विराधाख्यं तं तौ भुवि निचख्नतुः ॥ ३ ॥

३. अवागिति ॥ ततस्तौ रामलक्ष्मणौ अवाक्छिरसमधोमस्तकमुत्पाद-मूर्ध्वचरणं कृतान्तेनान्तकेनापि दुर्दमं दुर्हरणं विराधाख्यं तं राक्षसं भुजौ भङ्क्त्वा ॥ "जान्तनशां विभाषा" इति नलोपाभावपक्षे रूपम् । वसुधायां निचख्नतुः निखातवन्तौ । खनतेर्लिट् । तसोऽतुसि "गम-हन—" इत्यादिना उपधालोपः ॥

आंहिषातां रघुव्याघ्रौ शरभङ्गाश्रमं ततः ।
अध्यासितं श्रिया ब्राह्म्या शरण्यं शरणैषिणाम् ॥ ४ ॥

४. आंहिषातामिति ॥ ततो विराधवधानन्तरं रघू लक्षणया तौ राघवौ व्याघ्राविव रघुव्याघ्रौ रघुश्रेष्ठौ । उपमितसमासः । रघुपदस्य जनप-दावाचित्वेन अतद्राजकत्वात् बहुष्वपि तावत्तद्धितलुक् चिन्त्यः द्वयोः का वार्त्ता । तेन लाक्षणिको रघुशब्द इति सुष्ठूक्तं रघू व्याघ्राविवेति । ब्राह्म्या ब्रह्मसंबन्धिन्या वैदिक्या श्रिया । सम्बन्धादणि ङीप् ॥ "ब्राह्मोऽ-जातौ" इति व्यतिरिक्तार्थे निपातनाट्टिलोपः ॥ अध्यासितमधिष्ठितं शरणैषिणां शरणार्थिनाम् । इषेस्ताच्छील्ये णिनिः । शरणे रक्षणे साधुं शरण्यम् । 'शरणं रक्षणे गृहे' इति विश्वः । "तत्र साधुः" इति यत्प्रत्ययः ॥ शरभङ्गनाम्नो मुनेराश्रममांहिषातां गतवन्तौ । अहि गतौ इति धातोर्लुङि तङि सिचीट् । आड्वृद्धिः ॥

पुरो रामस्य जुहवाञ्चकार ज्वलने वपुः ।
शरभङ्गः प्रदिश्यारात् सुतीक्ष्णमुनिकेतनम् ॥ ५ ॥

---

१ दुर्गमम् C., E2, E3.
२ भुजैर्विराधाख्यं विभुवि तंनिचख्नतुः E1.
३ विराधस्य D.
४ ततो T2, T3, T4.
५ आहिषातां E1.
६ प्रति E3.
७ पुरा T3.
८ प्रदर्श्याराात् D., प्रदिश्याशु T2, T4.
९ सुतीक्ष्णस्य निकेतनम् T3.

५. पुर इति ॥ अथ शरभङ्गः आरात्समीपे सुतीक्ष्णस्य मुनेर्निकेतनमाश्रमं प्रदिश्य रामस्य निवासत्वेनादिश्य । स्वाश्रमस्यानन्तरमेव स्वप्रयाणे शून्यभावित्वादिति भावः । रामस्य पुरः वपुः स्वशरीरं ज्वलने अग्नौ जुहवांचकार आजुहाव ॥ "भीह्रीभृहुवां श्लुवच्च" इति विकल्पादाम्प्रत्ययः ॥ श्लुवत्कार्यं द्विर्भावश्च ॥

यूयं समेष्यथैतस्मिन्नासिष्महि वयं वने ।
दृष्टाः स्थ स्वस्ति वो यामः स्वपुण्यविजितां गतिम् ॥ ६ ॥

६. यूयमिति ॥ हे राघव यूयं तेषां त्रित्वाद्बहुवचनम् । समेष्यथ समागमिष्यथ । समाङ्पूर्वादिणो लृट् ॥ "एत्येधत्यूठ्सु" इति वृद्धिः ॥ इति हेतोर्वयम् ॥ "अस्मदो द्वयोश्च" इति चकारादेकत्वे बहुवचनम् ॥ अस्मिन्वने आसिष्महि आस्थाम । आसेर्लुङि महिङि सिचीट् । स्थितिफलं च सिद्धमित्याह । यूयं दृष्टाः स्थ भवथ । साक्षाद्विष्णुसाक्षात्कारात्कृतार्थोऽस्मीति । अस्तेर्लटि थे ॥ "श्नसोरल्लोपः" ॥ वो युष्मभ्यम् ॥ "बहुवचनस्य वस्नसौ" ॥ स्वस्ति कल्याणम् ॥ "नमःस्वस्ति—" इत्यादिना चतुर्थी ॥ स्वपुण्यविजितां स्वधर्मार्जितां गतिं लोकं यामो यास्यामः । वर्त्तमानसामीप्ये लट् । इति चोक्त्वाजुहावेति योज्यम् ॥

तस्मिन्कृशानुसाद्भूते सुतीक्ष्णमुनिसंनिधौ ।
उवास पर्णशालायां भ्रमन्ननिशमाश्रमान् ॥ ७ ॥

७. तस्मिन्निति ॥ तस्मिन् शरभङ्गे कृशानुसाद्भूते भस्मीभूते सतीत्यर्थः ॥ "विभाषा साति कार्त्स्न्ये" इति सातिप्रत्ययः ॥ अनिशमाश्रमान् भ्रमन् संरक्षणार्थमाश्रमेषु पर्यटन् । 'देशश्चाकर्मकाणाम्' इति वचनादाश्रमाणां कर्मत्वम् । सुतीक्ष्णमुनिसंनिधौ पर्णशालायामुवास उषितवान् । वसेर्लिटि "लिट्यभ्यासस्योभयेषाम्" इत्यभ्यासस्य संप्रसारणम् ॥

---

१ समेष्यथे° T3, E1.
२ सुपुण्य° D. सपुण्य° E2.

T3, and T4, omit 6th verse and the 1st half of the 7th.

वनेषु वासतेयेषु निवसन् पर्णसंस्तरे[1] ।
शय्योत्थायं मृगान्विध्यन्नातिथेयो विचक्रमे ॥ ८ ॥

८. वनेष्विति ॥ वसतौ साधुषु वासतेयेषु वसतियोग्येषु वनेषु ॥ "पथ्यतिथिवसतिस्वपतेर्ढञ्" ॥ संस्तीर्यते इति संस्तरः तल्पम् ॥ "ऋदोरप्" ॥ तस्मिन् पर्णानां संस्तरे पर्णतल्पे निवसन् निषीदन् । शेरतेऽस्यामिति शय्या ॥ "संज्ञायां समज—" इत्यादिना क्यप् ॥ तस्याः सत्वरमुत्थाय शय्योत्थायम् ॥ "अपादाने परीप्सायाम्" इति णमुल् । युक् । परीप्सा त्वरा । मृगान्विध्यन् प्रहरन् । व्यधेः शतरि "ग्रहिज्या—" इत्यादिना संप्रसारणम् । अतिथिषु साधुरातिथेयः सन् । न तु कुक्षिंभरिः सन्नित्यर्थः । वासतेयवत् ढञ् । विचक्रमे विचचार ॥ "वेः पादविहरणे" इत्यात्मनेपदम् ॥

ऋग्यजुषमधीयानान् सामन्यांश्च[2] समर्चयन् ।
बुभुजे देवसात्कृत्वा शूल्यमुख्यं च होमवान् ॥ ९ ॥

९. ऋग्यजुषमिति ॥ सः रामः शूले काष्ठाग्रे उखायां स्थाल्यां संस्कृतं मांसं शूल्यमुख्यं च ॥ "शूलोखाद्यत्" ॥ देवसात् देवाधीनं देयं देवसात्कृत्वा ॥ "देये त्रा च" इति चकारात्सातिप्रत्ययः ॥ होमवान् नित्यहोमी सन् । ऋचश्च यजूंषि च ऋग्यजुषमधीयानान् सामन्यांश्च सामाध्येतॄंश्चेत्यर्थः ॥ "तत्र साधुः" इति यत्प्रत्ययः ॥ समर्चयन् मांसेन सम्मानं कुर्वन् बुभुजे भुक्तवान् ॥ "भुजोऽनवने" इति तङ् ॥ देवब्राह्मणहुतशिष्टं भुङ्क्ते नात्मार्थम् । 'न पचेदन्नमात्मनः' इति निषेधादिति भावः ॥

वसानस्तन्त्रकनिभे सर्वाङ्गीणे[3] तरुत्वचौ ।
काण्डीरः खाड्गिकैः[4] शार्ङ्गी रक्षन् विप्रांस्तनुत्रवान् ॥ १० ॥

---

१ शयानः पर्णसंस्तरे T₂, T₄.
निवसन् पर्णसंस्तरे E₁, T., G., Com.
२ सामगांश्च E₃.
३ सर्वाङ्गीने N., C., T., c., D., B., E₃.
४ खाड्गिकः T₃, T, G, Com.

१०. अथ युग्मेनाह वसान इति॥ तन्त्रात् तन्तुवायपरिच्छेदादचिरापहृतस्तन्त्रपटस्तन्त्रकं प्रत्यग्रपटः॥ "तन्त्रादचिरापहृते" इति कन्प्रत्ययः। 'तन्त्रः स्वराष्ट्रचिन्तायां तन्तुवायपरिच्छदे' इति यादवः। तन्निभे तत्तुल्ये। सर्वाङ्गं व्याप्नुत इति सर्वाङ्गीणे॥ "तत्सर्वादेः—" इत्यादिना खप्रत्ययः। तरुत्वचौ वल्कले वसानः आच्छादयन्। वस आच्छादने शानच्। काण्डीरः बाणवान्। 'काण्डोऽस्त्री दण्डबाण—' इत्यमरः॥ "काण्डाण्डादीरन्नीरचौ" इति मत्वर्थीय ईरन्प्रत्ययः॥ खङ्गिकः खङ्गी। मत्वर्थीयःष्ठन्। खाङ्गिक इति पाठे "प्रहरणम्" इति ठक्। शार्ङ्गी धन्वी। मत्वर्थीय इनिः। तनुं त्रायत इति तनुत्रम्॥ "आतोऽनुपसर्गे कः"॥ तद्वान् कवची विप्रान् रक्षन्॥

हित्वाशितङ्गवीनानि फलैर्येष्वाशितम्भवम्[१]।
तेष्वसौ दन्दशूकारिर्वनेष्वानभ्र निर्भयः॥ ११॥

११. हित्वेति॥ दन्दशूकानां हिंस्राणामरिः॥ "यजजप—" इत्यादिना उकञ् प्रत्ययः॥ असौ रामः। आशिताः आशितवत्यो गावः एष्विति आशितङ्गवीनानि गोभक्षितकुशपलालादिकानि इत्यर्थः॥ "अषडक्षाशितङ्ग्वलंकर्म—" इत्यादिना स्वार्थे खप्रत्ययः॥ एतस्मादेव निपातनात्पूर्वपदस्य मुमागमः। तानि हित्वा। येषु वनेषु फलैराशितानामाशितवतां च भवनमाशितम्भवं मृष्टाशित्वं संभवतीति शेषः॥ "आशिते भुवः करणभावयोः" इति भावे खच्॥ मुमागमः। तेषु वनेषु निर्भयः सन् आनभ्र बभ्रामेत्यर्थः। अभ्र गतौ इति धातोर्लिट्॥ "अजादेः—" इति द्वित्वे "अत आदेः" इत्यभ्यासदीर्घः॥ "तस्मान्नुड् द्विहलः" इति नुडागमः॥ रिक्तानि वनानि हित्वा पूर्णेषु विजहारेत्यर्थः॥

व्रातीनव्यालदीप्रास्त्रैः[१] सुत्वनः[२] परिपूजयन्।
पर्षद्वलान्[३] महाब्रह्मैराट[४] नैकटिकाश्रमान्॥ १२॥

१ दीता° E1, E2.
२ सुन्वतः E2.
३ परिषद्वलान् E1, E2, noticed also by c, C, T1.
४ ब्राह्मै° T2, T4.

१२. व्रातीनेति ॥ नानाजातीयाः अनियतवृत्तयः उत्सेधजीविनो व्राताः तत्कर्म व्रातं तेन जीवन्तीति व्रातीनाः ॥ "व्रातेन जीवति" इति खञ्प्रत्ययः ॥ तेषां स्वशरीरायासजीविनां वनवर्त्तिनां ये व्यालाः हिंस्राः तेषु दीप्तास्त्रः तीक्ष्णास्त्रः सन् । सुन्वन्ति सोममिति सुत्वानः सोमसुतः सोमयाजिनः ॥ "सुयजोर्ङ्वनिप्" ॥ तुगागमः । तान् सुत्वनः ॥ "न संयोगाद्वमन्तात्" इत्यल्लोपनिषेधः ॥ तान् सुत्वनः परिपूजयन् सत्कुर्वन् । महान्तो ब्रह्माणो महाब्रह्माः महाब्राह्मणाः ब्राह्मणोत्तमाः ॥ "कुमहद्भ्यामन्यतरस्याम्" इति समासान्तष्टच् ॥ तैर्महाब्रह्मैः । परितः सीदन्तीति परिषत् सभा । क्विप् । 'पर्षत्त्रैविध्यमेव' इत्यादिप्रयोगः इकारपरिहारेण पर्षदित्यप्युच्यत इति गमयितव्यः । तथा च पर्षद्वलान् पर्षद्वतः उत्तमब्राह्मणसभावत इत्यर्थः ॥ "रजःकृष्यासुतिपरिषदो वलच्" इति मत्वर्थीयो वलच्प्रत्ययः । निकटे वर्त्तिनो नैकटिकाः तेषां तान् वा आश्रमान् आट तेषु विचचारेत्यर्थः । 'देशश्चाकर्मकाणाम्' इति वचनात् आश्रमाणां कर्मत्वम् । अटेर्लिट् ॥ "अत आदेः" इत्यभ्यासदीर्घः ॥

परेद्यव्यद्य पूर्वेद्युरन्येद्युश्चापि चिन्तयन् ।
वृद्धिक्षयौ मुनीन्द्राणां प्रियम्भावुकतामगात् ॥ १३ ॥

१३. परेद्यवीति ॥ परस्मिन्नहनि परेद्यवि । अस्मिन्नहन्यद्य । पूर्वस्मिन्नहनि पूर्वेद्युः । अन्यस्मिन्नहनि अन्येद्युश्चापि सर्वदा इत्यर्थः ॥ "सद्यः परुत्—" इत्यादिना निपातनात्सर्वत्र साधुत्वम् ॥ "तद्धितश्चासर्वविभक्तिः" इत्यव्ययत्वम् । मुनीन्द्राणां वृद्धिक्षयौ हानिवृद्धी चिन्तयन् ध्यायन् प्रियम्भावुकतां तेषामेव प्रियीभूतत्वम् ॥ "आढ्यसुभग—" इत्याद्यनुवृत्तौ "कर्त्तरि भुवः खिष्णुच्खुकञौ" इत्यभूततद्भावे कर्त्तरि खुकञ् प्रत्ययः । मुमागमः । अगात् प्राप्तः । सर्वदा तद्योगक्षेमानुसन्धानात् तेषामहरहरतिप्रियोऽभूदित्यर्थः ॥

---

१ परेद्युरद्य E1.

आतिष्ठद्गु जपन्सन्ध्यां प्रक्रान्तामायतीगवम् ।
प्रातस्तरां पतत्रिभ्यः प्रबुद्धः प्रणमन् रविम्[१] ॥ १४ ॥

१४. आतिष्ठद्गिति ॥ रामः पतत्रिभ्यः कुक्कुटादिपक्षिभ्यः प्रातस्तरामतिप्रभाते ततोऽप्यत्यन्तपूर्वकाले प्रबुद्धः सन् ॥ "पञ्चमी विभक्ते" इति पञ्चमी ॥ प्रातस्तरामित्यव्ययादाम्प्रत्ययः । आयत्यो दोहाय गोचरादागच्छन्त्यो गावो यस्मिन्काले स काल आयतीगवम् । तिष्ठद्गुप्रभृतित्वादव्ययीभावः । तस्मिन्काले ॥ "तृतीयासप्तम्योर्बहुलम्" इति सप्तम्या अम्भावः । प्रक्रान्तां प्रवृत्ताम् । सम्यक् ध्यायन्ते अस्यामिति सन्ध्या ॥ "आतश्चोपसर्गे" इति अङ्प्रत्ययः ॥ रात्रिन्दिवं सन्धौ भवा वा सन्ध्या । भवार्थे यत्प्रत्ययः । तां तस्यामित्यर्थः । अत्यन्तसंयोगे द्वितीया । तिष्ठन्ति गावो यस्मिन्दोहायेति तिष्ठद्गु ॥ 'तिष्ठद्गुप्रभृतीनि च" इत्यव्ययीभावनिपातनात्साधुः । तत्पर्यन्तमातिष्ठद्गु ॥ "आङ् मर्यादाभिविध्योः" इति पुनरव्ययीभावः ॥ जपन् गायत्रीजपं कुर्वन् रविं प्रणमन् । अपररात्रे आयतीगवकालमारभ्य तिष्ठद्गुकालपर्यन्तं तिष्ठन्नेव सावित्रीं जपन् सूर्योदये तं प्रणतः । 'जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् । संध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्यदर्शनात्' ॥ इति स्मरणादिति भावः ॥

ददृशे पर्णशालायां राक्षस्याभीकया[२]ऽथ सः ।
भार्योढं तमवज्ञाय तस्थे सौमित्रयेऽसकौ[३] ॥ १५ ॥

१५. ददृशे इति ॥ अथ सूर्योपस्थानानन्तरं स रामः पर्णशालायामभीकया कामुकया ॥ "अनुकाभिकाभीकः कमिता" इति निपातः ॥ राक्षस्या रावणावरजया कामरूपिण्या शूर्पणखया ददृशे दृष्टः । कर्मणि लिट् । असका कुत्सिता असौ राक्षसी ॥ "अव्ययसर्वनाम्नामकच् प्राक्

१ प्राणमद्रविम् D.
B. adds युग्मम् after the 14th verse.

२ °भिकया C.
३ °सका T., G., Com.

टेः" ॥ भार्योढमूढभार्यम् ॥ "वाहिताग्न्यादिषु" इति निष्ठायाः परनिपातः ॥ तं राममवज्ञाय सापत्न्यादवधीर्य सौमित्रये लक्ष्मणाय ॥ "श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः" इति संप्रदानत्वाच्चतुर्थी ॥ तस्थे स्वाभिप्रायं प्रकाशयन्ती स्थिता । तिष्ठतेः कर्मकर्त्तरि लिट् ॥ "प्रकाशनस्थेयाख्ययोश्च" इति प्रकाशने तङ् ।

दधाना वलिभं मध्यं कर्णजाहविलोचना ।
वाक्त्वचेनातिसर्वेण चन्द्रलेखेव पक्षतौ ॥ १६ ॥

१६. अथास्या रूपं वर्णयति श्लोकत्रयेण दधानेत्यादिना ॥ वलिभं त्रिवलीमत् ॥ "तुन्दिवलिवटेर्भः" इति मत्वर्थीयो भप्रत्ययः । मध्यमवलग्नं दधाना । कर्णयोर्मूले कर्णजाहे ॥ "तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ" इति जाहच्प्रत्ययः ॥ तयोर्विलोचने यस्याः सा कर्णजाहविलोचना कर्णान्तलोचनेत्यर्थः ॥ सप्तमीपूर्वपदो बहुव्रीहिः । अतिक्रान्तेन सर्वमतिसर्वेण सर्वोत्कृष्टेनेत्यर्थः ॥ "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समासः ॥ "एकविभक्ति चापूर्वनिपाते" इति प्रतिषेधात् उपसर्जनस्यापि सर्वशब्दस्य न पूर्वनिपातः । वाक् च त्वक् च वाक्त्वचम् । प्राण्यङ्गत्वादेकवद्भावः ॥ "द्वन्द्वाच्चुदषहान्तात्समाहारे" इति टच्प्रत्ययः । तेनोपलक्षिता । इत्थंभूतलक्षणे तृतीया । मृदुभाषिणी मृद्वङ्गी चेत्यर्थः । पक्षतौ पक्षमूले प्रतिपादि चन्द्रलेखेव स्थितेत्युपमालंकारः ॥ "पक्षात्तिः" इति तिप्रत्ययः । 'पक्षतिर्गरुतो मूले द्वयोः प्रतिपदोरपि' इति यादवः ॥

सुपाद् द्विरदनासोरूर्मृदुपाणितलाङ्गुलिः ।
प्रथिमानं दधानेन जघनेन घनेन सा ॥ १७ ॥

१७. सुपादिति ॥ शोभनौ पादौ यस्याः सा सुपात् ॥ "संख्यासुपूर्वस्य" इति समासान्तलोपः ॥ "पादोऽन्यतरस्याम्" इति विकल्पादनीकारः । द्विरदनासा करिकर इव उरू यस्याः सा द्विरदनासोरूः

तद्वद्वृत्तानुपूर्वोरुरित्यर्थः ॥ "ऊरूत्तरपदादौपम्ये" इत्यूङ् प्रत्ययः । मदुनी पाणितले अङ्गुलयश्च यस्याः सा तथोक्ता । नपुंसकैकशेषपूर्व-पदो बहुव्रीहिः । तलशब्दस्याप्राण्यङ्गवाचित्वात् न द्वन्द्वैकवद्भावः । अङ्गुलिशब्दस्याल्पाच्तरत्वेऽपि पूर्वनिपातव्यभिचारः । "समुद्राभ्राद्धः" इति सौत्रव्यभिचारलिङ्गात् । प्रथिमानं दधानेन पृथुलेन घनेन निबि-डेन जघनेन उपलक्षिता सा राक्षसी तस्थे इति पूर्वेण सम्बन्धः ॥

उन्नसं दधती वक्त्रं शुद्धदल्लोलकुण्डलम् ।
कुर्वाणा पश्यतः शंयून् स्रग्विणी सुहसानना ॥ १८ ॥

१८. उन्नसमिति ॥ उन्नसमुन्नतनासिकम् ॥ "उपसर्गाच्च" इति नसा-देशः ॥ शुद्धाः शुभ्राः दन्ताः यस्य तत् शुद्धदत् ॥ "अग्रान्तशुद्ध—" इत्यादिना दत्रादेशः ॥ लोलकुण्डलं वक्त्रं दधती पश्यतः प्रेक्षमाणान् जनान् । शं सुखमेषामस्तीति शंयून् सानन्दान् कुर्वाणा ॥ "कंशंभ्यां बभयुस्तितुतयसः" इति युस्प्रत्ययः ॥ स्रग्विणी माल्यवती ॥ "अस्मा-यामेधास्रजो विनिः" ॥ सुहसं सुस्मितमाननं यस्याः सा ॥ "स्वनह-सोर्वा" इति विकल्पादप्प्रत्ययः ॥

प्राप्य चञ्चूर्यमाणासौ[2] पतीयन्ती रघूत्तमम् ।
अनुका प्रार्थयाञ्चक्रे प्रियांकर्तुं[3] प्रियंवदा ॥ १९ ॥

१९. प्राप्येति ॥ अनुका कामुकी ॥ "अनुकाभिक—" इत्यादिना निपातः ॥ अत एव पतीयन्ती पतिमात्मन इच्छन्ती ॥ "सुप आत्मनः क्यच्" ॥ "अकृत्सार्वधातुकयोर्दीर्घः" ॥ शतरि ङीप् । चञ्चूर्यमाणा इतस्ततो गर्हितं चरन्ती ॥ "लुपसद—" इत्यादिना भावगर्हायां चरे-र्यङि "चरफलोश्च" इत्यभ्यासस्य नुक् ॥ "उत्परस्यातः" इत्युत्वम् ॥ "र्वोरुपधाया दीर्घ इकः" ॥ "हलि च" इति दीर्घः । रघूत्तमं लक्ष्मणं प्राप्य प्रियं वदतीति प्रियंवदा सती ॥ प्रियवशे वदः खचि मुमागमः ।

१ शुक्र T2.
२ °सा T3, T4.
३ प्रियां कर्तुं E3.

प्रियाकर्त्तुमनुलोमयितुमित्यर्थः ॥ "सुखप्रियादानुलोम्ये" इति डाच् ॥ प्रार्थयाञ्चक्रे प्रार्थितवती ॥ "कास्प्रत्ययाद्—" इत्याम्प्रत्ययः ॥

सौमित्रे मामुपायंस्थाः कम्रामिच्छुर्वशंवदाम् ।
स्वभोगीनां सहचरीमशङ्कः पुरुषायुषम् ॥ २० ॥

२०. प्रार्थनाप्रकारमेवाह सौमित्रे इति ॥ सौमित्रे कम्रां कामयित्रीम् । 'कम्रः कामयिताभीकः' इत्यमरः ॥ "नमिकम्पि—" इत्यादिना रप्रत्ययः ॥ वशंवदां वशवर्त्तिनीम् ॥ "प्रियवश—" इत्यादिना वदेः खच् ॥ मुमागमः । स्वभोगाय हितां स्वभोगीनाम् ॥ "आत्मन्विश्वजनभोग—" इत्यादिना खप्रत्ययः ॥ चरतीति चरी । 'पचादिषु चरट्' इति टित्करणात् ङीप् । तेन सहशब्दस्य "सुप्सुपा" इति समासः ॥ केचित्तु सहचरतीति सहचरी ॥ "भिक्षासेनादायेषु च" इति चकाराट्टप्रत्यय इत्याहुः । तां सहचरीं सर्वानुगामिनीमित्यर्थः । ईदृशीं मामिच्छुरभिलाषुकः सन् ॥ "विन्दुरिच्छुः" इति निपातः ॥ "न लोक—" इत्यादिना षष्ठीप्रतिषेधः ॥ पुरुषस्यायुः पुरुषायुषं यावज्जीवम् ॥ "अचतुर—" इति निपातः ॥ अत्यन्तसंयोगे द्वितीया । उपायंस्थाः उपयच्छस्वेत्यर्थः ॥ "उपाद्यमः स्वकरणे" इत्यात्मनेपदम् ॥ स्वकरणं विवाहः ॥ "आशंसायां भूतवच्च" इति भूतवत्प्रत्ययो लुङ् ॥ "विभाषोपयमने" इति पक्षे कित्वाभावान्नानुनासिकलोपः ॥

तामुवाच स गौष्ठीने वने स्त्रीपुंसभीषणे ।
असूर्यंपश्यरूपा त्वं किमभीरुरराय्यसे ॥ २१ ॥

२१. तामिति ॥ लक्ष्मणस्तां राक्षसीमुवाच किमित्यपेक्षिते सप्तभिराह । अयि मुग्धे । न सूर्यं पश्यतीत्यसूर्यंपश्या सूर्यकिरणासंस्पृष्टेत्यर्थः ॥ "असूर्यललाटयोर्दृशितपोः" इत्यसूर्यशब्दोपपदात् दृशेः खश्प्रत्यये मुमागमः ॥ "पाघ्रा—" इत्यादिना दृशेः पश्यादेशः ॥ असूर्यंपश्येत्यस-

१ °स्यास्त्वं मामिच्छु° T₄.

२ स्वङ्गोगीनां T₃, D., N., सुभोगीनां B., c., E₂.

मर्थसमासोऽयं इशिना नञः संबन्धात्। अन्यथा अविवक्षितार्थप्रसंगात्। तथापि गमकत्वादिष्यते। एतद्रूपा कोमलाङ्गी त्वं भूतपूर्वे गोष्ठे गौष्ठीने इदानीं व्यालाक्रान्ते। 'गौष्ठीनं भूतपूर्वकम्' इत्यमरः॥ "गोष्ठात्खञ् भूतपूर्वे" इति खञ्प्रत्ययः॥ स्त्री च पुमांश्च स्त्रीपुंसौ मिथुनम्॥ "अचतुर—" इत्यादिना निपातः॥ तयोर्भीषणम्। स्तनादिवज्जातौ द्विवचनम्। तद्बहुत्वस्येहाविवक्षितत्वात्। द्वन्द्वान्तेन समासैकशेषेण स्त्रीपुंसानां भीषणमिति किमु वक्तव्यमिति भावः। नन्द्यादिल्युप्रत्ययान्तः। कर्त्तरि ल्युडिति व्याख्याने 'भीषणां तामयोजयत्' इति टाबन्तप्रयोगविरोधः। तस्मिन्वने किं किमर्थमभीरुरभीता सती॥ "भियः क्रुक्लुकनौ" इति क्रुप्रत्ययः॥ अरार्यसे अटाट्यसे। ऋ गतौ॥ "सूचिसूत्रि—" इत्यादिना यङ्॥ "यङि च" इत्यर्त्तेर्गुणः॥ "न न्द्राः—" इति प्रतिषेधापवादेन सरेफस्यैव द्वितीयैकाचो द्विर्भावे हलादिशेषे "दीर्घोऽकितः" इत्यभ्यासदीर्घः॥

मानुषानभिलष्यन्ती रोचिष्णुर्दिव्यधर्मिणी।
त्वमप्सरायमाणेह स्वतन्त्रा कथमञ्चसि॥ २२॥

२२. मानुषानिति॥ दिव्यानां देवतानां धर्माः रूपलावण्यादयः तद्वती तद्धर्मिणी। अत एवाप्सरा इवाचरन्तीत्यप्सरायमाणा अप्सरःकल्पा॥ "कर्त्तुः क्यङ् सलोपश्च" इति क्यङन्ताल्लटः शानजादेशः। 'ओजसोऽप्सरसोनित्यम्' इति नित्यं सलोपः। त्वमिहारण्ये स्वतन्त्रा एकाकिनी मानुषान् नीचानिति भावः अभिलष्यन्ती अभिलषन्ती॥ "वा भ्राश—" इत्यादिना श्यन्वा॥ कथमञ्चसि अटसि॥

उग्रम्पश्याकुलेऽरण्ये शालीनत्वविवर्जिता।
कामुकप्रार्थनापद्वी पतिवत्नी कथं न वा॥ २३॥

२३. उग्रम्पश्येति॥ उग्रं पश्यन्तीत्युग्रंपश्याः हिंस्राः॥ "उग्रम्पश्येरम्मदपाणिन्धमाश्च" इति निपातः॥ तैराकुले सङ्कीर्णेऽरण्ये शालीन-

१ मनुष्या T₄.

त्वविवर्जिता अधार्ष्ट्यरहिता धृष्टा सतीत्यर्थः ॥ "शालीनकौपीने अधृष्टाकार्ययोः" इति अधार्ष्ट्यं शालाशब्दात्खञन्तो निपातः ॥ कामुकः कामी ॥ "लषपत—" इत्यादिना उकञ्प्रत्ययः ॥ तस्य प्रार्थनासु अनुनयेषु पट्वी चतुरा त्वम् । पतिरस्या अस्तीति पतिवत्नी जीवत्पतिकेत्यर्थः ॥ "अन्तर्वत्पतिवतोर्नुक्" इति गर्भभर्तृसंयोगे निपातनादर्थविशेषलाभः । मतोर्वत्वं निपात्यते । अत्र सूत्रे उगित्वादेव ङीप्सिद्धिः । 'अन्तर्वत्पतिवतोर्नुक् मतुब्वत्वे निपातनात् । गर्भिण्यां जीवत्पत्न्यां च वा च च्छन्दसि नुग्विधिः' ॥ इति वचनात् । कथं न वा कथं न किमित्यर्थः । पतिवत्न्याः कथमयं कामचार इति भावः ॥

राघवं पर्णशालायामिच्छानुरहसं पतिम् ।
यः स्वामी मम कान्तावानौपकर्णिकलोचनः ॥ २४ ॥

२४. राघवमिति ॥ अथ सर्वथा पतिं वरयसि चेत् अनुरहसं रहसि ॥ "अन्ववतप्ताद्रहसः" इत्यच् समासान्तः ॥ पर्णशालायां राघवं रामं पतिमिच्छ वृणुष्वेत्यर्थः । अथ प्ररोचानार्थं सार्धश्लोकत्रयेण रामं स्तौति । यो रामो ममापि स्वामी ईशिता संभवति राजसम्बन्धेनेति भावः ॥ "स्वामिन्नैश्वर्ये" इति निपातः ॥ कान्तावान् रागीति भावः । सौन्दर्यादिगुणाढ्यश्चायमित्याह । उपकर्णमिति समीपार्थेऽव्ययीभावः । तत्र प्रायभवे औपकर्णिके ॥ "उपजानूपकर्ण—" इति ठक् ॥ उपकर्णादयस्त्रयः सामीप्ये । ते लोचने यस्य सः । कर्णान्तविश्रान्तलोचन इत्यर्थः ॥

वपुश्चान्दनिकं यस्य[1] कार्णवेष्टनिकं[2] मुखम् ।
संग्रामे सर्वकर्मीणौ पाणी[3] यस्यौपजानुकौ ॥ २५ ॥

२५. वपुरिति ॥ यस्य वपुश्चन्दनेन संपाद्यवश्यं संपन्नमुत्कृष्टं भवतीति चान्दनिकम् । मुखं कर्णवेष्टनाभ्यां कुण्डलाभ्यां संपादि कार्णवेष्टनिकम् ॥

---

१ पश्य E1.
२ कार्णवेष्टकिकं N., D., E1, E2, E3.
३ बाहू E2.

उभयत्रापि "संपादिनि" इति ठञ् ॥ यस्य पाणी संग्रामे सर्वाणि कर्माणि धनुराकर्षणादीनि व्याप्नुतः इति सर्वकर्माणौ सर्वकर्मक्षमावित्यर्थः ॥ "तत्सर्वादेः—" इत्यादिना खप्रत्ययः ॥ उपजानु जानुसमीपे भवौ औपजानुकौ आजानुलम्बिनावित्यर्थः । एतेन शौर्यभाग्यसंपत्तिरुक्ता ॥ "उपजानू—" इत्यादिनैव ठक् ॥ "इसुसुक्तान्तात्कः" ॥

बद्धो दुर्बलरक्षार्थमसिर्येनौपनीविकः ।
यश्चापमाश्मनप्रख्यं सेषुं धत्तेऽन्यदुर्वहम् ॥ २६ ॥

२६. बद्ध इति ॥ येन रामेण असिः दुर्बलानां रक्षार्थं दुर्बलघातुकशिक्षार्थं न तु दुर्बलघातार्थमित्यर्थः । उपनीवि नीवीसमीपे भवः औपनीविकः । स एव ठक् । बद्धः कटिनिबद्ध इत्यर्थः । यो रामः अश्मैव आश्मनम् । स्वार्थेऽण्प्रत्ययः । "अश्मनो विकारे उपसंख्यानम्" इति विकारे एव टिलोपविधानान्न टिलोपः । प्रख्याति प्रकाशयति इति प्रख्यं सदृशम् । 'प्रख्यप्रतिनिधी अपि' इति सदृशार्थेषु दण्डी ॥ "आतश्चोपसर्गे" इत्यङ् प्रत्ययः ॥ आश्मनप्रख्यमश्मवद् दृढमित्यर्थः । सेषुं सबाणमन्यैर्दुर्वहं चापं धत्ते । महाधानुष्क इत्यर्थः ॥

जेता यज्ञद्रुहां संख्ये धर्मसन्तानसूर्वने ।
प्राप्य दारगवाणां यं[3] मुनीनामभयं सदा ॥ २७ ॥

२७. जेतेति ॥ संख्ये युद्धे । यज्ञेभ्यो द्रुह्यन्तीति यज्ञद्रुहो राक्षसाः ॥ "सत्सूद्विष—" इत्यादिना क्विप्प्रत्ययः ॥ तेषाम् । कर्मणि षष्ठी । जेता । तृच् । अत एवात्र धर्मसन्तानं धर्मपरंपरां सूते इति तत्सूः निरन्तरधर्मकारीत्यर्थः । पूर्ववत्क्विप् । किं च यं रामं प्राप्य शरणमासाद्य मुनीनां वानप्रस्थानां तेषां धाराग्निपरिग्रहसंभवात् । शेषषष्ठीयम् । दाराश्च गावो होमधेनवश्च दारगवम् ॥ "अचतुर—" इत्यादिना निपातः । दारगवाणामिति कर्मणि षष्ठी ॥ "कुमति च" इति णत्वम् ॥ मुनिबहुत्वे

१ "यस्यैव" T2, T3, T4.
२ दारगवादीनां c. दारगवानां यो T4, दारगवानां यं N., C., T1, T2, T3, B., D., E1, E2, E3.
३ तं T3.

तद्धेतुत्वात् ॥ "सरूप—" इत्येकशेषः ॥ सदा अभयं भयवर्जनमत्र-सनमिति प्राप्त्यभययोः समानकर्तृकता ॥

ततो वावृत्यमानासौ रामशालां न्यविक्षत ।
मामुपायंस्त रामेति वदन्ती सादरं वचः ॥ २८ ॥

२८. तत इति ॥ ततो लक्ष्मणवाक्यानन्तरमसौ राक्षसी वावृत्यमाना रामं वृण्वाना वरिष्यन्ती सतीत्यर्थः । वर्त्तमानसामीप्ये वर्त्तमानवत्प्रत्ययः । वावृतु वरणे इति धातोर्दैवादिकात्कर्त्तरि लटः शानच् । हे राम मामुपायंस्त परिणयतु भवान् । शेषविवक्षायां प्रथमपुरुषः ॥ "उपाद्यमःस्वकरणे" इत्यात्मनेपदम् ॥ इति सादरं वचः वदन्ती रामस्य शालां न्यविक्षत ॥ "शल इगुपधादनिटः क्सः" ॥

अस्त्रीकोऽसावहं स्त्रीमान् स पुष्यतितरां[1] तव ।
पतिरित्यब्रवीद्रामस्तमेव[2] व्रज मा मुचः ॥ २९ ॥

२९. अस्त्रीक इति ॥ असौ लक्ष्मणः अस्त्रीकः अविद्यमानभार्यः ॥ "नद्यृतश्च" इति कप् ॥ "न कपि" इति केऽणो ह्रस्वप्रतिषेधः । तस्यैव सन्निहितत्वात् । उपसर्जनह्रस्वस्य स्त्रीप्रत्ययान्तविषयस्य इह समासार्थोपपद एव कपि सति पश्चात्समासे कबन्तप्रातिपदिकस्य स्त्रीप्रत्ययान्तत्वाभावादेव निवृत्तेरिति । अहं स्त्रीमान् सभार्यः । प्रशंसायां मतुप् । स एव तव पतिर्भर्त्ता भविष्यतितरां सम्पत्स्यतेतरामित्यर्थः ॥ "किमेत्तिङ—" इत्यादिना तिङ आम्प्रत्ययः ॥ तं लक्ष्मणमेव व्रज गच्छ । मा मुचः न त्यज । मुचेर्लुङि लृदित्वादङ् ॥ "न माङ्योगे" ॥ इति तां रामोऽब्रवीत् ॥

लक्ष्मणं सा वृषस्यन्ती महोक्षं गौरिवागमत्[3] ।
मन्मथायुध[4]सम्पातव्यथ्यमानै[5]र्मतिः[6] पुनः ॥ ३० ॥

---

१ भविष्यतितरां T., G., Com.
२ 'वदद्राम' E1.
३ तद्वदागमत् D.
४ कुसुमायुध B.
५ व्यथमान T., G., Com.
६ मतिस्ततः T3., T4., Com.

३०. लक्ष्मणमिति ॥ ततो रामवाक्यानन्तरं । वृषमात्मन इच्छतीति वृषस्यन्ती ॥ "सुप आत्मनः क्यच्" ॥ ततो लटः शतरि ङीप् ॥ "अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि" इत्यसुगागमः ॥ "अश्ववृषयोर्मैथुनेच्छायाम्" । अत एव मन्मथायुधसंपातेन मदनशरपातेन व्यथमानमतिः दूयमानमानसा राक्षसी । महानुक्षा महोक्षः महावृषभः । अचतुरादिना निपातः । तं गौरिव लक्ष्मणमगमत् आससाद ॥

तस्याः सासद्यमानाया लोलूयावान्रघूत्तमः ।
असिं कौक्षेयमुद्यम्य[1] चकारापनसं मुखम् ॥ ३१ ॥

३१. तस्या इति ॥ रघूत्तमो लक्ष्मणः सासद्यमानायाः गर्हितं सीदन्त्याः आसीदन्त्याः ॥ "लुपसदचर—" इत्यादिना सदेर्यङि लटः शानच् । राक्षस्याः मुखम् । लोलूया भृशलवनम् । लुनातेर्यङन्तादप्रत्यये टाप् । तद्वान् । तद्युक्तः सन्नित्यर्थः । अत एव कुक्षौ भवं कौक्षेयं लोहविशेषप्रभवम् ॥ "दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्" ॥ असिं खड्गमुद्यम्य । अपगता नासिका यस्य तत् अपनसं नासिकारहितं चकार ॥ "उपसर्गाच्च" इति नासिकाशब्दस्य बहुव्रीहिसमासान्तो नसादेशः ॥

अहं शूर्पणखा[2] नाम्ना नूनं नाज्ञायिषि त्वया ।
दण्डोऽयं क्षेत्रियो येन मय्यपातीति[3] साब्रवीत् ॥ ३२ ॥

३२. अहमिति ॥ अहं नाम्ना शूर्पणखा ॥ "नखमुखात्संज्ञायाम्" इति ङीप्प्रतिषेधः ॥ "पूर्वपदात्संज्ञायामगः" इति णत्वम् ॥ किं तु त्वया नाज्ञायिषि शूर्पणखेति न ज्ञातास्मि । जानातेः कर्मणि लुङि तङि सिचि चिण्वदिटि युक् । स्वाज्ञाने लिङ्गमाह । येन अज्ञानेन अज्ञेन त्वया वा अयं नासाछेदरूपः क्षेत्रियः परक्षेत्रे चिकित्स्यः प्रतिसमाधेय इत्यर्थः ॥ "क्षेत्रियच् परक्षेत्रे चिकित्स्यः" इति परशब्दलोपो घप्रत्ययश्च निपात्यते । क्षेत्रियो नाम परत्र जन्मान्तरशरीरे चिकित्स्यो

१ कौक्षेयमसिमुद्यम्य D.
२ सूर्पणखा C., E3, T1, T4. सूर्पनखा D., E2.
३ मय्यापातीति T2, T4.

मरणान्तिकव्याधिः। अयं दण्डोऽपि छिन्नस्याङ्गस्य पुनः प्ररोहासंभवात् तत्प्राय इति तथा व्यपदिष्टः। दण्डो दमो मयि अपाति पातितः। मत्स्वरूपज्ञाने तु नेदं घटत इति तात्पर्यम्। पततेर्ण्यन्तात्कर्मणि लुङि च्लेश्चिणादेशो णिलोपश्च। इति सा तमब्रवीत्। तदेतदुल्मुकेन शिरःकण्डूयनं तव भविष्यतीति भावः॥

पर्य्यशाप्सीद् दिविष्ठासौ संदर्श्य[1] भयदं वपुः।
अपिस्फवच्च[2] बन्धूनां निनङ्क्षुर्विक्रमं मुहुः॥ ३३॥

३३. परीति॥ अथ असौ राक्षसी दिवि आकाशे तिष्ठतीति दिविष्ठा सती॥ "सुपि स्थः" इति कः॥ "तत्पुरुषे कृति बहुलम्" इत्यलुक्॥ "अम्बाम्ब—" इत्यादिना षत्वे ष्टुत्वम्॥ भयं ददातीति भयदं भयंकरम्॥ "आतोऽनुपसर्गे कः"॥ वपुर्निजशरीरं प्रदर्श्य पर्यशाप्सीत् तर्जनाभिराक्रुक्षत्। शप आक्रोशे। लुङि सिचि हलन्तलक्षणा वृद्धिः। किंच। निनङ्क्षुः नङ्क्षुमिच्छुः सतीत्यर्थः। विनाशकाले विपरीतबुद्धिः सतीत्यर्थः। नशेः सन्नन्तादुप्रत्ययः॥ "मस्जिनशोर्झलि" इति नुम्॥ मुहुरसकृत् बन्धूनां खरादीनां विक्रमं शौर्यमपिस्फवत् वाचा अवीवृधत्। बलवद्द्वेषोद्घाटनेन भीषितवतीत्यर्थः। स्फायी ओप्यायी वृद्धौ इति धातोर्णिचि॥ "स्फायो वः"॥ णौ चङ्युपधाह्रस्वः। द्विर्भावः। अभ्यासकार्यं चर्त्वम्॥

खरदूषणयोर्भ्रात्रोः पर्यदेविष्ट सा पुरः।
विजिग्राहयिषू रामं दण्डकारण्यवासिनोः[3]॥ ३४॥

३४. खरेति॥ सा राक्षसी भ्रात्रोः खरदूषणयोः पुरः अग्रे। तयोस्तदा नेदिष्ठत्वादिति भावः। दण्डकारण्यवासिनं समानदेशस्थमित्यर्थः। रामं विजिग्राहयिषुः विरोधयितुमिच्छुः सती। ग्राहयतेः सन्नन्तादुप्रत्ययः॥ "रो रि" इति रेफलोपः॥ "ढ्लोपे पूर्वस्य

१ प्रदर्श्य T2, T3, T., G., Com.
२ अपुस्फुरच्च B., E2.
३ °वासिनम् T2, T4, T., G., Com.

दीर्घोऽणः" ॥ पर्यदेविष्ट विललाप । 'विलापः परिदेवनम्' इत्यमरः । देवृ देवने इति धातोर्दैवादिकाल्लुङि तङि सिचीट् ॥

कृते सौभागिनेयस्य भरतस्य विवासितौ ।
पित्रा दौर्भागिनेयौ यौ पश्यतं चेष्टितं तयोः ॥ ३५ ॥

३५. अथ त्रिभिः । परिदेवनप्रकारमेवाह कृत इत्यादि ॥ दुर्भगायाः निर्भाग्यायाः अपत्ये पुमांसौ दौर्भागिनेयौ । अन्यथा कथमिदं निर्वासनमिति भावः ॥ "स्त्रीभ्यो ढक्" इति ढकि "कल्याणादीनामिनङ्" इति इनङादेशः ॥ "हृद्भग—" इत्यादिना उभयपदवृद्धिः । यौ द्वौ । सुभगाया अपत्यं पुमान् सौभागिनेयः । अन्यथा कथमाकस्मिको राज्यलाभ इति भावः । तस्य भरतस्य कृते कार्य्याय । संपदादिक्विबन्ताच्चतुर्थी । तादर्थ्येऽव्ययमिति केचित् । पित्रा विवासितौ तयोः पापिष्ठयोश्चेष्टितं स्वनासाछेदनव्यापारं पश्यतम् । प्रार्थनायां लोट् ॥

मम रावणनाथाया भगिन्या युवयोः पुनः ।
अयं तापसकाद् ध्वंसः क्षमध्वं यदि वः क्षमम् ॥ ३६ ॥

३६. ममेति ॥ रावणनाथायाः रावणस्वामिकायाः पुनर्विशेषतः युवयोः भगिन्याः स्वसुर्मम तापसकात्कुत्सिततापसात् । कुत्सितार्थे कन् प्रत्ययः । अयं ध्वंसः वैरूप्यम् । क्षमध्वं सहध्वमुपेक्षध्वमित्यर्थः । यदि वो युष्माकम् ॥ "युष्मदि गुरावेकेषाम्" इति बहुवचननिर्देशः । अत एव अपिस्फवच्च बन्धूनामित्युक्तम् । क्षमं युक्तं यदि । सर्वबन्धुसाधारणोऽयमवमानो नोपेक्षणीय इत्यर्थः ॥

असंस्कृत्रिमसंव्यानावनुप्त्रिमफलाशिनौ ।
अभृत्रिमपरीवारौ पर्य्यभूतां तथापि माम् ॥ ३७ ॥

३७. असंस्कृत्रिमेति ॥ संस्कारेण कुविन्दव्यापारेण निर्वृत्तं संस्कृत्रिममतत्संव्यानौ वल्कले वसानावित्यर्थः । पाकेन निर्वृत्तं पक्त्रिम-

१ निर्वासितौ B. | २ °वपक्त्रिम° T., G., Com.

मतत्फलाशिनौ अकृष्टपच्यफलाशिनावित्यर्थः । भरणेन निर्वृत्तौ भृत्रिमः अतत्परिवारौ अभूतपरिजनौ मृगमात्रपरिवारावित्यर्थः । अत एव "उपसर्गस्य घञ्यमनुष्ये बहुलम्" इत्युपसर्गस्य दीर्घः । सर्वत्र "ड्वितः क्त्रिः" ॥ "क्त्रेर्मम् नित्यम्" ॥ तथाप्यतिनीचावपि मां पर्यभूताम् । कथमेतत्सह्यमिति भावः ॥

श्वःश्रेयसमवाप्तासि भ्रातृभ्यां प्रत्यभाणि सा ।
प्राणिवस्तव मानार्थं व्रजाश्वसिहि मा रुदः ॥ ३८ ॥

३८. अथ श्लोकद्वयेन प्रत्युत्तरमाह श्वःश्रेयसमिति ॥ सा शूर्पणखा भ्रातृभ्यां खरदूषणाभ्यां प्रत्यभाणि प्रत्युक्ता । भणतेः कर्मणि लुङि चिणि वृद्धिः । तदेवाह वत्से शोभनं श्रेयः श्वःश्रेयसमुत्कृष्टं श्रेय इत्यर्थः । 'अत्र श्वः शब्द उत्तरपदार्थप्राशस्त्यवाची' इति काशिका । मयूरव्यंसकादित्वात्समासः । "श्वसो वसीयः श्रेयसः" इति समासान्तः । अवाप्तासि अवाप्स्यसि । आप्नोतेरनद्यतने भविष्यति लुटि सिपि तासिप्रत्ययः ॥ "तासस्त्योर्लोपः" इति सकारलोपः ॥ तव मानार्थमेव प्राणिवः जीवावः । अन प्राणने । लट् । वस् । शपो लुक् ॥ "रुदादिभ्यः सार्वधातुके" इतीट् ॥ "अनितेः" इति णत्वम् ॥ श्वसिहि आश्वसिहि । श्वस प्राणने । लोट् । पूर्ववदिट् । सेर्हिरादेशः । मा रुदः मा रोदीः । रुदेर्लुङि सिपि ॥ "इरितो वा" इति च्लेरङादेशः । व्रज गच्छ । मार्गं प्रदर्शयेत्यर्थः ॥

जक्षिमोऽनपराधेऽपि[2] नरान्नक्तन्दिवं वयम् ।
कुतस्त्वं भीरु यत्तेभ्यो[3] द्रुह्यद्भ्योऽपि क्षमामहे ॥ ३९ ॥

३९. यदुक्तं क्षमध्वमिति तत्रोत्तरमाहतुः जक्षिम इति ॥ वयं सर्वे राक्षसा इत्यर्थः । त्यदादिपरैकशेषः । अनपराधे अपराधाभावेऽपि । 'क्वचित्प्रतिषेधेऽपि समास इष्यते' । नरान्मानुषान् । नक्तं च दिवा च नक्तन्दि-

१ व्रज श्वसिहि T., G., Com.
२ °पराधेन c.
३ तत्तेभ्यो T₂.

चम् । अचतुरादिना सप्तम्यर्थवृत्त्योरव्यययोर्द्वन्द्वसमासान्तनिपातः । जक्षिमो भक्षयामः । जक्ष भक्ष हसनयोरिति धातोर्लट् । मस् । शपो लुक् । रुदादित्वात्सार्वधातुके इट् । हे भीरु भयशीले । संज्ञापूर्वो विधिरनित्य इति न गुणः । द्रुह्यद्भ्योऽपराधभाग्भ्यो नरेभ्यः क्षमामहे मृष्यामहे इति यत् तत् कुतस्त्यं कुत आगतम् ॥ "अव्ययात्त्यप्" ॥ न क्षमामहे इत्यर्थः । क्रियाग्रहणाच्चतुर्थी ॥

तौ चतुर्दशसाहस्रबलौ निर्ययतुस्ततः ।
पारश्वधिक[1]धानुष्कशाक्तीक[2]प्रासिकान्वितौ ॥ ४० ॥

४०. ताविति ॥ ततः शूर्पणखासमाश्वासनानन्तरं चतुर्दशसहस्राणि परिमाणमस्य इत्यस्मिन्नर्थे "शतमानविंशतिकसहस्रवसनादण्" । "प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि" इति तदन्तविधिः ॥ "संख्यायाः संवत्सरसंख्यस्य च" इति उत्तरपदवृद्धिः ॥ तावद्बलं सैन्यं ययोस्तौ खरदूषणौ । परश्वधः कुठारः प्रहरणमेषां पारश्वधिकाः ॥ "परश्वधाट्ठञ्च" ॥ "ठस्येकः" ॥ धनुः प्रहरणमेषामस्तीति धानुष्काः ॥ "प्रहरणम्" इति ठक् ॥ "इसुसुक्तान्तात्कः" ॥ शक्तिः प्रहरणमेषां शाक्तीकाः ॥ "शक्तियष्ट्योरीकक्" ॥ प्रासः कुन्तः प्रहरणमेषां प्रासिकाः । स एव ठक् । तैरन्वितौ सन्तौ निर्ययतुः । यातेर्लिटि ॥ "आतो लोप इटि च" इत्याकारलोपः ॥

अथ संपेततो[3] भीमान् विशिखै रामलक्ष्मणौ ।
बहुमूर्ध्नो द्विमूर्धांश्च त्रिमूर्धांश्चाहतां मृधे[4] ॥ ४१ ॥

४१. अथेति ॥ अथ रामलक्ष्मणौ संपततः संमुखमागच्छतः भीमान् भयङ्करान् बहुमूर्ध्नो बहुशिरस्कान् द्विमूर्धान् द्विशिरस्कान् त्रिमूर्धान्

१ पारस्वधिक D., E1, E2.
२ शाक्तिक C., N., B., T1, T2, T4, शार्ङ्गिक E., याष्टीक D.
३ संपाततो E1.
४ °श्च मृधे हतान् T2, T4.

त्रिशिरस्कांश्च ॥ "द्वित्रिभ्यां ष मूर्ध्नः" इति समासान्तः षप्रत्ययः ॥ मृधे रणे विशिखैर्बाणैः अहतां हतवन्तौ । हन्तेर्लुङि तसस्तामादेशः ॥ "अनुदात्तोपदेश—" इत्यनुनासिकलोपः ॥

तैर्वृक्णरुग्णसंभुग्नक्षुण्णभिन्नविपन्नकैः ।
निमग्नोद्विग्नसंह्रीणैः पप्रे दीनैश्च मेदिनी ॥ ४२ ॥

४२. तैरिति ॥ वृक्णैस्तीक्ष्णैः । व्रश्चेरोदित्वान्निष्ठानत्वम् । तस्यासिद्धत्वात् "चोः कुः" इति कुत्वम् ॥ "ग्रहिज्यावयि—" इत्यादिना संप्रसारणम् ॥ "स्कोः संयोगाद्योरन्ते च" इति सकारलोपः ॥ "ऋवर्णाच्चेति वक्तव्यम्" इति णत्वम् । रुग्णैर्भुग्नैः संभुग्नैः प्रहारवेदनया कुटिलिताङ्गैः । उभयत्रापि पूर्ववन्निष्ठानत्वं कुत्वं च । क्षुण्णैश्चूर्णितैः भिन्नैः सिवारितैः विपन्नकैः कुत्सितं विपन्नैः मृतैः ॥ "कुत्सिते" इति कप्रत्ययः ॥ त्रिष्वपि "रदाभ्यां—" इति निष्ठानत्वम् ॥ निमग्नैर्भूमौ मग्नैः आविग्नैर्भीतैः । उभयत्रापि "ओदितश्च" इति निष्ठानत्वे तस्यासिद्धत्वात्कुत्वम् । संह्रीणैः सम्यग्लज्जितैः ॥ "नुदविद—" इत्यादिना निष्ठानत्वम् ॥ सर्वत्र स्वतन्त्रार्थत्वाद् द्वन्द्वः । दीनैः क्षीणबलैश्च । स्वादित्वान्निष्ठानत्वम् । एवं नानाभूतैः तैः राक्षसैः मेदिनी वव्रे आवृता । वृञ् वरणे । कर्मणि लिट् ॥

केचिद्वेपथुमासेदुरन्ये दवथुमुत्तमम् ।
सरक्तं वमथुं केचिद् भ्राजथुं ने च केचन ॥ ४३ ॥

४३. केचिदिति ॥ केचिद् वेपथुं कम्पमासेदुः प्रापुः । अन्ये उत्तमं महान्तं दवथुं परितापमासेदुः । केचित् सरक्तं वमथुं वमनमासेदुः रक्तमवमन्नित्यर्थः । भ्राजथुं दीप्तिं तु केचनापि नासेदुः । सर्वत्र "ट्वितोऽथुच्" इत्यथुच् ॥

---

१ क्षुत्त E1.
२ निमग्नाविग्न T., G., Com., D., T3, T4.
३ वव्रे T., G., Com.
४ नैव केचन D., न तु केचन T3, T4.

मृगयुमिव मृगोऽथ दक्षिणेर्मा
दिशमिव दाहवर्ती मरावुदन्यन्।
रघुतनयमुपाययौ त्रिमूर्धो
विषभृदिवोग्रमुखं पतत्रिराजम् ॥ ४४ ॥

४४. मृगयुमिति ॥ अथास्मिन्नवसरे दक्षिणे ईर्मं व्रणोऽस्यास्तीति दक्षिणेर्मा व्याधेन व्रणितदक्षिणाङ्ग इत्यर्थः। 'दक्षिणारुर्लुब्धयोगाद्दक्षिणेर्मा कुरङ्गकः'। 'व्रणोऽस्त्रियामीर्ममरुः' इति चामरः॥ "दक्षिणेर्मा लुब्धयोगे" इत्यनिच्प्रत्ययान्तो निपातः ॥ स मृगः मृगान्यातीति मृगयुं व्याधमिव। 'व्याधो मृगवधाजीवी' इत्यमरः। 'मृगय्वादयश्च' इत्यौणादिकः कुप्रत्ययान्तो निपातः। मरौ निर्जलदेशे। 'समानौ मरुधन्वानौ' इत्यमरः। उदकमिच्छन्नुदन्यन् पिपासुर्जन्तुः ॥ "अशनायोदन्यधनायाबुभुक्षापिपासागर्धेषु" इति क्यजन्तधातावुदन्यादेशनिपातः॥ तस्माल्लटः शत्रादेशः। दाववर्ती दावानलवर्ती दिशमिव। विषं बिभर्तीति विषभृदाशीविषः उग्रमुखं पतत्रिराजं गरुडमिव त्रयो मूर्धानो यस्य त्रिमूर्धः त्रिशिरा नाम राक्षसः। त्रिमूर्धो व्याख्यातः। रघुतनयं राममुपाययौ। मालोपमालंकारः। अनेनोपमात्रयेणास्य रक्षसः सद्योमरणं व्यज्यते इति अलंकारेण वस्तुध्वनिः॥

शितविशिखनिकृत्तकृत्स्नवक्त्रः
क्षितिभृदिव क्षितिकम्पकीर्णशृङ्गः।
भयमुपनिदधे स राक्षसाना-
मखिलकुलक्षयपूर्वलिङ्गतुल्यः ॥ ४५ ॥

४५. शितेति ॥ शितैर्विशिखैः निकृत्तकृत्स्नवक्त्रः छिन्नसर्वमूर्धा अत एव क्षितिकम्पेन औत्पातिकभूकम्पेन कीर्णशृङ्गो विकीर्णशिखरः क्षिति-

१ दाव T3, E1, T., G., Com.
२ रघुवृषभ C.
३ विषभुगिव D.
४ हर्ष C.
५ शीर्ण T2, T4.

भूत् पर्वत इव स्थितः किं च अखिलकुलस्य कृत्स्नरक्षःकुलस्य क्षये विनाशे पूर्वलिङ्गं प्रथमावेदकनिमित्तं तत्तुल्यः तथा प्रतीयमान इत्यर्थः । स राक्षसः राक्षसानामवशिष्टानां च भयमुपनिदधे जनयामासेत्यर्थः । औत्पातिकपर्वतोपमानेन कुलक्षयसूचनात्सर्वराक्षसानां महाभयमुत्पन्नमिति भावः ॥

इति भट्टिकाव्ये प्रकीर्णकाण्डे[१] चतुर्थः सर्गः ।

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते भट्टिकाव्यव्याख्याने सर्वपथीनाख्याने चतुर्थः सर्गः ॥

---

१ T. & G. add त्रिशिरवधो नाम | T3 adds खरदूषणयुद्धं नाम.

॥ श्रीः ॥

# अथ पञ्चमः सर्गः ।

निराकरिष्णू वर्त्तिष्णू[1] वर्धिष्णू परितो रणम् ।
उत्पतिष्णू सहिष्णू च चेरतुः खरदूषणौ ॥ १ ॥

१. निराकरिष्णू इति ॥ अथ त्रिशिरःपातानन्तरं खरदूषणौ निराकरिष्णू प्रतिपक्षनिराकरणशीलौ । वर्धिष्णू वर्धनशीलौ रणोत्साहिनावित्यर्थः । वर्त्तिष्णू अतिप्रहारेऽपि वर्त्तनशीलौ । स्थायिनावित्यर्थः । उत्पतिष्णू ऊर्ध्वमुत्पतनशीलौ । सहिष्णू प्रहारसहनशीलौ च सन्तौ । सर्वत्र "अलंकृञ्—" इत्यादिना ताच्छीलिक इष्णुच् प्रत्ययः । रणं परितः रणे सर्वतः ॥ "पर्यभिभ्यां च" इति सर्वार्थे तसिल्प्रत्ययः ॥ "अभितः परितः—" इत्यादिना द्वितीया ॥ चेरतुः बभ्रमतुः । चरेर्लिटि तसोऽतुस् ॥ "अत एकहल्—" इत्यादिना एत्वाभ्यासलोपौ ॥ क्रियासमुच्चयालंकारः ॥

तौ[2] खड्गमुशल[3]प्रासचक्रबाणगदाकरौ ।
अकार्ष्टा[4]मायुधच्छायं[5] रजःसन्तमसे[6] रणे ॥ २ ॥

२. ताविति ॥ खड्गादयः करे ययोस्तौ तत्करौ । "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः" इति परनिपातः । अत्र खड्गादीनां जातिवचनत्वेऽपि जातिप्राधान्यन्यक्कारेण नियतद्रव्यविवक्षया निर्देशाद्बदरामलकानि तिष्ठन्तीत्यादिवत् "जातिरप्राणिनाम्" इत्येकवद्भावो न कृतः । कृते वा नपुंसकलिङ्गप्रसङ्गात्स्त्रीलिङ्गनिर्देशो न स्यादिति । तौ खरदूषणौ रक्षांस्येव सन्तमसं विषूचीनं तमो यत्र तस्मिन् । रजःसन्तमसमिति पाठान्तरम् । 'विष्वक् सन्तमसम्' इत्यमरः ॥ "अवसमन्धेभ्यस्त-

१ वर्धिष्णू वर्त्तिष्णू T2, T4, T., G., Com.
२ तत्खड्ग T3.
३ मुषल C., T1, E2,; मुसल T., G., Com.
४ आकार्ष्टा° E1, E3.
५ °च्छायरजः° T3.
६ रक्षःसन्त° T., G., Com.

मसः" इति समासान्तोऽच् ॥ रणे आयुधानां छाया आयुधच्छायम् ॥ "छाया बाहुल्ये" इति पूर्वपदार्थबाहुल्ये नपुंसकत्वम् ॥ अकार्ष्टा-मायुधैश्छादितवन्तावित्यर्थः। करोतेः कर्त्तरि लुङि तसस्तामादेशः। सिचि वृद्धिः॥

अथ तीक्ष्णायसैर्बाणैरधिमर्म रघूत्तमौ[1] ।
व्याधं व्याधममूढौ तौ[2] यमसाचक्रतुर्द्विषौ ॥ ३ ॥

३. अथेति॥ अथ राक्षसविक्रमानन्तरं रघूत्तमौ रामलक्ष्मणौ। अमूढावप्रमत्तौ सन्तौ द्विषौ द्वेषिणौ खरदूषणौ॥ "सत्सूद्विष—" इत्यादिना क्विप्॥ तीक्ष्णायसैस्तीक्ष्णफलैर्बाणैः। अधिमर्म मर्मसु। विभक्त्यर्थेऽव्ययीभावः। व्याधं व्याधमभीक्ष्णं विद्ध्वा॥ "आभीक्ष्ण्ये णमुल्च" इति णमुलि चाद्विर्भावश्च॥ यमसादन्तकाधीनम्॥ "तदधीनवचने" इति सातिप्रत्ययः॥ चक्रतुर्हतामित्यर्थः॥

हतबन्धुर्जगामासौ ततः शूर्पणखा[3] वनात्[4]।
पारेसमुद्रं[5] लङ्कायां वसन्तं रावणं गतिम्[6] ॥ ४ ॥

४. हतेति॥ अथ हतबन्धुर्हतभ्रातृका असौ शूर्पणखा ततस्तस्माद्वनाज्जनस्थानात् मध्ये समुद्रस्य मध्येसमुद्रम्। "पारे मध्ये षष्ठ्या वा" इत्यव्ययीभावः॥ लङ्कायां वसन्तं रावणं गतिं शरणं जगाम। तद्वधोऽपि प्रारम्भीति भावः॥

संप्राप्य राक्षससभं चक्रन्द क्रोधविह्वला।
नामग्राहमरोदीत्[7]सा भ्रातरौ रावणान्तिके ॥ ५ ॥

५. संप्राप्येति॥ क्रोधविह्वला क्रोधान्धा सा शूर्पणखा। राक्षसानां सभा राक्षससभम्॥ "सभाराजामनुष्यपूर्वा" इत्यमनुष्यपूर्वकत्वा-

१ तु T2.
२ तत्र T2, T4.
३ सूर्पनखा D., E2 शूर्पनखा c. सूर्पणखा C., B., E1. T1.
४ बलात् c.
५ मध्येस° T2, T4, T., G., Com.
६ पतिम् N., C., T1, E2, E3, B., c.
७ °रोदीच E3.

नपुंसकत्वम् ॥ संप्राप्य रावणान्तिके ॥ "सप्तम्यधिकरणे च" इति 'चकाराद्दूरान्तिकार्थेभ्यश्च सप्तमी' इति काशिका । भ्रातरौ खरदूषणौ नाम गृहीत्वा नामग्राहम् ॥ "नाम्न्यादिशिग्रहोः" इति णमुल् ॥ चक्रन्द चुक्रोश ॥

दण्डकां[1]न्यध्यवात्तां यौ वीर रक्षःप्रकाण्डकौ ।
नृभ्यां संख्येऽकृषातां तौ सभृत्यौ भूमिवर्धनौ ॥ ६ ॥

६. दण्डकामिति ॥ हे वीर यौ प्रकाण्डावेव प्रकाण्डकौ । स्वार्थे कन्प्रत्ययः । 'स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते' इति नपुंसकप्रकृतित्वेऽपि पुल्लिङ्गता । रक्षसी प्रकाण्डकौ रक्षःप्रकाण्डकौ प्रशस्तराक्षसौ । रूढशब्दानामादिष्टलिङ्गत्वेन स्वस्वलिङ्गानामेव सामानाधिकरण्यम् । 'मतल्लिकामचर्चिकाप्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमूनि' इत्यमरः । अथवा 'अस्त्री प्रकाण्डः स्कन्धः स्यात्' इति प्रकाण्डशब्दः स्कन्धवचनः । रक्षसी प्रकाण्डाविवेत्युपमितसमासः । तद्धुरंधराविल्यर्थः । दण्डो नाम कश्चिद्राजा तत्पालितो देशोऽपि दण्ड इत्युपचर्यते । स च शुक्रशापादिदानीमरण्यभूतत्वेन कुत्सितत्वेन "कुत्सिते" इति कप्रत्यये दण्डकेति दण्डका इति चोच्यते लोकतो लिङ्गवचननियमादिति । तदुक्तं रामायणे । 'तस्यायं दण्डविषयो विन्ध्यशैवलयोर्नृपः । शप्तो ब्रह्मर्षिणा तेन पुरा वैधर्म्यके कृते ॥ ततःप्रभृति काकुत्स्थ दण्डकारण्यमुच्यते । तपस्विनः स्थिता यत्र जनस्थानमतोऽभवत् ॥' तां दण्डकां तान् दण्डकान्वा अध्यवात्ताम् । तत्रोषितावित्यर्थः ॥ "उपान्वध्याङ्वसः" इति कर्मत्वम् ॥ वसेरनिटो लुङि सिचि हलन्तलक्षणा वृद्धिः ॥ "सः स्यार्धधातुके" इति धातुसकारस्य तकारः ॥ "झलो झलि" इति सिचो लोपः ॥ तौ खरदूषणौ सभृत्यौ । नृभ्यां मनुष्याभ्यां संख्ये युद्धे । वर्धयत इति वर्धनौ भूमेर्वर्धनौ । नन्द्यादित्वाल्ल्युः । स्वशरीरेण मृद्भूतेन पूरकौ मृतावित्यर्थः । अकृषातां कृतौ । करोतेः कर्मणि लुङि आतामि सिचि पक्षे चिण्वदिडभावाद्वृद्ध्यभावः ॥

---

१ दण्डकाम° T., G., Com.

विग्रहस्तव शक्रेण बृहस्पतिपुरोधसा।
सार्धं कुमारसेनान्या शून्यश्चासीति को नयः ॥ ७ ॥

७. अथ रावणमुपालभमाना षोडशभिः सिश्लमन्त्रयते विग्रह इत्यादिभिः ॥ हे स्वामिन्। बृहस्पतिः पुरोधीयत इति पुरोधाः मन्त्री यस्य तेन। पुरोधसोऽपि मन्त्राधिकारत्वात्। तदुक्तं मनुना। 'सर्वेषां तु विशिष्टेन ब्राह्मणेन विपश्चिता। मन्त्रयेत परं मन्त्रं राजा षाड्गुण्यसंयुतः'॥ इति। कुमारः स्कन्दः सेनानीः सेनापतिर्यस्य तेन शक्रेण सार्धं विग्रहः प्रबलविरोधो नित्यानुषक्त इति शेषः। तथापि शून्यो निरुद्योगश्चासि। अस्तेर्लेटि सिपि "तासस्त्योर्लोपः" इति सलोपः। इतीदमौदासीन्यं को नयः का नीतिः। बलवद्विरोधग्रस्तस्य जिगीषोरौदासीन्यमनर्थानुबन्धीति भावः॥

यद्यहं नाथ नायास्यं विनसा[1] हतबान्धवा।
नाज्ञास्यस्त्वमिदं सर्वं प्रमाद्यंश्चारदुर्बलः[2] ॥ ८ ॥

८. यदीति ॥ हे नाथ स्वामिन्। विगता नासा नासिका यस्याः सा विनासेति नासान्तो बहुव्रीहिः। 'घोणा नासा च नासिका' इत्यमरः। नासिकान्तत्वे "उपसर्गाच्च" इति नसादेशं बाधित्वा "वेर्ग्रो वक्तव्यः" इति ग्रादेशे विग्रेति स्यादिति। हतबान्धवा हतभ्रातृकाहं नायास्यं यदि नागच्छेयं चेत्। प्रमाद्यन्निति वर्तमाननिर्देशान्नित्यप्रमत्त इत्यर्थः। चरतीति चरः। पचाद्यच्। स एव चारो गूढचारः। प्रज्ञादित्वादण्। तेन दुर्बलः तच्छून्यः। साक्षाद्दृष्ट्या चारदृष्ट्या वा न किञ्चिद्दृष्टवानित्यर्थः। एवं गर्वान्धस्त्वं सर्वमिदमनर्थजातं नाज्ञास्यः न जानीयाः॥ "लिङ्निमित्ते लृङ्क्रियातिपत्तौ" इति यातेर्जानातेश्च क्रियातिपत्तौ लृङ्। कुतश्चिद्वैगुण्यात्क्रियाया अनभिनिर्वृत्तिः क्रियातिपत्तिः। स्वस्यानागमे ज्ञातव्यज्ञानानभिनिर्वृत्तिरिह क्रियातिपत्तिः॥

---

[1] विनासा T₃, T₄, D., Com. | [2] °श्चर° T₃.

करिष्यमाणं विज्ञेयं कार्यं किं नु कृतं परैः।
अपकारे कृतेऽप्यज्ञो विजिगीषुर्न वा भवान् ॥ ९ ॥

९. करिष्यमाणमिति ॥ परैः शत्रुभिः करिष्यमाणं कार्यं किं कृतं च किन्तु तद्विज्ञेयम्। एतदुभयं विजिगीषुणावश्यं विज्ञेयम्। एवं स्थिते भवांस्तु अपराधे द्रोहे कृते परैराचरितेऽपि अज्ञः। ज्ञानमेव नास्ति प्रतीकारस्तु दूरापास्त इति भावः। अथवा भवान् त्वं विजिगीषुर्नासि अन्यथा कथमिदमनात्मज्ञत्वमिति भावः॥

वृतस्त्वं पात्रेसंमितैः खट्वारूढः प्रमादवान्।
पानशौण्डः श्रियं नेता नात्यन्तीनत्वमुन्मनाः ॥ १० ॥

१०. अज्ञतामेवाह वृत इति ॥ त्वं तु पात्रेसम्मितैः भोजनमात्रसक्तैर्वृतः न तु मन्त्रसंगतैरित्यर्थः॥ "पात्रेसम्मितादयश्च" इति क्षेपे समासनिपातः। खट्वामारूढः खट्वारूढः परतल्पगतः उत्पथप्रस्थित इत्यर्थः॥ "खट्वा क्षेपे" इति क्षेपे क्तान्तेन द्वितीयासमासः॥ प्रमादवान् नित्यप्रमादयुक्तः। नित्ययोगे मतुप्। पाने शौण्डो मत्तः पानशौण्डः पानव्यसनीत्यर्थः "सप्तमी शौण्डैः" इति समासः॥ 'मत्ते शौण्डोत्कटक्षीबाः' इत्यमरः। उन्मनाः उत्सुकचित्तः विषयासक्त इत्यर्थः। श्रियं लक्ष्मीम्। अत्यन्तीनत्वमत्यन्तगामित्वं केवलात्मगामित्वमित्यर्थः॥ "अवारपार—" इत्यादिना खप्रत्ययः। नेता प्रापणशीलो नासि। ताच्छील्ये तृन्॥ "न लोक—" इत्यादिना षष्ठीप्रतिषेधः। नयतिर्द्विकर्मकः। त्वच्चेष्टितानि सर्वथा राज्यभ्रंशकारीणीत्यर्थः॥

अध्वरेष्वग्निचित्वत्सु सोमसुत्वत आश्रमान्।
अत्तुं महेन्द्रियं भागमैति दुश्च्यवनोऽधुना ॥ ११ ॥

---

१ न E2.
२ परैः कृतम् T2, T3, T4, E2, E3, B.
३ अपराधे T., G, Com.
४ वृतोऽसि E1, वृतस्तु T3, T4.
५ पात्रेसम्मितैः T., G., Com.
६ नात्यन्तीनां त्व° D.
७ माहेन्द्रियं T2.
८ दुश्चवनो E2.

११. अध्वरेष्विति ॥ अधुना अस्मिन् काले ॥ "अधुना" इत्यधुनाप्रत्ययान्तो निपातः । दुष्टं च्यवते परदारेषु रेतश्च्योतते दुःखेन च्यवते रणादिति वा दुश्च्यवनः दिवस्पतिः ॥ "चलनशब्दार्थादकर्मकाद्युच्"॥ महाकाव्ये दुश्च्यवनशब्दप्रयोगनिषेधेऽप्यत्र तद्दोषोद्घाटनार्थमनुवादान्न दोषः । अग्निं चितवन्तोऽग्निचितः ॥ "अग्नौ चेः" इति क्विप् ॥ तद्वत्सु अग्निचित्वत्सु तत्कर्तृकेष्वित्यर्थः ॥ "तसौ मत्वर्थे" इति भत्वात्तकारस्य जश्त्वस्याभावः । एकसंज्ञाधिकारात् "झयः" इति मतोर्वत्वम् । अध्वरेषु यज्ञेषु महेन्द्रियं महेन्द्रदेवताकम् । "महेन्द्राद्घाणौ च" इति घप्रत्ययः ॥ भागमत्तुं भक्षयितुं सोमं सुतवन्तः सोमसुतः ॥ "सोमे सुञः" इति क्विप् ॥ तद्वतः सोमसुत्वतः सोमयाजिमतः । मत्वादि पूर्ववत् । आश्रमानृष्याश्रमान् पैति आगच्छति । आङ्पूर्वादिणो लिट् ॥ "एत्येधत्यूठ्सु" इति वृद्धिः ॥ अशक्यवधस्तवायमाज्ञाभङ्ग इति भावः ॥

आमिक्षीयं दधिक्षीरं पुरोडाश्यं तथौषधम् ।
हविर्हैयङ्गवीनं च नाप्युपघ्नन्ति राक्षसाः ॥ १२ ॥

१२. आमिक्षीयमिति ॥ तप्ते पयसि दध्यानयति सामिक्षा तदर्थमामिक्षीयम् । दधि च क्षीरं च दधिक्षीरम् ॥ "विभाषा वृक्षमृगतृण–" इत्यादिना वैभाषिको व्यञ्जनद्वन्द्वः ॥ तथा पुरोडाश्यं पुरोडाशार्थमोषधिरेवौषधं व्रीहियवादि ॥ "ओषधेरजातौ" इति स्वार्थेऽण्प्रत्ययः॥ आमिक्षापुरोडाशयोर्हविष्ट्वात् ॥ "विभाषा हविरपूपादिभ्यः" इति वैभाषिकौ प्राक्क्रीतीयौ यथाक्रमं छयतौ ॥ हैयङ्गवीनं ह्योगोदोहविकारं घृतं च । 'तत्तु हैयङ्गवीनं यद्ध्योगोदोहोद्भवं घृतम्' इत्यमरः ॥ "हैयङ्गवीनं संज्ञायाम्" इति ह्योगोदोहशब्दस्य हियङ्ग्वादेशः खञन्तो निपातः । हविः पूर्वोक्तं त्रिविधं हविरपि राक्षसाः नोपघ्नन्ति न लुम्पन्ति । सर्वत्र रक्षसां विस्रम्भविहारप्रतिबन्ध इत्यर्थः ॥

युवजानिर्धनुष्पाणिर्भूमिष्ठः खविचारिणः ।
रामो यज्ञद्रुहो हन्ति कालकल्पशिलीमुखः[1] ॥ १३ ॥

१३. युवेति ॥ किं च युवतिर्जाया यस्य सः युवजानिः तरुणभार्यः तथापि निःशङ्क इति भावः ॥ "जायाया निङ्" इति बहुव्रीहिसमासान्तो निङादेशः ॥ "लोपो व्योर्वलि" इति यकारलोपः ॥ "स्त्रियाः पुंवत्—" इत्यादिना पुंवद्भावः ॥ धनुः पाणौ यस्य सः धनुष्पाणिः ॥ "प्रहरणार्थेभ्यः—" इति सप्तम्याः परनिपातः ॥ "नित्यं समासेऽनुत्तरपदस्थस्य" इति नित्यं षत्वम् ॥ भूमौ तिष्ठतीति भूमिष्ठः ॥ "सुपि स्थः" इति कप्रत्ययः ॥ "अम्बाम्ब—" इति षत्वे ष्टुत्वम् ॥ खविचार एषामस्तीति खविचारिणः खचरानित्यर्थः । मत्वर्थीय इनिप्रत्ययः । न तु "सुप्यजातौ—" इति णिनिः । पुनः सुब्ग्रहणेनोपसृष्टात्तन्निषेधात् । यज्ञेभ्यो द्रुह्यन्तीति यज्ञद्रुहो राक्षसान् ॥ "सत्सूद्विष—" इति क्विप् ॥ कालकल्पैरन्तकप्रख्यैः । शिली शल्यं मुखं येषां तैः शिलीमुखैः बाणैः हन्ति । न चास्य कश्चित्प्रतिपक्ष इति भावः ॥

मांसान्योष्ठावलोप्यानि साधनीयानि[2] देवताः ।
अश्नन्ति रामाद्रक्षांसि बिभ्यत्यश्नुवते[3] दिशः ॥ १४ ॥

१४. मांसानीति ॥ ओष्ठाभ्यामेवावलोप्तुमर्हाणि ओष्ठावलोप्यानि अतिमृदूनीत्यर्थः ॥ "ऋहलोर्ण्यत्" ॥ "कृत्यैरधिकार्थवचने" इति करणे तृतीयासमासः । सवनाय हितस्तदर्थं वा पशुः सवनीयः । प्राक्क्रीतीयश्छप्रत्ययः । तदीयानि सावनीयानि । साधनीयानीति पाठे यज्ञसाधनीयार्थानि यज्ञार्थं संपाद्यानि वा । मांसानि देवताः अश्नन्ति । रक्षांसि राक्षसास्तु रामाद्बिभ्यति भीतानि सन्ति । बिभेतेः शतरि ॥ "नाभ्यस्ताच्छतुः" ॥ "वा नपुंसकस्य" इति नुम्प्रतिषेधविकल्पात्पाठद्वयेऽपि साधुत्वम् । दिशोऽश्नुवते व्याप्नुवन्ति पलायन्त

१ कालकल्पैः शिलीमुखैः T., G., Com.
२ सावनीयानि E1, T2, T3, T., G., Com.
३ बिभ्यन्त्य° T2, T3, T4.

इत्यर्थः । पूर्वं राक्षसाः यज्ञेष्वाच्छिद्य मांसान्यश्नन्ति देवता दिशोऽश्नुवते । अधुना तद्विपरीतं वर्त्तत इत्यर्थः ॥

कुरु बुद्धिं कुशाग्रीयामनुकामीनतां त्यज ।
लक्ष्मीं परम्परीणां त्वं पुत्रपौत्रीणतां नय ॥ १५ ॥

१५. कुर्विति ॥ कुशाग्रीयां कुशाग्रमिव सूक्ष्माग्रामित्यर्थः ॥ "कुशाग्राच्छः" इति इवार्थे छप्रत्ययः ॥ बुद्धिं कुरु । सूक्ष्मदर्शी भवेत्यर्थः । अनुकामं गामी अनुकामीनः यथेष्टं गन्ता ॥ "अवारपार—" इत्यादिना खप्रत्ययः ॥ तत्तां त्यज यथेष्टचारी मा भूरित्यर्थः । परांश्च परतरांश्च अनुभवतीति परम्परीणा पितृपितामहादिक्रमागतेत्यर्थः ॥ "परोवरपरम्परपुत्रपौत्रमनुभवति" इति खप्रत्ययः ॥ तत्संनियोगात्परपरतरशब्दयोः परम्परादेशनिपातनात् तत्तत्प्रकृतिकश्चायं प्रत्ययः । न तु लोकप्रसिद्धपरंपराशब्दप्रकृतिकः । सूत्रे टाबन्तनिर्देशाभावादिति । तां लक्ष्मीं त्वम् । पुत्रांश्च पौत्रांश्च अनुभवतीति पुत्रपौत्रीणा । पूर्वोक्त एव प्रत्ययः । तत्तां नय । पूर्वपुरुषवदुत्तरोत्तरपुरुषगामिनीं च कुरु । न तूपेक्षया त्वन्मात्रावसितां कुर्वित्यर्थः । नयतिर्द्विकर्मक इत्युक्तम् ॥

सहायवन्त उद्युक्ता बहवो निपुणाश्च याम् ।
श्रियमाशासते लोलां तां हस्तेकुरु माश्वसीः ॥ १६ ॥

१६. ननु मद्धस्तगतायाः लक्ष्म्याः कथं विपर्ययकथेत्याशङ्क्याह सहायेति ॥ लोलामस्थिरां यां श्रियं सहायवन्तः कोशदण्डसम्पन्नाः प्रभुशक्तिमन्त इत्यर्थः । उद्युक्ता उत्साहशक्तियुक्ता इत्यर्थः । निपुणाः मन्त्रकुशला इत्यर्थः । तेऽपि बहवो बहुमन्त्रियुक्ता विदुषोऽप्येकस्यानिर्णायकत्वादित्यर्थः । एवं शक्तित्रयोपेता अपि आशासते लब्धामप्यलब्धवदनुपालयन्तीत्यर्थः । आङः शासु इच्छायामित्यात्मनेपदम् । शपो लुक् ॥ "आत्मनेपदेष्वनतः" इति झस्यादादेशः । तां श्रियं हस्तेकृत्य उपयम्येत्युपचारः । स्वायत्तीकृत्यापीत्यर्थः ॥ "नित्यं हस्ते

---

१ हस्तेकृत्याच T3..

पाणावुपयमने" इति हस्तेशब्दस्य गतित्वात् समासे क्त्वो ल्यप् । माश्वसीः मा विश्वसीः । आङ्पूर्वात् श्वसेर्लुङि सिचि "ह्म्यन्त—" इत्यादिना वृद्धिप्रतिषेधः ॥ "इट ईटि" इति सिज्लोपः ॥

लक्ष्मीः पुंयोगमाशंसुः कुलटेव कुतूहलात् ।
अन्तिकेऽपि स्थिता पत्युश्[1]छलेनान्यं निरीक्षते ॥ १७ ॥

१७. अनाश्वासकारणमाह लक्ष्मीरिति ॥ लक्ष्मीः कुलटा स्वैरिणीव कुतूहलात् पुंसा पुंस्त्ववता योगमाशंसुरभिलषन्ती । "सनाशंसभिक्ष उः"॥ "न लोक—" इत्यादिना षष्ठीप्रतिषेधः ॥ पत्युरन्तिके स्थितापि छलेन वञ्चनेनान्यं पुरुषं पुरुषान्तरं निरीक्षते । ईषत्प्रमादेऽप्यन्यमुपगच्छतीत्यर्थः ॥

योषिद्वृन्दारिका तस्य दयिता हंसनादिनी ।
दूर्वाकाण्डमिव श्यामा न्यग्रोधपरिमण्डला ॥ १८ ॥

१८. लक्ष्मीस्तावदास्तामतिलक्ष्मीः कापि कान्ता तदन्तिके चकास्तीति श्लोकपञ्चकेनाह योषिदित्यादिना ॥ वृन्दं गुणवृन्दमस्या अस्तीति वृन्दारिका मुख्या । 'वृन्दारकौ रूपिमुख्यौ' इत्यमरः । "शृङ्गवृन्दाभ्यामारकन् वक्तव्यः" । कात्पूर्वस्येत्वम् । योषिच्च सा वृन्दारिका च योषिद्वृन्दारिका ॥ "वृन्दारकनागकुञ्जरैः पूज्यमानम्" इति समासः ॥ तस्य रामस्य दयिता । हंसवद्गच्छतीति हंसगामिनी ॥ "कर्त्तर्युपमाने" इति णिनिः॥ दूर्वाकाण्डमिव श्यामा । एतच्च पुराणान्तरे द्रष्टव्यम् कल्पभेदेन वा । अन्यथा रामायणविरोधात् । न्यग्रोधपरिमण्डला वटपत्रवद्वृत्तानुपूर्वोदरेत्यर्थः । एतदेवाभिप्रेत्योक्तं सामुद्रे । 'काककुक्षिस्तु या कन्या न्यग्रोधपरिमण्डला । एकं जनयते पुत्रं स च राजा भविष्यति' ॥ इति ॥

नास्यं पश्यति यस्तस्या निस्ते दन्तच्छदं न वा ।
संशृणोति न चोक्तानि[3] मिथ्यासौ विहितेन्द्रियः ॥ १९ ॥

---

१ पत्युः काक्षेणान्यं E1.
२ हंसगामिनी N., D., T., G., Com.
३ न चोक्तानि E1.

१९. नेति ॥ यो युवा तस्या आस्यं मुखं न पश्यति । छाद्यते अनेन इति छदः दन्तानां छदो दन्तच्छदोऽधरः ॥ "पुंसि संज्ञायां घः प्रायेण" इति घप्रत्ययः ॥ "छादेर्घेऽद्व्युपसर्गस्य" इति ह्रस्वत्वम् ॥ तं न निंस्ते न चुम्बति वा । णिसि चुम्बने । लटि तङ् । अदादित्वाच्छपो लुक् । इदित्वान्नुम् । उक्तानि सूक्तानि न संशृणोति न समाकर्णयति च । सकर्मकत्वात् "समो गम्यृच्छि—" इति नात्मनेपदम् । तस्याकर्मकाधिकारात् । असौ पुमान् मिथ्या वृथैव विहितेन्द्रियः निर्मितकरणः । निष्फलैव तस्येन्द्रियसृष्टिरित्यर्थः ॥

सारोऽसाविन्द्रियार्थानां यस्यासौ तस्य नन्दथुः ।
तल्पे कान्तान्तरैः सार्धं मन्येऽहं धिङ् निमज्जथुम् ॥ २० ॥

२०. सार इति ॥ असौ स्त्री इन्द्रियार्थानां रूपरसादिविषयाणां सम्बन्धी सारः एकत्र संगृहीतस्सर्वविषयसारः । अथवा इन्द्रियार्थानां मध्ये असौ सारः उत्कृष्ट इन्द्रियार्थः । अत एवासौ यस्य सम्बन्धिनी तस्य नन्दथुः आनन्दः । किं च कान्तान्तरैः एतस्यां सत्यां स्त्र्यन्तरैः सार्धं तल्पे शयनीये निमज्जथुं निमज्जनं शयनं धिक् कष्टमहं मन्ये । धिग्योगे द्वितीया । उभयत्र "ट्वितोऽथुच्" ॥

न तं पश्यामि यस्यासौ भवेन्नोदेजया मतेः ।
त्रैलोक्येनापि विन्दस्त्वं तां क्रीत्वा सुकृती भव ॥ २१ ॥

२१. नेति ॥ असौ स्त्री यस्य यूनो मतेर्मानसस्य । उदेजयते कम्पयतीत्युदेजया कम्पनी ॥ "अनुपसर्गाल्लिम्पविन्द—" इत्यादिना शप्रत्ययः । एतेनैव विन्दोऽपि व्याख्यातः । न भवेत् तं न पश्यामि । तादृग्धीरो नास्त्येवेत्यर्थः । अतः त्वं तां सुन्दरीम् । त्रयो लोकास्त्रैलोक्यम् । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्प्रत्ययः । स्वार्थिकत्वात्प्रकृतितो लिङ्गवचनातिक्रमः । तेनापि तां क्रीत्वा । त्रैलोक्यस्यापि तव स्वत्वात् तस्य

---

१ हत्वा B., Ea.

रत्नस्य तावन्मूल्यार्हत्वाच्चेति भावः। विन्दतीति विन्दः क्रयेण लब्धा सन्नित्यर्थः। सुकृती भव सुष्ठु कृतकृत्यो भव। लोकोत्तरस्त्रीरत्नलाभादिति भावः॥

नैवेन्द्राणी न[1] रुद्राणी न मनावी न रोहिणी[2]।
वरुणानी न[3] नाग्नायी तस्याः सीमन्तिनी समा[4] ॥ २२ ॥

२२. ननु शच्यादिषु जाग्रतीषु केयमुद्घोष्यते अत आह न चेति॥ इन्द्रस्य स्त्री इन्द्राणी शची तस्याः सीतायाः॥ "तुल्यार्थैः—" इत्यादिना विकल्पात्षष्ठी॥ समा सीमन्तिनी तुल्या स्त्री न। एवं रुद्रस्य स्त्री रुद्राणी पार्वती। सा च न तस्याः समा सीमन्तिनीति सर्वत्र योज्यम्। सर्वत्र "पुंयोगादाख्यायाम्" इति ङीप्। तत्सन्नियोगात् "इन्द्रवरुण—" इत्यादिना यथायोगमानुगागमः। मनोः स्त्री मनावी॥ "मनोरौ वा" इति विकल्पात् औकारे तस्यावादेशः॥ एवमग्नेः स्त्री अग्नायी॥ "वृषाकप्यग्नि—" इत्यादिना ऐकारे तस्यायादेशः॥

प्रत्यूचे राक्षसेन्द्रस्तामाश्वसिहि बिभेषि किम्।
त्यज नक्तंचरि क्षोभं वाचाटे[5] रावणो ह्यहम्॥ २३ ॥

२३. प्रत्यूच इति॥ राक्षसेन्द्रो रावणः तां शूर्पणखां प्रत्यूचे प्रत्युवाच। ब्रुवः कर्त्तरि लिटि तङ्। किमित्यपेक्षायामाह। हे नक्तंचरि राक्षसि॥ "चरेष्टः"॥ टित्वान्ङीप्। सम्बुद्धौ नदीह्रस्वः। हे वाचाटे बहुभाषिणीति तदुपालम्भासहिष्णुतया सोल्लुण्ठनमामन्त्रितम्। समाश्वसिहि। श्वसेर्लोटि सिपि "रुदादिभ्यः सार्वधातुके" इतीट्। सेर्हिरादेशः। 'अपि माषं मषं कुर्याच्छन्दोभङ्गं न कारयेत्' इति शास्त्रादुच्छास्त्रपाठे दीर्घ इति केचित्। अमात्रावृत्तत्वादक्षरसंख्ययैवालं यथा ऋग्य-

---

१ न चेन्द्राणी T3, T4.
२ मनावी वा न रुद्राणी न रोहिणी T3, E1.
३ न चाग्नायी C., T1, E1. B., न वाग्नायी T3.
४ समाः E3.
५ वाचाले D.

त्रुषमधीयाना इत्यादावित्यन्ये । किं बिभेषि मा भैषीरित्यर्थः । क्षोभं क्रोधं त्यज । अहं रावणो हि रावयति लोकानिति रावणः ख्यातः खल्वित्यर्थः ॥

मामुपास्त[1] दिदृक्षावान् याष्टीकव्याहतो हरिः ।
आज्ञालाभोन्मुखो[2] दूरात् काक्षेणानादरेक्षितः ॥ २४ ॥

२४. यदुक्तं विग्रहस्तव शक्रेणेति तत्रोत्तरमाह मामित्यादि ॥ द्रष्टुमिच्छा दिदृक्षा । दृशेः सन्नन्तात्स्त्रियामप्रत्यये टाप् । तद्वान् दिदृक्षावान् दिदृक्षुः । यष्टिः प्रहरणमेषां याष्टीकाः वेत्रपाणयः ॥ "शक्तियष्ट्योरीकक्" ॥ तैर्व्याहतो द्वारि प्रतिबद्धो हरिरिन्द्रः । आज्ञादाने दर्शनाभ्यनुज्ञाने उत्सुक उत्कण्ठितः सन् ॥ "प्रसितोत्सुकाभ्यां तृतीया च" इति सप्तम्या "सप्तमी" इति योगविभागात्समासः । दूरात् काक्षेण कुदृष्ट्या अप्रसन्नदृष्ट्या इत्यर्थः । इन्द्रियवाचिना अक्षशब्देन तद्विशेषश्चक्षुर्लक्ष्यते । 'अथाक्षमिन्द्रियम्' इत्यमरः । "का पथ्यक्षयोः" इति कुशब्दस्य तत्पुरुषे कादेशः । केचित्तु न्यासकारेण तत्पुरुषाधिकारभङ्गेन बहुव्रीहिसमासान्तत्वेनापि व्याख्यानादिहापि कुत्सितमक्षि यस्य तेन काक्षेण मयेति व्याचक्षते । अनादरेणेक्षितः सन् मामुपास्त आसेवत । आसेर्लुङि तङ् । शपो लुक् । ईदृगवस्थः शक्रः उपेक्षमाणमपि मां किं करिष्यतीति भावः ॥

विरुग्णोदग्रधाराग्रः कुलिशो मम वक्षसि ।
अभिन्नं शतधात्मानं मन्यते बलिनं बली ॥ २५ ॥

२५. विरुग्णेति ॥ किं च बली बलवान् दृढः कुलिशो वज्रः । 'अस्त्रियौ वज्रकुलिशौ' इति यादवः । मम वक्षसि विरुग्णानि भग्नानि उदग्राण्युन्नतराणि धाराणां कोटीनामग्राणि मुखानि यस्य सः । कुण्ठितमुखः

[1] °मुपास्ते C.
[2] °लाभोत्सुको T₄, T₄, T., G., °दानोत्सुको Com.

सन्नित्यर्थः । किं तु शतधा अभिन्नमविदीर्णमात्मानं बलिनं बलिष्ठं मन्यते न तु मद्वक्षोविदारणेनेत्यर्थः ॥

कृत्वा लङ्काद्रुमालानमहमैरावतं गजम् ।
बन्धनेऽनुपयोगित्वान्न[1] तं तृणवदत्यजम् ॥ २६ ॥

२६. कृत्वेति ॥ किं चाहमैरावतं गजं लङ्काद्रुम एव आलानं यस्य तं कृत्वा तत्र बद्ध्वेत्यर्थः । बन्धनेऽनुपयोगित्वादिच्छापनेयत्वादिति भावः । तमैरावतं तृणवन्नात्यजं नात्याक्षं किमिति काकुः ॥

आहोपुरुषिकां पश्य मम सैद्रत्नकान्तिभिः ।
ध्वस्तान्धकारेऽपि पुरे पूर्णेन्दोः सन्निधिः सदा ॥ २७ ॥

२७. आहोपुरुषिकामिति ॥ किं च मम । 'अहो पुरुष इति यस्यां क्रियायां सा आहोपुरुषिका' इति काशिका । मत्वर्थीयष्ठञ्प्रत्ययः । मयूरव्यंसकादित्वात्समासः । तामाहोपुरुषिकां पश्य । स्वपुरुषकारं पश्येत्यर्थः । केचित्तु 'आहोपुरुषिका दर्पाद्या स्यात्संभावनात्मनि' इत्यत्र क्षीरस्वामिनो व्याख्यानानुसारेणाहोपुरुषस्य भावः आहोपुरुषिका आश्चर्यपुरुषत्वम् । मनोज्ञादित्वाद्वुञिति व्याचक्षते । किं तु मनोज्ञादिषु मृग्यमेतत् । यद्यस्माद्रत्नकान्तिभिरेव ध्वस्तान्धकारे निरस्ततमस्केऽपि पुरे सदा पूर्णेन्दोः सन्निधिः सन्निधानम् । तमोनिरासानुपयुक्तस्यापि चन्द्रस्य तत्रापि पूर्णस्य सदा पुरे निवसनं केवलाज्ञासिद्ध्यर्थमेवेत्यहो मे दृश्यतामाहोपुरुषिकेति भावः । अत्र रत्नकान्तिभिर्ध्वस्तान्धकार इति समृद्धिमद्वस्तुवर्णनादुदात्तालङ्कारः । 'समृद्धिमद्वस्तुवर्णनमुदात्तम्' इति लक्षणात् ॥

---

१ मन्वानोऽनु° $T_3$, मन्वानोऽनुपयोगं किं $T_2$, $T_4$.

२ किं न तं तृणमत्यजम् $T_3$.

३ यद्रत्नकान्तिभिः $T_2$, $T_3$, $E_1$, D., T., G., Com.

४ पुरे ध्वस्तान्धकारेऽपि $E_2$.

हृतरत्नश्च्युतोद्योगो रक्षोभ्यः करदो दिवि ।
पूतक्रतायीमभ्येति[1] सत्रपः किं[2] न गोत्रभित् ॥ २८ ॥

२८. हृतेति ॥ हृतानि रत्नान्युत्कृष्टवस्तूनि यस्य सः । 'रत्नं श्रेष्ठमणावपि' इति यादवः । अत एव च्युतोद्योगो नष्टोत्साहः अत एव रक्षोभ्योऽस्मभ्यं करदः बलिप्रदः गोत्रभित्पर्वतच्छेदी देवेन्द्रः सत्रपः सन् दिवि स्वर्गे । पूतक्रतोः स्वस्य स्त्रीं पूतक्रतायीं शचीम् ॥ "पूतक्रतोरै च" इति ङीप्सन्नियोगादैकारे तस्यायादेशः । नान्वेति किमन्वेत्येव । लज्जयान्तः पुरे निलीय तिष्ठतीत्यर्थः ॥

अतुल्यमहसा सार्धं[3] रामेण मम विग्रहः ।
त्रपाकरस्तथाप्येष यतिष्ये तद्विनिग्रहे ॥ २९ ॥

२९. अतुल्येति ॥ अतुल्यमहसा असमानबलेन रामेण सार्धं विग्रहो विरोधो मम त्रपाकरो लज्जावहः ॥ "कृञो हेतु—" इत्यादिना ताच्छीलिकष्टप्रत्ययः ॥ तथाप्येषोऽहं तस्य रामस्य विनिग्रहे हिंसने यतिष्ये त्वत्कृते इति भावः ॥

उत्पत्य खं दशग्रीवो मनोयायी शिताम्त्रभृत् ।
समुद्रसविधावासं मारीचं प्रति चक्रमे ॥ ३० ॥

३०. उत्पत्येति ॥ अथ मनोवद्यातीति मनोयायी मनोवेगीत्यर्थः ॥ "कर्त्तर्युपमाने" इति णिनिप्रत्ययः ॥ शिताम्त्रभृत् निशिताम्त्रधारी दशग्रीवः खमुत्पत्य समुद्रस्य सविधः समीपमावासो निवासो यस्य तं समुद्रतीरवासिनं मारीचं प्रति तमुद्दिश्य चक्रमे जगाम ॥ "अनुपसर्गाद्वा" इति क्रमेर्लिटि तङ् ॥

---

१ °मन्वेति T₂, T₃, E₁, T₄, T., G., Com.
२ किल T₂, T₄.
३ सार्कं T₂, T₃, T₄, E₁. सार्कं मम रामेण E₃.
४ ज्ञाता° T₃.

संपत्य तत्सनीडेऽसौ तं वृत्तान्तमशिश्रवत्।
त्रस्नुनाथ श्रुतार्थेन तेनागादि दशाननः ॥ ३१ ॥

३१. संपत्येति ॥ असौ रावणस्तस्य मारीचस्य सनीडे समीपे। 'समीपे निकटासन्नसन्निकृष्टसनीडवत्' इत्यमरः। संपत्य निपत्य। तं शूर्पणखोक्तं वृत्तान्तमशिश्रवत् श्रावयति स्म। शृणोतेः "णौ चङ्युपधाया ह्रस्वः" इति ह्रस्वः। सन्वद्भावे "स्रवतिशृणोति—" इत्यादिना विकल्पादभ्यासस्येत्वम्। अथ श्रवणानन्तरं श्रुतार्थेन श्रुतवृत्तान्तेन अत एव त्रस्नुना भीरुणा ॥ "त्रसिगृधि—" इत्यादिना क्नुप्रत्ययः॥ तेन मारीचेन दशाननो रावणः अगादि गदितः॥

अन्तर्धत्स्व रघुव्याघ्रात्तस्मात्त्वं राक्षसेश्वर।
स रणे दुरुपस्थानो हस्तरोधं दधद्धनुः ॥ ३२ ॥

३२. यद्गदितं तदाह अन्तरिति ॥ हे राक्षसेश्वर त्वं तस्मात् प्रसिद्धाद्रघुव्याघ्रात् रघूत्तमाद्रामात्। गतमेतत् ॥ "अन्तर्धौ येनादर्शनमिच्छति" इत्यपादानत्वात्पञ्चमी। अन्तर्धत्स्व अन्तर्हितो भव नात्मानं दर्शयेत्यर्थः। दधातेः कर्त्तरि लोटि तङि "थासः से"॥ "सवाभ्यां वामौ"॥ "श्नाभ्यस्तयोरातः" इत्याकारलोपः॥ "दधस्तथोश्च" इत्यभ्यासस्य भष्भावः। "अदन्तरोरुपसर्गवद्वृत्तिर्वक्तव्या" इत्युपसर्गवद्भावादन्तःशब्दस्य धातोः प्राक् प्रयोगः। तथाहि रणे हस्तेन रोधः पीडनं यस्य तद्धस्तरोधं दृढमुष्टिगृहीतमित्यर्थः॥ "सप्तम्यां चोपपीडरुधकर्षः" इति णमुल्। उपोपसर्गव्यभिचारश्चिन्त्यः व्याकरणान्तरे वा द्रष्टव्यः। धनुः दधत् दधानः॥ "नाभ्यस्ताच्छतुः" इति नुम्प्रतिषेधः॥ स रामो दुःखेनोपस्थीयत इति दुरुपस्थानो दुरासदः॥ "आतो युच्" इति खलर्थे युच्॥

---

१ समेत्य D., E2.
२ °मशुश्रवत् E3, T4
३ यो रणे N., C., E2, E3, T1, B1, T3, T.

भवन्तं कार्त्तवीर्यो[1] यो हीनसंधिमचीकरत् ।
जिगाय तस्य हन्तारं स रामः सार्वलौकिकः[2] ॥ ३३ ॥

३३. दुरासदत्वं व्यनक्ति भवन्तमिति ॥ यः कृतवीर्यस्यापत्यं पुमान् कार्त्तवीर्यः हैहयपतिः भवन्तं हीनं निकृष्टं संधिमाज्ञाकरत्वलक्षणं सन्धानमचीकरत् भवता कारितवानित्यर्थः । करोतेर्णौचङ्युपधाह्रस्वः ॥ "दीर्घो लघोः" इत्यभ्यासदीर्घः ॥ "हृक्रोरन्यतरस्याम्" इत्यणि कर्त्तुः कर्मत्वम् । तस्य कार्त्तवीर्यस्य । कृद्योगात्कर्मणि षष्ठी । हन्तारं जामदग्न्यं यो रामो जिगाय जितवान् । जेर्लिटि "सन्लिटोर्जेः" इत्यभ्यासात्परस्य धातुजकारस्य कुत्वम् । स रामः सार्वलौकिकः सर्वस्मिन् लोके विदितः । नाप्रसिद्ध इत्यर्थः ॥ "लोकसर्वलोकाट्ठञ्" इति ठञ् ॥ "अनुशतिकादीनां च" इत्युभयपदवृद्धिः ॥ ३३ ॥

यमास्यदृश्वरी तस्य ताडका[3] वेर्त्ति[4] विक्रमम् ।
शूरम्मन्यो रणाद्वाहं[5] निरस्तः सिंहनर्दिना[6] ॥ ३४ ॥

३४. यमेति ॥ किं च यमास्यमन्तकमुखं दृष्टवती यमास्यदृश्वरी रामेण यमलोकं गमितेत्यर्थः । भूतार्थे कर्मोपपदात् "दृशेः क्वनिप्" ॥ "वनो र च" इति ङीप् रेफादेशश्च ॥ ताटका तस्य रामस्य विक्रमं वेद वेत्ति ॥ "विदो लटो वा" इति तिपो णलादेशः ॥ सिंहवन्नर्दति सिंहनर्दी सिंहनादी ॥ "कर्त्तर्युपमाने" इति णिनिः ॥ तेन रामेण रणान्निरस्तः । शूरमात्मानं मन्यत इति शूरम्मन्यः शूरमानी ॥ "आत्ममाने खश्च" इति मन्यतेः खश्प्रत्ययः ॥ अहं च वेदेत्यनुषङ्गः । वेद्मीत्यर्थः । मिपो णलादेशः । रामप्रधर्षणे तवाप्येषैव गतिरिति भावः ॥ ३४ ॥

न त्वं तेनान्वभाविष्ठा नान्वभावि त्वयाप्यसौ ।
अनुभूतो मया चासौ तेन चान्वभविष्यहम् ॥ ३५ ॥

---

१ कार्त्तवीर्योऽसौ T₄.
E₁, omits verses 33 and 34.
२ सार्वलौकिकम् N., D.
३ ताटका T., G., Com.
४ वेद T., G., Com.
५ बला° c.
६ वासौ T₄.

३५. नेति ॥ त्वं तेन रामेण नान्वभाविष्ठाः समरे साक्षान्नाज्ञायिष्ठाः न ज्ञात इत्यर्थः । भुवः कर्मणि लुङि थासि सिचि चिण्वदिटि वृद्धिः । त्वयाप्यसौ रामो नान्वभावि नानुभूतः । पूर्ववच्चिण्वदिटि चिणि वा चिणो लुक् । अतस्तच्छक्तिं त्वं न जानासीत्यर्थः । मया चासावनुभूतः तेन चाहमन्वभविषि । चिण्वदिडभावे इटि सिचि गुणः । अतस्तच्छक्तिमहं जानामीत्यर्थः ॥

अध्यङ् शस्त्रभृतां रामो न्यञ्चस्तं प्राप्य मद्विधाः ।
स कन्याशुल्कमभनङ्मिथिलायां मखे धनुः ॥ ३६ ॥

३६. असंभवावधृतमर्थं निष्कृष्याह अध्यङिति ॥ रामः शस्त्रभृतां वीराणाम् । अध्यञ्चत्युपरि वर्त्तते इत्यध्यङ् सर्वाधिक इत्यर्थः ॥ "ऋत्विग्—" इति क्विन् ॥ अनुस्वारपरसवर्णादिकार्ये ॥ "क्विन्प्रत्ययस्य कुः" इति कुत्वम् ॥ मद्विधा मादृशाः तं रामं प्राप्य योद्धुमासाद्य । नीचमञ्चन्तीति न्यञ्चः अधरीणाः । पूर्ववत्क्विन् । प्राप्त्यभावात्कुत्वाद्यभावः । सर्वाधिक्यं व्यनक्ति । स रामो मिथिलायां जनकनगरे मखे यज्ञान्ते कन्याशुल्कं शुल्कभूतं सर्वगर्वनिर्वापणमिति भावः । धनुरभनक् बभञ्ज । अतः सर्वाधिक इति भावः । भञ्जेर्लङि "श्नान्नलोपः" । कुत्वचर्त्वे ॥

संविद्रः सहयुध्वानौ तच्छक्तिं खरदूषणौ ।
यज्वानश्च ससुत्वानो यानगोपीन्मखेषु सः ॥ ३७ ॥

३७. संविद्र इति ॥ किं च सह योधितवन्तौ सहयुध्वानौ ॥ "सहे च" इति युधेः क्वनिप् । खरदूषणौ तस्य रामस्य शक्तिं संविद्रः । सकर्मकत्वात् 'समो गम्यृच्छि—" इत्यादिना न तङ् । तस्याकर्मकाधिकारात् । सम्यग्जानीतः । वेत्तेर्लटि तसि शपो लुक् । ससुत्वानः सोमसुत्सहिताः यज्वानः आहिताग्नयश्च तच्छक्तिं संविदन्तीति वचनविपरिणामेनानुषङ्गः । स रामो यान् यज्वनो मखेष्वगोप्सीत् येषां मखा-

१ महद्धनुः T₂. | २ 'गोप्सीन्म' T₂, T₄, T., G., Com.

नगोप्सीदित्यर्थः। वनेष्वस्मद्रक्षतीति तद्गोपनादेव ते गुप्ता भवन्तीति भावः। गुपू रक्षणे। ऊदित्वादिडभावपक्षे सिचि हलन्तलक्षणा वृद्धिः॥

सुखजातः सुरापीतो नृजग्धो माल्यधारयः[1]।
अधिलङ्कं स्त्रियो दीव्यं मारब्धा बलिविग्रहम्[2]॥ ३८॥

३८. किं तर्हीदानीमुचितं तदाह सुखेति॥ सुखजातो जातसुखः सुरापीतः पीतसुरः। नरो जग्धा येन सः नृजग्धः जग्धनृको भक्षितमनुष्य इत्यर्थः॥ "अदो जग्धिर्ल्यप्ति किति" इत्यदो जग्धिरादेशः॥ आहिताग्न्यादित्वात्सर्वत्र वैकल्पिको निष्ठायाः परनिपातः। माल्यानां धारयो धारयिता माल्यधारयः॥ "अनुपसर्गाल्लिम्पविन्द—" इत्यादिना धारेः कर्त्तरि शप्रत्यये गुणायादेशौ॥ ईदृशः सन्। अधिलङ्कं लङ्कायाम्। विभक्त्यर्थेऽव्ययीभावः। स्त्रियो दीव्य। स्त्रीभिः करणैः क्रीडस्वेत्यर्थः॥ "दिवः कर्म च" इति करणस्य कर्मसंज्ञा॥ बलिविग्रहं प्रबलविरोधं मारब्धाः मा कृथाः। अन्यथा मरिष्यसीत्यर्थः। रभेराङ्पूर्वान्माङि लुङि थासि "झलो झलि" इति सिचो लोपः॥ "झषस्तथोर्धोऽधः"॥ "झलां जश् झशि" इति जश्त्वम्॥

तं भीतङ्कारमाक्रुश्य रावणः प्रत्यभाषत।
यातयामं विजितवान् स रामं[3] यदि किं ततः॥ ३९॥

३९. तमिति॥ रावणस्तं मारीचं भीतं कृत्वा भीतङ्कारम्॥ "कर्मण्याक्रोशे कृञः खमुञ्" इति खमुञ्। आक्रुश्य भीरुस्त्वमिति निर्भर्त्स्येत्यर्थः। प्रत्यभाषत। तदेवाह। स राघवो यातयामं वृद्धत्वाद्गतरसम्। 'यातयामं गतरसम्' इत्यभिधानात्। रामं जामदग्न्यं विजितवान् यदि ततः किम्। वृद्धपीडनात्क उत्कर्ष इत्यर्थः॥

अघानि[4] ताडकां[5] तेन लज्जाभयविभूषणा।
स्त्रीजने यदि तच्छ्लाघ्यं धिग्लोकं[6] क्षुद्रमानसम्॥ ४०॥

---

१ 'धारकः' T₂.
२ दीव्यन्मार' E₂.
३ रामो T₂.
४ आघानि E₂.
५ ताटका G., T., Com.
६ धिग्जनं E₂.

४०. अघानीति ॥ लज्जा च भयं च विभूषणं यस्याः सा न शौर्यशालिनी सा ताटका स्त्री तेन रामेणाघानि हता। हन्तेः कर्मणि लुङि च्चिणो लुक् ॥ "हो हन्तेः—" इति कुत्वम् ॥ स्त्रीजने कृतं तद्धननं स्त्रीहत्या श्लाघ्यं भूषणं यदि तर्हि क्षुद्रमानसं लघुचित्तमीदृग्गर्हिततमं कर्म बहु मन्यमानं लोकं धिक् ॥ निन्द्य इत्यर्थः। धिग्योगे द्वितीया ॥

यद्गेहेनर्दिनमसौ शरैर्भीरुमभाययत्[1]।
कुब्रह्मयज्ञके रामो भवन्तं पौरुषं न[2] तत्[3] ॥ ४१ ॥

४१. यदिति ॥ असौ रामो गेह एव नर्दतीति गेहेनर्दी गृहेशूरः। 'गेहेनर्दी गृहेशूरः पिण्डिमारश्च कथ्यते' इति हलायुधः ॥ "पात्रेसम्मितादयश्च" इति समासः ॥ तं भीरुं भवन्तम्। कुत्सितो ब्रह्मा कुब्रह्मः ब्राह्मणाभासो विश्वामित्रः। आगन्तुकब्राह्मण्यत्वादिति भावः ॥ "कुमहद्भ्यामन्यतरस्याम्" इति समासान्तष्टच् ॥ तस्य यज्ञके कुयज्ञे ॥ "कुत्सिते" इति कप्रत्ययः ॥ शरैः करणैः अभाययत्। अत एव हेतुभयप्रयुक्तयोः षुगात्मनेपदयोरभावः। बिभेर्ण्यन्ताल्लुङि शपि वृद्ध्यायादेशौ। तद्भीरुत्रासनं पुरुषस्य कर्म पौरुषं पुरुषकारो न। युवादित्वादण्। शूरत्रासनं पुरुषकारो न भीरुत्रासनमिति भावः ॥

चिरकालोषितं जीर्णं कीटनिष्कुषितं धनुः।
किं चित्रं यदि रामेण भग्नं क्षत्रियकान्तिके ॥ ४२ ॥

४२. चिरेति ॥ चिरकालमुषितं चिरकालोषितं पुराणमित्यर्थः। अत्यन्तसंयोगे द्वितीया ॥ "अत्यन्तसंयोगे च" इति समासः ॥ "वसतिक्षुधोरिट्" ॥ अत एव जीर्णं निःसारम्। जॄ वयोहानौ ॥ "ॠत इद्धातोः" इतीकारे "हलि च" इति दीर्घः ॥ "रषाभ्याम्—" इति नस्य णत्वम् ॥ कीटनिष्कुषितं घुणक्षतम् ॥ "निरः कुषः" ॥ "इण्निष्ठायाम्" इतीट् ॥ धनुरैशं चापं रामेण। क्षत्रियकः क्षत्रियाभासः जनः

---

१ °मभापयत् E1.
२ पुष्कलं च तत् T2, T4.
३ तु T3.

क्षात्रहीन इति भावः । कुत्सायां कन् । तस्यान्तिके ॥ "दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्" इति षष्ठ्यां "षष्ठी" इति षष्ठीसमासः ॥ "सप्तम्यधिकरणे च" इति चकारेण दूरान्तिकार्थग्रहणादन्तिक इति सप्तमी ॥ भग्नं यदि भग्नं चेत् । किं चित्रं न किञ्चिच्चित्रम् । जीर्णकाष्ठभङ्गस्य सुकरत्वादिति भावः । अत्राचित्रत्वस्य विशेषणगत्या चिरकालोषितादिपदार्थहेतुकत्वात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' इति लक्षणात् ॥

वनतापसके वीरौ विपक्षे [1]गलितादरौ ।
किं[2] चित्रं यदि सावज्ञौ मम्रतुः खरदूषणौ ॥ ४३ ॥

४३. वनेति ॥ वने तापसके तापसाभासे । कुत्सायां कन् । विपक्षे शत्रौ विषये गलितादरौ निष्प्रयत्नौ किं तु सावज्ञौ कियानयं क्षुद्र इति सावधीरणौ अगणितवन्ताविल्यर्थः । वीरौ खरदूषणौ मम्रतुर्यदि मृतौ चेत् ॥ "म्रियतेर्लुङ्लिङोश्च" इति नियमाल्लिटि न तङ् ॥ किं चित्रम् । प्रमत्तवधस्य सुकरत्वादिति भावः । पूर्ववदलङ्कारः ॥

त्वं[3]तु भीरुश्च दुर्बुद्धे नि[4]त्यं शरणकाम्यसि ।
गुणांश्चापह्नुषेऽस्माकं स्तौषि शत्रूंश्च नः[5] सदा ॥ ४४ ॥

४४. एवं मारीचोक्तान् रामपराक्रमानन्यथाकृत्य संप्रति श्लोकद्वयेन तन्निग्रहान्यथाकारपूर्वकमनन्तरकार्ये तं नियच्छति त्वमित्यादिना ॥ हे दुर्बुद्धे त्वं तु भीरुः । अत एव नित्यं शरणकाम्यसि शरणमात्मन इच्छसि च न त्वेकवीरः । अतस्त्वन्निग्रहोऽपि न पराक्रम इति भावः ॥ "काम्यच्च" इति काम्यचि तदन्ताल्लटि सिप् ॥ किं चास्माकं गुणानपह्नुषे च ॥ "थासः से" ॥

१ स्खलिता° D.
२ को दोषो $T_2$, $T_3$, $T_4$.
३ त्वं च भीरुः सुदुर्बुद्धे N., C., $T_1$,.
त्वं भीरुश्चासि दुर्बुद्धे $T_2$.
त्वं च भीरुश्च दुर्बुद्धे $E_2$.
त्वं तु भीरुः सुदुर्बुद्धे T.
४ नित्यं च रणकाम्यसि c., C., $T_1$,
नित्यं मरणकाम्यसि $E_2$.
५ नस्तथा T., G., Com.

शपो लुक् । तथा नोऽस्माकं शत्रून् स्तौषि प्रशंससे च । स्तौतेर्लेटि सिपि शपो लुक् ॥ "उतो वृद्धिर्लुकि हलि" इति वृद्धिः ॥

शीर्षच्छेद्यमतोऽहं त्वां करोमि क्षितिवर्धनम् ।
कारयिष्यामि वा कृत्यं निजिघृक्षुर्वनौकसौ ॥ ४५ ॥

४५. शीर्षेति ॥ अतोऽस्मादपराधात् शीर्षच्छेद्यं शीर्षच्छेदार्हम् ॥ "शीर्षच्छेदाद्यच्च" इति यत्प्रत्ययः । त्वां क्षितिवर्धनं मृतम् । नन्द्यादित्वाल्ल्युरित्युक्तम् । करोमि करिष्यामि । सामीप्ये वर्त्तमानप्रत्ययः । अथवा वनमोकः स्थानं ययोस्तौ वनौकसौ राज्यभ्रष्टौ रामलक्ष्मणौ निजिघृक्षुः निग्रहीतुमिच्छुरहम् । ग्रहेः सन्नन्तादुप्रत्ययः ॥ "सनि ग्रहगुहोश्च" इतीट्प्रतिषेधः । संप्रसारणभष्भावढत्वकुत्वषत्वानि । कृत्यं तन्निग्रहौपयिकं कर्म ॥ "विभाषा कृवृषोः" इति क्यप् ॥ त्वां त्वया कारयिष्यामि ॥ "हृक्रोरन्यतरस्याम्" इत्यणि कर्त्तुः कर्मत्वम् ॥

तमुद्यतनिशातासिं[1] प्रत्युवाच जिजीविषुः ।
मारीचोऽनुनयंस्त्रासादभ्यमित्र्यो भवामि ते ॥ ४६ ॥

४६. तमिति ॥ अथ जिजीविषुर्जीवितुमिच्छुः । जीवेः सन्नन्तादुप्रत्ययः । मारीचः उद्यतनिशातासिमुत्क्षिप्तनिशितखड्गम् । श्यतेर्निष्ठायाम् "आदेच उपदेशेऽशिति" इत्यात्वम् ॥ "शाच्छोरन्यतरस्याम्" इति विकल्पादित्वाभावः ॥ तं रावणं त्रासादनुनयन् प्रार्थयमानः ते तवाभ्यमित्र्योऽभ्यमित्रमलंगामी त्वदमित्राभिगामी ॥ "अभ्यमित्राच्छ च" इति चकाराद्यत्प्रत्ययः ॥ भवामीति प्रत्यवादीत् । सद्योमरणाद्वरमशुभस्य कालहरणमेवेति बुद्ध्वा तथा प्रवृत्त इत्यर्थः ॥

हरामि रामसौमित्री मृगो भूत्वा मृगद्युवौ ।
उद्योगमभ्यमित्रीणो[2] यथेष्टं त्वं च[3] सन्तनु ॥ ४७ ॥

१ °निशातासिः T₃.
D. reverses the 2nd and 4th Pádas.

२ °भ्यमित्रीयो E₁.
३ तु T₂, T₃, T₄, Com.

४७. हरामीति ॥ मृगैर्दीव्यत इति मृगद्युवौ मृगयासक्तौ। दिवः क्विप्॥ "च्छ्वोः शूडनुनासिके च" इति वकारस्य ऊठादेशो यणादेशो-ऽचकादेशौ ॥ रामसौमित्री रामलक्ष्मणौ मृगो भूत्वा हरामि अन्यत्र आकर्षामि। सामीप्ये वर्त्तमानप्रयोगः। त्वं तु अभ्यमित्रमभिसपत्न-मलंगामी अभ्यमित्रीणः सन्॥ "अभ्यमित्राच्छ च" इति चकारात् खप्रत्ययः। यथेष्टमुद्योगं प्रयत्नं सन्तनु कुरुष्वेत्यर्थः। तनोतेर्लोटि सिपि "उतश्च प्रत्ययात्—" इति हेर्लुक्॥

ततश्चित्रीयमाणोऽसौ हेमैरत्नमयो मृगः।
यथामुखीनः सीतायाः पुप्लुवे बहु लोभयन्॥ ४८॥

४८. तत इति ॥ ततो रावणानुनयानन्तरमसौ मारीचः रत्नानां हेम्नश्च विकारो रत्नहेममयो मृगः सन्॥ "मयड्वैतयोर्भाषायामभक्ष्या-च्छादनयोः" इति मयट्प्रत्ययः॥ अत एव चित्रीयमाणश्चित्रीभवन्॥ "नमोवरिवश्चित्रङः क्यच्"॥ चित्रङ् आश्चर्ये। 'अवयवे कृतलिङ्गं समुदाये पर्यवस्यति' इति क्यजन्तादात्मनेपदम्। शानच्। सीताया यथामुखं दर्शनं यस्मिन् यथामुखीनः संमुखीनः सन्॥ यथामुखमिति निपातनात्सादृश्येऽव्ययीभावः। तस्मात् "यथामुखसंमुखस्य दर्शनः खः" इति खप्रत्ययः। बहु भूयिष्ठं लोभयन् प्रलोभयन् पुप्लुवे प्लुतानि चकार॥

तेनादुद्रूषयद्रामं मृगेण मृगलोचना।
मैथिली विपुलोरस्कं प्रावुवूर्षुर्मृगाजिनम्॥ ४९॥

४९. तेनेति ॥ मृगलोचना मैथिली सीता मृगाजिनं पूर्वोक्तचित्रमृग-चर्म प्रावुवूर्षुः प्रावरितुमिच्छुः सती। प्राङ्पूर्वाद्वृञः सन्नन्तादुप्र-त्ययः॥ "इट् सनि वा" इति विकल्पादिडभावपक्षे "अज्झनगमां सनि" इति दीर्घे "उदोष्ठ्यपूर्वस्य" इति दन्त्योष्ठ्यस्यापि ग्रहणादुत्वे "र्वोरुपधाया दीर्घ इकः"। ततो द्विर्वचनादि। विपुलोरस्कं विशालव-

१ रत्नहेम° T₃, T., G., Com. | रक्तहेम° T₃, T₄.

क्षसं कर्मक्षमदेहसंपन्नमित्यर्थः ॥ "उरःप्रभृतिभ्यः कप्" इति कप् ॥ रामं तेन मृगेण करणेनादुद्यूषयत् देवितुमैषयत् । दीव्यतेः सनि "सनीवन्तर्ध—" इत्यादिना विकल्पादनिट्पक्षे ऊठादेशे यणादेशः । ततः सन्नन्तार्ण्णिचि लङ् । मृगवधे प्रावर्त्तयदित्यर्थः ॥

योगक्षेमकरं कृत्वा जानक्यां लक्ष्मणं ततः ।
मृगस्यानुपदी रामो जगाम गजविक्रमः ॥ ५० ॥

५०. योगेति ॥ ततो दुद्यूषानन्तरं गजविक्रमो गजगती रामो लक्ष्मणं सीतायाः जानक्याः योगक्षेमौ स्थितिरक्षणे करोतीति तत्करं कृत्वा ॥ "कृञो हेतु—" इत्यादिना हेत्वर्थे टप्रत्ययः ॥ "क्षेमप्रियमद्रेऽण्च" इत्यण्ग्रहणस्य तद्बाधकत्वेऽपि ग्रहणवता प्रातिपदिकेन तदन्तविधिनिषेधात्तदप्रवृत्तेरिति । मृगस्यानुपदी अन्वेष्टा सन् । संबन्धसामान्ये षष्ठी । कृद्योगाभावाद्गम्यमानान्वेषणक्रियापेक्षया कर्मणि षष्ठी वा । तदपेक्षयापि कारकोत्पत्तिशासनात् । जगाम ॥

स्थायं स्थायं क्वचिद्यान्तं क्रान्त्वा क्रान्त्वा स्थितं क्वचित् ।
वीक्षमाणो मृगं रामश्चित्रवृत्तिं विसिष्मिये ॥ ५१ ॥

५१. स्थायं स्थायमिति ॥ क्वचित्प्रदेशे स्थायं स्थायं पुनः पुनः स्थित्वा ॥ "आभीक्ष्ण्ये णमुल्च" इति णमुल् ॥ द्विर्वचनं चोपसंख्यानात् । पौनःपुन्यमाभीक्ष्ण्यम् । यान्तं प्लवमानं क्वचित्क्रान्त्वा क्रान्त्वा उत्प्लुत्योत्प्लुत्य । णमुल्चेति चकारात् क्त्वाप्रत्ययः । स्थितं तिष्ठन्तमत एव चित्रवृत्तिमद्भुतव्यापारं मृगं वीक्षमाणो रामो विसिष्मिये विस्मितवान् । स्मयतेर्ङित्वाल्लिटि तङ् ॥

चिरं क्लिशित्वा मर्माविद्रामो विलुभितप्लवम् ।
शब्दायमानमव्यात्सीद्भयदं क्षणदाचरम् ॥ ५२ ॥

---

१ सीताया N., C., T., G., T1, Com.
२ गत्वा गत्वा E1, स्थित्वा स्थित्वा क्वचित्क्वचित् E2.
३ क्वचित्स्थितम् T3, T4.
४ °स्तत्र चित्रं D. चित्रवृत्तं E1.
५ विलुलित C.
६ प्लुतम् E1, E2.

५२. चिरमिति ॥ मर्म विध्यतीति मर्मावित् मर्मभेदी । विध्यतेः क्विप् ॥ "नहिवृति—" इत्यादिना पूर्वस्य दीर्घः ॥ रामश्चिरं चिरकालम् । अत्यन्तसंयोगे द्वितीया । क्लिशित्वा क्लिष्ट्वा प्रयस्येत्यर्थः ॥ "क्लिशः क्त्वानिष्ठयोः" इति क्लिश्यतेर्विकल्पादिडागमः ॥ विलुभिता विमोहिताः चिरप्रयासाद् व्याकुलिताः प्लवाः प्लुतानि यस्य तम् ॥ "लुभो विमोहने" इतीट् ॥ शब्दायमानं शब्दं कुर्वाणं हा लक्ष्मणेत्युच्चैः क्रन्दन्तमित्यर्थः ॥ "शब्दवैर—" इत्यादिना क्यङ् ॥ भयदं भयंकरं शब्दविशेषणं वा । क्षणदाचरं मारीचमव्यात्सीत् विध्यति स्म । व्यध ताडने लुङि सिचि हलन्तलक्षणा वृद्धिः ॥

श्रुत्वा विस्फूर्जथुप्रख्यं[1] निनादं[2] परिदेविनी ।
मत्वा कष्टश्रितं[3] रामं सौमित्रिं गन्तुमैजिहत्[4] ॥ ५३ ॥

५३. श्रुत्वेति ॥ अथ सीता विस्फूर्जथुप्रख्यं वज्रघोषकल्पम् । 'स्फूर्जथुर्वज्रनिर्घोषः' इत्यमरः ॥ "ट्वितोऽथुच्" ॥ निनादं निनदं ॥ "नौ गदनद—" इत्यादिना पक्षे घञ् ॥ श्रुत्वा रामं कष्टश्रितं कृच्छ्रगतिमापन्नं मत्वा । 'स्यात्कृच्छ्रं कष्टमाभीलम्' इत्यमरः ॥ "द्वितीया श्रितातीत—" इत्यादिना द्वितीयासमासः ॥ परिदेवने विलपतीति परिदेविनी सती । देवृ देवने इति धातोर्भौवादिकात् "संपृच—" इत्यादिना घिनुण्प्रत्ययः ॥ सौमित्रिं लक्ष्मणं गन्तुमैजिहत् रामं प्रति गन्तुमीहयामास ॥ "समानकर्तृकेषु तुमुन्" ॥ ईहतेर्णौ चङि "द्विर्वचनेऽचि" इति णिलोपस्य स्थानिवद्भावात् "अजादेर्द्वितीयस्य" इति हेर्द्विर्भावे चुत्वाद्यभ्यासकार्यम् ॥

एष प्रावृषिजाम्भोदनादी भ्राता विरौति ते ।
त्रातेयं कुरु सौमित्रे भयात् त्रायस्व राघवम् ॥ ५४ ॥

५४. एष इति ॥ हे सौमित्रे प्रावृषि जातः प्रावृषिजः ॥ "प्रावृट्शरत्कालदिवां जे" इति सप्तम्या अलुक् ॥ स चासावम्भोदश्च स इव

१ प्रख्यनिनादं T₃.
२ निदानं T₃.
३ कष्टाश्रितं E₁.
४ °मौजिहत् C.

भवतीति तच्छादी ॥ "कर्तर्युपमाने" इति णिनिः ॥ एष ते भ्राता रामो विरौति क्रोशति। भ्रातेः कर्म भ्रातेयं भ्रात्युचितं कुरु ॥ "कपिज्ञात्योर्ढक्" ॥ तदेवाह। राघवं रामं भयाद्भयहेतोस्त्रायस्व रक्ष ॥ "भीत्रार्थानां भयहेतुः" इत्यपादानात्पञ्चमी ॥

रामसंघुषितं नैतन्मृगस्यैव विवञ्चिषोः।
रामस्वनितसङ्काशः स्वान इत्यवदत्स ताम् ॥ ५५ ॥

५५. रामेति ॥ हे आर्ये एतद्रामस्य संघुषितं संघुष्टं स्वरो न भवति। भावे क्तः। किन्तु वञ्चितुं प्रलोभयितुमिच्छोः विवञ्चिषोः। वञ्चु गताविति भौवादिको धातुरनेकार्थत्वाद्धातूनां प्रलोभने प्रयुक्तः। वञ्चु प्रलोभने इति चौरादिकाद्वा। तेषां नित्यणिच्कत्वादिति। मृगस्यैव रामस्वनितसङ्काशो रामस्वरसदृशः स्वानः स्वरः ॥ "स्वनहसोर्वा" इति विकल्पाद्धञ् ॥ इति लक्ष्मणस्तां सीतामवददुक्तवान् ॥

आप्यानस्कन्धकण्ठांसं रुषितं[1] सहितुं रणे[2]।
प्रोर्णुवन्तं[3] दिशो बाणैः काकुत्स्थं भीरु कः क्षमः[4] ॥ ५६ ॥

५६. आप्यानेति ॥ हे भीरु कातरे। संज्ञापूर्वकस्य विधेरनित्यत्वान्न गुणः। आप्यानं स्थूलं ॥ प्यै वृद्धाविति धातोरात्वे "संयोगादेरातो धातोर्यण्वतः" इति निष्ठानत्वम्। ओप्यायी वृद्धौ इत्यस्य तु "ओदितश्च" इति निष्ठानत्वम्। यलोपः। 'आङ्पूर्वस्यान्धूधसोर्नित्यम्' इति नियमात् "प्यायः पी" इति पीभावोऽपि न भवति। स्कन्धः ककुत्प्रदेशः स च कण्ठश्च अंसः भुजशिखरं च। प्राण्यङ्गत्वादेकवद्भावः। तदाप्यानं यस्य तं कर्मक्षमाङ्गमित्यर्थः। रुषितं रुष्टम् ॥ "रुष्यमत्वरसंघुषास्वनाम्" इति विकल्पादिट् ॥ बाणैर्दिशः प्रोर्णुवन्तमाच्छादयन्तम्। ऊर्णोतेः शतरि उवङादेशः। काकुत्स्थं रामं रणे सहितुं सोढुं

१ मृगस्यैष E1.
२ सहितुं रुषितं रणे E3.
३ ऊर्णुवन्तं E1.
४ क्षमी E1.

पर्यवस्थातुमित्यर्थः ॥ "तीषसहलुभरुषरिषः" इति विकल्पादिट् ॥ कः क्षमः शक्तः । क्षमेः शक्त्यर्थत्वात् ॥ "शकधृष—" इत्यादिना तुमुन् ॥

देहं विभ्रक्षुरस्त्राग्नौ मृगः प्राणैर्दिदेविषन् ।
ज्याघुष्टकठिनाङ्गुष्ठं राममायान्मुमूर्षया ॥ ५७ ॥

५७. देहमिति ॥ किं तु मृग एवास्त्राग्नौ शराग्नौ देहं स्वाङ्गं बिभ्रक्षुः भ्रष्टुं पक्तुमिच्छुर्बिभ्रक्षुः । भ्रस्जेः सन्नन्तादुप्रत्ययः । इडागमरमागमाभावपक्षे "स्कोः संयोगाद्योः—" इति सलोपे व्रश्चादिना षत्वे "षढोः—" इति कत्वे "आदेशप्रत्यययोः" इति षत्वम् ॥ प्राणैः ॥ "दिवः कर्म च" इति चकारात्करणत्वम् ॥ दिदेविषन् देवितुं क्रीडितुमिच्छन् ॥ "सनीवन्त—" इत्यादिना विकल्पादिट् ॥ मुमूर्षया मर्तुमिच्छया । मृङः सन्नन्तादप्रत्यये टाप् । बुबूर्षुवत्प्रक्रिया । ज्याघृष्टेन मौर्वीघर्षणेन । भावे क्तः । कठिनाङ्गुष्ठं तत्र क्षुण्णमित्यर्थः । राममायादायातः । यातेराङ्पूर्वाल्लुङ् । रणे रामाभियायिनो मरणं न तु रामस्येत्यर्थः ॥

शत्रून्भीषयमाणं तं रामं विस्मापयेत कः ।
मा स्म भैषीस्त्वयाद्यैव कृतार्थो द्रक्ष्यते पतिः ॥ ५८ ॥

५८. शत्रूनिति ॥ किं च शत्रून्भीषयमाणं त्रासयन्तं न तु स्वयं कुतश्चिद्बिभ्यतमित्यर्थः ॥ "भियो हेतुभये षुक्" ॥ "भीस्म्योर्हेतुभये" इत्यात्मनेपदम् ॥ शानच् । तं रामं कोऽन्यो विस्मापयेत विजयेन विस्मितं कुर्यात् कस्तं जेष्यतीत्यर्थः ॥ "भीस्म्योः—" इति हेतुस्मय आत्मनेपदम् ॥ "नित्यं स्मयतेः" इत्यात्वे पुगागमः ॥ मा स्म भैषीः मा बिभीहि ॥ "स्मोत्तरे लङ् च" इति चकाराल्लुङि सिचि वृद्धिः ॥ अद्यैवाधुनैव त्वया कृतार्थः कृतकृत्यः पतिः प्रियो द्रक्ष्यते दर्शिष्यते । दृशेर्लृटि चिण्वदिडभावपक्षे व्रश्चादिनाषत्वे कत्वम् । स्यसकारस्य षत्वं च ॥

१ घृष्ट Com. T. | २ विस्माययेत B.

यायास्त्वमिति कामो[1] मे गन्तुमुत्सहसे न च[2]।
इच्छुः कामयितुं त्वं मामित्यसौ जगदे तया ॥ ५९ ॥

५९. यायेति ॥ त्वं यायाः रामान्वेषणाय गच्छेः इति मे कामोऽभिप्रायः ॥ "कामप्रवेदनेऽकच्चिति" इत्यकच्चित्युपपदे कामप्रवेदने स्वाभिप्रायाविष्करणापराख्ये लिङ्। त्वं तु गन्तुं नोत्सहसे नेच्छसि ॥ "शकधृष—" इत्यादिना तुमुन् ॥ ततस्त्वं मां कामयितुं कामिनीं कर्त्तुं कलत्रीकर्त्तुमिच्छुरभिलाषुकः। कामिनीशब्दात् तत्करोतीति ण्यन्तात् "समानकर्त्तृकेषु तुमुन्"। णाविष्ठवद्भावात् "तसिलादिष्वाकृत्वसुचः" इति पुंवद्भावः ॥ "टेः" इति टिलोपश्च ॥ "विन्दुरिच्छुः" इति निपातः ॥ इतीत्थं तया सीतया असौ लक्ष्मणो जगदे गदितः। कर्मणि लिट् ॥

मृषोद्यं प्रवदन्तीं तां सत्यवद्यो रघूत्तमः।
निरगाच्छत्रुहस्तं त्वं यास्यसीति शपन् वशी ॥ ६० ॥

६०. मृषोद्यमिति ॥ वशो वशीकरणम्। "वशिरण्योरुपसंख्यानम्" इत्यप्। सोऽस्यास्तीति वशी जितेन्द्रियः पूर्वोक्तशङ्कानर्ह इत्यर्थः सत्यवद्यं सत्यवादः ॥ "वदः सुपि क्यप् च" इति चकाराद्यत् ॥ तद्वान् सत्यवद्यः सत्यवादी। मत्वर्थीयोऽकारः। रघूत्तमो लक्ष्मणः मृषोद्यं त्वं मां कामयसे इति मृषावादम् ॥ "राजसूय—" इत्यादिना क्यबन्तो निपातः ॥ प्रवदन्तीं तां सीतां त्वं शत्रुहस्तं यास्यसीति शपन् अनिष्टागमोक्त्या निगृह्णन्निरगान्निर्गतः ॥

गते तस्मिन् जलशुचिः शुद्धदन्[3] रावणः शिखी।
जज्ञपूकोऽक्षमालावान् धारयो[4] मृदलाबुनः ॥ ६१ ॥

६१. अथास्मिन्नन्तरे रावणप्रवेशं चतुर्भिराह गत इत्यादिभिः ॥ तस्मिन् लक्ष्मणे गते सति जलशुचिः स्नानपूत इत्यर्थः। शुद्धदन् शुभ्रदन्तः ॥ "अग्रा-

---

१ कामेन हन्तु° T3.
२ च न T3.
न चेत् E3.
३ शुद्धदन्रावणः E1.
४ धारयन् C.

न्तशुभ्र—" इत्यादिना दन्तशब्दस्य विभाषा दत्रादेशः । शिखी शिखावान् । नित्ययोगे व्रीह्यादित्वादिनिः । जञ्जपूकः मायावित्वात् गर्हितजापी ॥ "लुपसद्चर—" इत्यादिना भावगर्हायां यङ् ॥ "जपजभ—" इत्यादिना अभ्यासस्य नुगागमः ॥ "यजजपदशां यङः" इत्यूकप्रत्ययः ॥ अक्षमालावान् जपमाली । संसर्गे मतुप् । अलाब्वाः विकारः फलमलाबु ॥ "ओरञ्" ॥ "फले लुक्" ॥ नपुंसकह्रस्वत्वम् । मृत् क्षारकामृत्तिका सा चालाबु च मृदलाबु ॥ "जातिरप्राणिनाम्" इति द्वन्द्वैकवद्भावः ॥ तस्य धारयो धारयिता । कर्मणि षष्ठी ॥ "अनुपसर्गाल्लिम्प—" इत्यादिना शप्रत्ययः ॥

कमण्डलुकपालेन शिरसा च मृजावता ।
संवरुय लाक्षिके वस्त्रे मात्राः[1] संभाण्ड्य दण्डवान् ॥ ६२ ॥

६२. कमण्डल्विति ॥ कमण्डलुरेव कपालं कर्परं जीर्णकमण्डलुरित्यर्थः । तेन मृजा शुद्धिः ॥ "षिद्भिदादिभ्योऽङ्" ॥ तद्वता शिरसा । खल्वाटत्वात्स्निग्धेनेत्यर्थः । तेन शिरसा चोपलक्षितः । लाक्षया रक्ते लाक्षिके ॥ "लाक्षारोचनाट्ठक्" इति ठक् ॥ वस्त्रे संवरुय समाच्छाद्य ॥ "मुण्डमिश्र—" इत्यादिना "वस्त्रात्समाच्छादने" णिजन्तात्क्त्वो ल्यप् । मात्रां पूर्वोक्तानुक्तालाबुशिक्यादिपरिकरम् । 'मात्रा परिच्छदे कैशे' इति यादवः । संभाण्ड्य समाचित्य समाहृत्येत्यर्थः ॥ "पुच्छभाण्डचीवर—" इत्यादिना "भाण्डात्समाचयने" इति णिजन्तात्क्त्वो ल्यप् ॥ समागत्येत्युत्तरेण सम्बन्धः । दण्डवान् त्रिदण्डीत्यर्थः । अत एव शिखीत्युक्तम् । एकदण्डिनः शिखाभावात् ॥

अधीयन्नात्मविद्विद्यां[2] धारयन्मस्करिव्रतम् ।
वदन्बह्वङ्गुलिस्फोटं भ्रूक्षेपं च विलोकयन्[3] ॥ ६३ ॥

---

१ मात्रां D., B., E1, T., G., Com.
२ °मात्मवद्विद्यां T3, Com.
३ भ्रूविक्षेपं च लोकयन् T3, T4. भ्रूविक्षेपं विलोकयन् T., G., Com., T2.

६३. अधीयन्निति ॥ एवंभूतो रावणः आत्मवतां विद्यामुपनिषदमधीयन्नकृच्छ्रेणाधीयानः मस्करिव्रतं परिव्राजकनियमम् ॥ "मस्करमस्करिणौ वेणुपरिव्राजकयोः" इति निपातनात्सुट् ॥ धारयन्नकृच्छ्रेण दधानः ॥ "इङ्धार्योः शत्रकृच्छ्रिणि" इत्युभयत्र शतृप्रत्ययः । बहु प्रचुरं यथा तथा अङ्गुलिस्फोटमङ्गुलिं चालयित्वा वदन् । प्रायेणाङ्गुलिसंज्ञयैव जल्पन्नित्यर्थः । भ्रुवं विक्षिप्य भ्रूविक्षेपम् । चक्षुषि पतितां भ्रुवं हस्तेनापक्षिप्येत्यर्थः । उभयत्रापि "स्वाङ्गेऽध्रुवे" इति णमुल्प्रत्ययः । विलोकयन् पश्यंश्च ॥

संदिदर्शयिषुः साम निजुह्नूषुः क्षपाटताम् ।
चङ्क्रमावान् समागम्य[१] सीतामूचे सुखाभव[२] ॥ ६४ ॥

६४. समिति ॥ साम सान्त्वं संदिदर्शयिषुः संदर्शयितुमिच्छुः । दर्शयतेः सन्नन्तादुप्रत्ययः । क्षपाटतां निशाचरत्वं निजुह्नूषुः निह्नोतुमिच्छुः । निजं क्रौर्यमाच्छाद्य शान्तिं नाटयन्नित्यर्थः ॥ "अज्झनगमां सनि" इति दीर्घः ॥ कुटिलं क्रमणं गतिः चङ्क्रमा ॥ "नित्यं कौटिल्ये गतौ" इति यङि "नुगतोऽनुनासिकान्तस्य" इत्यभ्यासस्य नुक् ॥ "अ प्रत्ययात्" इत्यप्रत्यये टाप् ॥ "अतो लोपः" ॥ "यस्य हलः" इति यकारलोपः ॥ तद्वान् चङ्क्रमावान् । जरानाटितकेन कुटिलं गच्छन्नित्यर्थः । एवंभूतः समागम्य सीतां सुखाकुरु अस्मच्चित्ताराधनं कुर्वित्यूचे ॥ "सुखप्रियादानुलोम्ये" इति सुखशब्दात्कृयोगे डाच्प्रत्ययः । स्वाम्यादिचित्ताराधनमानुलोम्यम् ॥

सायन्तनीं तिथिप्रण्यः पङ्कजानां दिवातनीम् ।
कान्तिं कान्त्या सदा[३]तन्या ह्रेपयन्ती शुचिस्मिता[४] ॥ ६५ ॥

६५. सायमिति ॥ हे शुचिस्मिते सीते । तिथीः शुक्लकृष्णपक्षतिथीः प्रणयति पञ्चदशानामपि कलानामेकैकवृद्धिह्रासक्रमेण पञ्चदश पञ्च-

१ समागत्य N., C., T1, E2, E3, c.
२ सुखाकुरु T., G., Com.
B. adds कुलकम् after 64th verse.
३ सनातन्या T3, T., G., Com.
४ शुचिस्मिते T., G., Com.

दश प्रवर्त्तयतीति तिथिप्रणीश्चन्द्रः ॥ "सत्सूद्विष—" इति क्विप् ॥ "उपसर्गादसमासेऽपि णोपदेशस्य" इति णत्वम् ॥ तस्य तिथिप्रण्यश्चन्द्रस्य ॥ "एरनेकाचः—" इति यणादेशः ॥ साये सायं वा भवा सायन्तनी । सायशब्दात्स्यतेर्घञन्तादस्मादेव निपातनान्मान्तात्सायंशब्दाद्वा अव्ययात् "सायंचिरम्—" इत्यादिना ट्युप्रत्यये तुट् । तां कान्तिं पङ्कजानां दिवाभवां दिवातनीं कान्तिं सदा भवा सनातनी । स एव प्रत्ययः । तया कान्त्या ह्रेपयन्ती त्रपयन्ती । कादाचित्कात्सनातनस्योत्कृष्टत्वादिति भावः । अत एवोपमानादुपमेयस्याधिक्यकथनात् व्यतिरेकालङ्कारः । 'भेदप्रधानं सामान्यमुपमानोपमेययोः । आधिक्याल्पत्वकथनाद्व्यतिरेकः स उच्यते" ॥ इति लक्षणात् ॥

का त्वमेकाकिनी भीरु निरन्वयजने[1] वने ।
क्षुध्यन्तोऽप्यघसन् व्यालास्त्वामपालां कथं न वा ॥ ६६ ॥

६६. का त्वमिति ॥ हे भीरु त्रस्नो एकाकिन्यसहाया ॥ "एकादाकिनिच्चासहाये" ॥ "ऋन्नेभ्यो ङीप्" ॥ निरन्वयाः निरनुप्रवेशाः नराः यस्मिंस्तस्मिन् मनुष्यसंचारशून्ये वने का त्वम् । क्षुध्यन्तो बुभुक्षमाणाः व्यालाः श्वापदाः । 'व्यालः श्वापदसर्पयोः' इति विश्वः । पालयतीति पालः । पचाद्यच् । अपालामरक्षकां त्वां कथं वा नाघसन्नपि नाभक्षयन्नपि । अहो महच्चित्रमिति भावः । अपिः संभावनायाम् ॥ "लुङ्सनोर्घस्लृ" इत्यदेर्घस्लादेशो लृदित्वादङ् ॥

हृदयङ्गममूर्त्तिस्त्वं सुभगम्भावुकं वनम् ।
कुर्वाणा भीममप्येतद्दृदाभ्यैः केन हेतुना ॥ ६७ ॥

६७. हृदयङ्गमेति ॥ हे सौम्ये हृदयं गच्छन्ती हृदयङ्गमा हृद्या मूर्त्तिर्यस्याः सा ॥ "गमश्च" इति खचि मुम् ॥ त्वं भीमं भयङ्करमप्येतद्वनम् । असुभगं सुभगं भवतीति सुभगम्भावुकं सौम्यं कुर्वाणा ॥

१ नरे T2, T3, T4, D., T., G., Com. | 'वने वरे E1.

"कर्त्तरि भुवः—" इत्यादिना च्व्यर्थे भुवः खुकञ् ॥ मुमागमः । केन हेतुना अभ्यैरभ्यगच्छः । इणो लङ्याड्वृद्धिः । वद ॥

सुकृतं प्रियकारी त्वं कं रहस्युपतिष्ठसे ।
पुण्यकृच्चाटुकारस्ते किङ्करः सुरतेषु कः ॥ ६८ ॥

६८. सुकृतमिति ॥ हे सुभगे त्वं रहस्येकान्ते प्रियं करोतीति प्रियकारी प्रियकरा अनुकूलवर्तिनी सती ॥ "क्षेमप्रियमद्रेऽण् च" इत्यणि ङीप् ॥ कं सुकृतं साधुकारिणम् ॥ "सुकर्मपाप—" इत्यादिना क्विप् ॥ उपतिष्ठसे संगच्छसि । उपात्संगतिकरणे आत्मनेपदम् । किं च सुरतेषु ते तव चाटुकारः प्रियवादी ॥ "न शब्दश्लोक—" इत्यादिना टप्रतिषेधात् "कर्मण्यण्" ॥ किमपि करोत्यानुकूल्येनेति किङ्करो दासः ॥ "कृञो हेतु—" इत्यादिनानुलोम्ये टप्रत्ययः ॥ पुण्यकृत् कः । अकृतपुण्येन दुर्लभत्वादीदृक्फलस्येति भावः ॥ "सुकर्म—" इत्यादिनैव क्विप् । कस्ते भर्त्तेति प्रश्नार्थः । एतेन समानराग उक्तः । अन्यथा रसाभासप्रसङ्गात् । किङ्कर इत्यत्र हेत्वाद्यर्थविवक्षायां "कृञो हेतु—" इत्यादिना ट एव । जातिः किङ्करीत्यादिङीबन्तप्रयोगदर्शनात् । तदविवक्षायां तु "दिवा—'इत्यादि सूत्रप्राप्तटप्रत्ययबाधेन 'किंयत्तद्बहुषु कृञोऽज्विधानम्' इत्यजेव । किङ्करा यत्करेत्यादिटाबन्तप्रयोगदर्शनात् । यत्तु '"दिवा—"आदिनैव टप्रत्ययः अज्विधानं तु स्त्रीलिङ्गमात्रविषयम्' इति जयमङ्गलाकारव्याख्यानं तद्वृत्तावच्प्रत्ययान्तत्वाभिव्यक्त्यर्थं किङ्करा यत्करेति टाबन्तोदाहरणदर्शनाद्भ्रान्तमित्युपेक्ष्यम् ॥

परिपर्युदधे रूपमाद्युलोकाच्च दुर्लभम् ।
भावत्कं दृष्टवत्स्वेतदस्मास्वधि सुजीवितम् ॥ ६९ ॥

६९. परिपरीति ॥ उदधेः परिपरि उदधिं वर्जयित्वा स्थितमिति शेषः । तत्रापि दुर्लभमित्यर्थः ॥ "परेर्वर्जने" ॥ 'असमासे वा' इत्यसमासपक्षे विकल्पाद्द्विर्वचनम् ॥ "अपपरी वर्जने" इति कर्मप्रवचनीयत्वाद्द्वितीयाप्राप्तौ "पञ्चम्यपाङ्परिभिः" इति तदपवादिनी पञ्चमी ॥

आद्युलोकादास्वर्गाच्च दुर्लभम् । भूवत्स्वर्गेऽपि दुर्लभमित्यर्थः ॥ "आङ्मर्यादाभिविध्योः" इति विकल्पादसमासः ॥ "आङ् मर्यादावचने" इति वचनग्रहणादभिविधावपि कर्मप्रवचनीयत्वेऽपि पूर्ववत्पञ्चमी । भवत्या इदं भावत्कं भवदीयम् ॥ "भवतष्ठक्छसौ" इति ठकि ठक्छसोरुपसङ्ख्यानात्पुंवद्भावे "इसुसुक्तान्तात्कः" ॥ एतद्रूपं हष्टवत्त्वस्मासु अधि अस्मदधिकरण इत्यर्थः । "अधिपरी अनर्थकौ" इति कर्मप्रवचनीयसंज्ञायाः गत्युपसर्गसंज्ञानिवृत्तिमात्रार्थत्वात् तद्योगेऽपि न द्वितीया । विभक्त्यर्थमात्रद्योतकत्वमानर्थक्यम् । 'तिङ्कृत्तद्धितादिष्वपरिगणनात्तद्द्योतितेऽप्यर्थे भवत्येव विभक्तिः' इति न्यासकारः । सुजीवितमिति वर्त्तत इति शेषः । त्वद्रूपदर्शनादस्मज्जीवितं सुजीवितमित्यर्थः ॥

> आपीतमधुका[1] भृङ्गैः सुदिवेवारविन्दिनी ।
> सत्परिमलक्ष्मीका[2] नापुंस्कासीति मे मतिः ॥ ७० ॥

७०. आपीतेति ॥ भृङ्गैरापीतमधुका निष्पीतमकरन्दा । वैभाषिकः शैषिकः कप् । शोभना दिवा दिनं यस्याः सा सुदिवा । अर्ककरसम्पर्कशालिनीत्यर्थः ॥ "सुप्रातसुश्वसुदिव—" इत्यादिना समासान्तनिपातः ॥ अरविन्दिनी कमलिनीव स्थिता । सती परिमललक्ष्मीर्विमर्दगन्धसंपत्तिर्यस्याः सा सत्परिमललक्ष्मीका । 'विमर्दोत्थे परिमलो गन्धे जनमनोहरे' इत्यमरः । एकवचनान्तस्य लक्ष्मीशब्दस्योरःप्रभृतिषु पाठात् "उरःप्रभृतिभ्यः कप्" इति बहुव्रीहौ समासान्तः कप् । छन्दोभङ्गवहनं तु पूर्ववत् । ईदृशी त्वमपुंस्का अविद्यमानपुंस्का । अविद्यमानपुरुषसम्पर्केत्यर्थः । लक्ष्मीशब्दवत्पुंशब्दस्यैकवचनस्य उरःप्रभृतिपाठात्कप् ॥ "पुमः खय्यम्परे" इति पुंसो रुत्वे विसर्जनीयस्य "संपुंकानां सो वक्तव्यः" इति ×कपापवादी सः ॥ नासि न भवसि । किं तु भुक्तपूर्वैवेति मे मतिर्मम प्रतिपत्तिः ॥

---

१ आपीत N., T3, D., T., G., Com. | २ °परीमल° T3, T4.

मिथ्यैव श्रीः श्रियम्मन्या श्रीमन्मन्यो मृषा हरिः।
साक्षात्कृत्याभिमन्येऽहं त्वां हरन्तीं श्रियः श्रियम् ॥ ७१ ॥

७१. मिथ्येति ॥ श्रियो लक्ष्म्याः श्रियं शोभां हरन्तीं ततोऽधिकशोभामित्यर्थः। त्वां साक्षात्कृत्य प्रत्यक्षीकृत्य ॥ "साक्षात्प्रभृतीनि च" इति पक्षे गतित्वात्समासे क्त्वो ल्यप् ॥ अहं श्रियमात्मानं मन्यमाना श्रियम्मन्या ॥ "आत्ममाने खश्च" ॥ "दिवादिभ्यः श्यन्" ॥ "इच एकाचोऽम्प्रत्ययवच्च" इत्यमागमे तस्याम्प्रत्ययवद्भावात् "न विभक्तौ तुस्माः" इति मलोपप्रतिषेधः। क्विबन्तानां धातुत्वानपायादियङादेशः। श्रीर्मिथ्यैव न श्रीरित्यर्थः। श्रीमन्तमात्मानं मन्यमानः श्रीमन्मन्यः। पूर्ववत्खश्। हरिर्मृषैव। न श्रीमानित्यर्थः। किं तु त्वमेव श्रीः त्वदीय एव श्रीमानिति भावः। इत्यभिमन्ये ॥

नोदकण्ठिष्यतात्यर्थं त्वामैक्षिष्यत चेत्स्मरः।
खेलायन्ननिशं नापि सजूःकृत्य रतिं वसेत् ॥ ७२ ॥

७२. नेति ॥ स्मरः त्वामैक्षिष्यत चेत् ईक्षेत चेत् रतिं प्रति अत्यर्थं नोदकण्ठिष्यत किंचिदपि नोत्कण्ठेतेत्यर्थः। क्रियातिपत्तौ लृङ्। किंचानिशं खेलायन् क्रीडन्। कण्ड्वादियगन्ताल्लटः शत्रादेशः। रतिं सजूःकृत्य सहचरीकृत्यापि। 'सजूःकरोत्यात्मनेऽपि साह्ये सत्राकरोति च' इति भट्टमल्लः। ऊर्यादित्वेन गतित्वात्समासे क्त्वो ल्यप्। न वसेत् ॥

वल्गूयन्तीं विलोक्य त्वां स्त्री न मन्तूयतीह का।
कान्तिं नाभिमनायेत को वा स्थाणुसमोऽपि ते ॥ ७३ ॥

७३. वल्गूयन्तीमिति ॥ वल्गूयन्तीं मनो हरन्तीं त्वां विलोक्य इहास्मिन् लोके का स्त्री न मन्तूयति न कुप्यति नेर्ष्यतीत्यर्थः। उभयत्र धातोः कण्ड्वादित्वाद्यक् ॥ "अकृत्सार्वधातुकयोर्दीर्घः" किं च स्थाणु-

१ श्रियं श्रियः N., C., T., B., T1, G. | २ खेलयन् T2, T3.

समः काष्ठतुल्योऽत्यन्तमूढोऽपि रुद्रतुल्योऽपि वा कस्ते तव कान्ति लावण्यं विलोक्य नाभिमनायेत नोत्सुकायेत । भृशादित्वात् क्यङ् सलोपश्च । संभावनायां लिङ् ॥

दुःखायते जनः सर्वः स एवैकः सुखायते ।
यस्योत्सुकायमाना त्वं न प्रतीपायसेऽन्तिके[1] ॥ ७४ ॥

७४. दुःखायत इति ॥ सर्वो जनो दुःखायते दुःखमनुभवति । किं तु स एक एव सुखायते सुखमनुभवति ॥ "सुखादिभ्यः कर्तृवेदनायाम्" इत्युभयत्रापि क्यङ् ॥ यस्यान्तिके त्वमुत्सुकायमाना उत्सुकाभवन्ती न प्रतीपायसे न प्रतीपा अप्रतिकूला भवसि । उभयत्रापि भृशादित्वात्क्यङ् ॥

कः पण्डितायमानस्त्वामादायामिषसन्निभाम् ।
त्रस्यन् वैरायमाणेभ्यः शून्यमन्ववसद्वनम् ॥ ७५ ॥

७५. क इति ॥ अपण्डितः पण्डितो भवन् पण्डितायमानो दुर्बुद्धिः कः । भृशादित्वात्क्यङ् । आमिषसन्निभां मांसपिण्डकल्पां तद्वन्मृद्वङ्गीमित्यर्थः । त्वामादायानीय वैरायमाणेभ्यो वैरं कुर्वाणेभ्यः ॥ "शब्दवैर—" इत्यादिना क्यङि शानच् ॥ "भीत्रार्थानाम्—" इत्यपादानत्वात्पञ्चमी ॥ त्रस्यन् शून्यं वनमन्ववसत् । वने उषितवानित्यर्थः ॥ "उपान्वध्याङ्वसः" इत्यधिकरणस्य कर्मत्वम् ॥

ओजायमाना तस्यार्थं[2] प्रणीय[3] जनकात्मजा ।
उवाच दशमूर्धानं सादरा[4] गद्गदं वचः ॥ ७६ ॥

७६. ओजायमानेति ॥ ओज इवाचरन्ती ओजायमाना । मूर्त्तमोज इव स्थितेत्यर्थः ॥ "कर्त्तुः क्यङ् सलोपश्च" इति क्यङ् नित्यं सलोपश्च ।

---

१ °ऽन्तिकम् C.
२ °र्थे E1, E2.
३ प्रदाय T3, T., G., Com.
४ सादरं T4.

"ओजसोऽप्सरसो नित्यं पयसस्तु विभाषया" इति वचनात् । जनकात्मजा सीता तस्य रावणस्य । सम्प्रदानत्वेऽपि संबन्धसामान्ये षष्ठी । अर्घ्यमर्घार्थं जलम् ॥ "पादार्घाभ्यां च" इति यत्प्रत्ययः ॥ प्रदाय दत्त्वा सादरा सती दशमूर्धानं रावणं गद्गदं भयात्किञ्चित्कण्ठं यथा तथा वच उवाच । "ब्रुविशासि—" इति वचनात् द्विकर्मकत्वम् ॥

महाकुलीन ऐक्ष्वाके वंशे दाशरथिर्मम ।
पितुः प्रियङ्करो भर्त्ता क्षेमकारस्तपस्विनाम् ॥ ७७ ॥

७७. यत्पृष्टं सुकृतं प्रियकारीत्यत्र कस्ते भर्त्तेति तत्रोत्तरमाह महाकुलीन इति ॥ महाकुलस्यापत्यं पुमान् महाकुलीनः ॥ "महाकुलादञ्खञौ" इति विकल्पादनुवृत्तः खप्रत्ययः । आदिवृद्धिपाठे सौत्रः खञ्प्रत्ययः । इक्ष्वाकूणामयमैक्ष्वाकः ॥ "दाण्डिनायन—" इति निपातनादुकारलोपः । तस्मिन्वंशे दाशरथिर्दशरथसुतः ॥ "अत इञ्" ॥ मम भर्त्ता । कथंभूतः । पितुः प्रियङ्करः प्रियकारी । तपस्विनां क्षेमकारः क्षेमङ्करः ॥ "क्षेमप्रियमद्रेऽण् च" इति यथाक्रमं खजणौ ॥

निहन्ता वैरकाराणां सतां बहुकरः सदा ।
पारश्वधिकरामस्य शक्तेरन्तकरो रणे ॥ ७८ ॥

७८. निहन्तेति ॥ वैरकाराणां वैरायितॄणाम् ॥ "न शब्द—" इत्यादिना टप्रतिषेधे "कर्मण्यण्" ॥ कर्मणि षष्ठी । निहन्ता । तृच् । सदा सतां बहुकरो बहूपकर्त्ता ॥ "कृञो हेतु—" इत्यादिना ताच्छील्ये टप्रत्ययः ॥ शेषं किङ्करवत् । परश्वधः प्रहरणमस्य पारश्वधिकः ॥ "परश्वधाट्ठञ्च" इति ठक् ॥ तस्य रामस्य परशुरामस्य । 'द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः' इत्यमरः । शक्तेः सामर्थ्यस्य रणे अन्तकरो नाशकरः ॥ "दिवाविभा—" इत्यादिना टप्रत्ययः ॥

---

१ माहा° D., E1. | २ क्षेमंकरः C.

अध्वरेष्विष्टिनां पाता पूर्त्ते[1] कर्मसु सर्वदा ।
पितुर्नियोगाद्राजत्वं हित्वा योऽभ्यागमद्वनम्[2] ॥ ७९ ॥

७९. अध्वरेष्विति ॥ अध्वरेषु यागेषु इष्टमेभिरिष्टिनः । अध्वरानिष्टवन्त इत्यर्थः ॥ "इष्टादिभ्यश्च" इतीनिप्रत्ययः । 'क्तस्येन्विषयस्य कर्मणि सप्तमी वक्तव्या' । तेषां पाता रक्षिता । सर्वदा पूर्त्तकर्मसु खातश्राद्धादिकर्मसु पाता तेषामपि रक्षक इत्यर्थः । यो रामः पितुर्नियोगाद्राजत्वं राज्यं हित्वा वनमभ्यगमत् । गमेर्लुङि लृदित्वादङ् ॥

पतत्रिक्रोष्टुजुष्टानि रक्षांसि भयदे वने[3] ।
यस्य बाणैर्निकृत्तानि[4] श्रेणीभूतानि शेरते ॥ ८० ॥

८०. पतत्रीति ॥ भयदे वने यस्य बाणैर्निकृत्तानि भिन्नानि रक्षांसि । पतत्रिभिः पक्षिभिः क्रोष्टुभिः शृगालैश्च जुष्टानि भक्षितानीत्यर्थः । अश्रेणयः श्रेणयो भूतानि श्रेणीभूतानि राशीभूतानीत्यर्थः । "श्रेण्यादिषु च्व्यर्थवचनम्" इति च्व्यर्थानामच्व्यन्तानां "श्रेण्यादयः कृतादिभिः" इति समासः । च्व्यन्तानां तु "ऊर्यादिच्विडाचश्च" इति गतित्वात् "कुगतिप्रादयः" इति समासः । शेरते दीर्घं निद्रान्तीत्यर्थः ॥ "शीङो रुट्" इति रुडागमः ॥

दीव्यमानं शितान्बाणानस्यमानं महागदाः ।
निघ्नानं शात्रवान्रामं कथं त्वं नावगच्छसि ॥ ८१ ॥

८१. दीव्यमानमिति ॥ शितान् बाणान् शितैर्बाणैः ॥ "दिवः कर्म च" इति करणस्य कर्मत्वम् ॥ दीव्यमानं देवनशीलम् । देवनं क्रीडा विजिगीषा वा । महागदाः अस्यमानं क्षेपमाणम् । तद्योग्यवयस्कमित्यर्थः । शत्रूनेव शात्रवान् । स्वार्थेऽण् । निघ्नानं निहननशक्तम् ॥ "गमहन—" इत्यादिना उपधालोपः । क्रमात् त्रिषु "ताच्छील्यवयोवचनशक्तिषु चानश्" इति चानश् । तं रामं कथं नावगच्छसि न वेत्सि ॥

---

१ पूर्त्तकर्मसु T3, T4, T., G., Com.
२ °ऽभ्यगमद्वनम् T3, E1, T., G., Com.
३ रणे E2.
४ बाणैर्निकृत्तानि B., E2.

भ्रातरि न्यस्य यातो मां मृगाविन्मृगयामसौ ।
एषितुं प्रेषितो यातो मया तस्यानुजो वनम् ॥ ८२ ॥

८२. भ्रातरीति ॥ मृगान्विध्यतीति मृगावित् । क्विप् ॥ "नहिवृति—" इत्यादिना पूर्वस्य दीर्घः ॥ असौ रामो मां भ्रातरि लक्ष्मणे न्यस्य रक्षणार्थमर्पयित्वा मृगयामाखेटम् । 'आखेटो मृगया स्त्रियाम्' इत्यमरः । परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानाच्छप्रत्ययान्तो निपातः । यातो गतः । तं राममेषितुमन्वेतुम् । इष्यतेर्गत्यर्थत्वाश्नित्यमिडागमः । तस्य रामस्यानुजो लक्ष्मणो मया वनं प्रति प्रेषितः । पूर्ववदिडागमः । यातः ।

अथायस्यन् कषायाक्षः स्यन्नस्वेदकणोल्वणः ।
संदर्शितान्तराकूतस्तामवादीद्दशाननः ॥ ८३ ॥

८३. अथेति ॥ अथ सीतावाक्यश्रवणानन्तरमायस्यन् प्रयस्यन् क्रोधादुज्ज्वलन्नित्यर्थः । यसु प्रयत्ने दैवादिकः ततो लटः शत्रादेशः । कषायाक्षो रोषरक्ताक्षः । 'रागे क्वाथे कषायोऽस्त्री' इति यादवः । क्रोधादेव स्विन्नः अत एव स्वेदकणैरुल्वणः प्रचुरः दशाननः संदर्शितमान्तरमाकूतमभिप्रायो येन स सन् । तां सीतामवादीत् ॥ "वदव्रज—" इति सिचि वृद्धिः ॥

कृते कानिष्ठिनेयस्य ज्यैष्ठिनेयं विवासितम् ।
को नग्नमुषितप्रख्यं बहु मन्येत राघवम् ॥ ८४ ॥

८४. कृत इति ॥ कानिष्ठिनेयस्य कनिष्ठापुत्रस्य भरतस्य कृते कार्यार्थम् । संपदादित्वात्क्विप् । अव्ययमिति केचित् । विवासितं प्रवासितम् । अत एव नग्नमुषितप्रख्यम् । मुषितो हृतवस्त्रः अत एव नग्नः ॥ "पूर्वकाल—" इत्यादिना समासे राजदन्तादित्वात्पूर्वकालस्य परनि-

---

१ सचितुं T3.
२ रामं E3.
३ स्विन्नः स्वेद° T4., T., G., Com.
स्यन्दत्स्वेद° E3.
४ °मगादीद° B.
५ ज्यैष्ठिनेयो विवासितः D.

पातः ॥ तत्प्रख्यं तत्तुल्यम् । ज्यैष्ठिनेयं ज्येष्ठापुत्रं ज्येष्ठमिति भावः । उभयत्र "कल्याणादीनामिनङ्" इतीनङादेशः । राघवं रामं को बहु मन्येत पूजयेत् । न कोऽपीत्यर्थः । बह्विति क्रियाविशेषणम् ॥

राक्षसान्बटुयज्ञेषु[1] पिण्डीशूरान्[2] निरस्तवान् ।
यद्यसौ कूपमाण्डूकि तवैतावति कः स्मयः ॥ ८५ ॥

८५. यदुक्तमध्वरेष्विष्टिनां पातेति तदाभासीकरोति राक्षसानिति ॥ असौ रामो बटुयज्ञेषु कुब्रह्मयज्ञकेषु पिण्डेशूरानन्नशूरान् न तु रणशूरान् । 'गेहेनर्दी गृहेशूरः पिण्डेशूरश्च कथ्यते' इति हलायुधः । पात्रेसम्मितादित्वात्समासः । सः राक्षसान्निरस्तवान्यदि हतवांश्चेत् । हे कूपमाण्डूकि तत्तुल्यबुद्धे ॥ "ढक् च मण्डूकात्" इति चकारादपत्याणि ङीप् । तवैतावत्येतावन्मात्रे कः स्मयो विस्मयः । यथा कूपमाण्डूकी कूपमेव सर्वाधिकं मन्यते न तु समुद्रादिकं तथा त्वमपि राममेव बहु मन्यसे नास्मान् जानासीति तात्पर्यार्थः ॥

मत्पराक्रमसंक्षिप्तराज्यभोगपरिच्छदः ।
ममैव युक्तं[3] किं वक्तुं दरिद्राति यथा हरिः ॥ ८६ ॥

८६. मदिति ॥ मम पराक्रमेण संक्षिप्ताः सुहृताः राज्यभोगपरिच्छदाः हस्त्यश्वादिराज्योपभोगसाधनानि यस्य सः । मदपहृतसर्वस्व इत्यर्थः । हरिरिन्द्रो यथा दरिद्राति निःस्वो भवति । दरिद्रा दुर्गतौ । लटि शपो लुक् । तन्ममैव वक्तुं युक्तं किम् । न युक्तमित्यर्थः । आत्मश्लाघायाः लोकवेदगर्हितत्वादितिभावः ।

निर्लज्जो[4] विमदः स्वामी धनानां हृतपुष्पकः ।
अध्यास्तेऽन्तर्गिरं यस्मात् कस्तन्नावैति कारणम्[5] ॥ ८७ ॥

---

१ बहु° D.
२ पिण्डेशूरान् T., G., Com.
३ युक्तं ममैव किं वक्तुम् N., C., c., E3, T1, T.,
४ नितज्जो E3.
५ रावणम् T3, E1.

८७. निर्लङ्क इति ॥ यस्मान्मद्विक्रमलक्षणात् कारणात् धनानां स्वामी कुबेरः। निष्क्रान्तो लङ्कायाः निर्लङ्कः सन्। 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति गतिसमासः। द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु परलिङ्गताप्रतिषेधाद्विशेष्यलिङ्गता ॥ "एकविभक्ति चापूर्वनिपाते" इति लङ्काशब्दस्योपसर्जनत्वात् "गोस्त्रियोरुपसर्जनस्य" इत्युपसर्जनह्रस्वत्वम्। हृतपुष्पकोऽपहृतविमानश्च। अत एव विमदो वीतदर्पः सन्। गिरावन्तर्गिरं कैलासमित्यर्थः। अध्यास्ते। विभक्त्यर्थेऽव्ययीभावः ॥ "गिरेश्च सेनकस्य" इति विकल्पादव्ययीभावसमासान्तष्टच्॥ "अधिशीङ्स्थासां कर्म" इति कर्मत्वात् द्वितीया ॥ "अव्ययीभावश्च" इत्यव्ययत्वम्॥ तत्कारणं मद्विक्रमलक्षणं को नावैति न वेत्ति। सर्वोऽपि वेत्त्येवेत्यर्थः ॥

भिन्ननौक इव ध्यायन् मत्तो बिभ्यद्यमः स्वयम्।
कृष्णिमानं दधानेन मुखेनास्ते निरुद्यतिः ॥ ८८ ॥

८८. भिन्नेति ॥ किं च यमोऽन्तकः स्वयं मत्तो मत्सकाशाद्बिभ्यत् त्रस्यन् भिन्ननौको मध्येजलं विशीर्णतरणिरिव। 'स्त्रियां नौस्तरणिस्तरीः' इत्यमरः। कप्। ध्यायन् का गतिरिति चिन्तयन् कृष्णिमानं मालिन्यं दधानेन मुखेनोपलक्षितः। विवर्णमुखः सन्नित्यर्थः। निरुद्यतिर्निरुद्योगः सन्। यमेः स्त्रियां क्तिन्। अनुनासिकलोपः। आस्ते न तु किञ्चिद्व्याप्रियत इत्यर्थः ॥

समुद्रोपत्यका हैमी पर्वताधित्यका पुरी।
रत्नपारायणं नाम्ना लङ्केति मम मैथिलि ॥ ८९ ॥

८९. समुद्रेति ॥ हे मैथिलि समुद्रस्योपत्यका आसन्ना समुद्रपार्श्वेत्यर्थः। पर्वतासन्नवाचकेनासन्नमात्रं लक्ष्यते। पर्वतस्य त्रिकूटाद्रेरधित्यका। लक्षणया उपरि स्थितेत्यर्थः। गिरिर्दुर्गं चेत्यर्थः। 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः ॥ "उपाधिभ्यां त्यकन्ना-

सम्भारूढयोः” इति त्यकन्प्रत्ययः । प्रतिषेधे त्यकन उपसंख्याना त्कात्पूर्वस्येत्वाभावः । हेम्नो विकारो हैमी हेममयी ॥ “प्राणिरजता दिभ्योऽञ्” ॥ “नस्तद्धिते” इति टिलोपः ॥ रत्नानां पारस्य समासे· रयनं स्थानं सर्वरत्नानामाकर इत्यर्थः । नाम्ना लङ्केति प्रसिद्धा मम पुरीति प्ररोचनापि यथार्थैव ॥

आवासे सिक्तसंमृष्टे गन्धैस्त्वं लिप्तवासिता ।
अर्पितोरुसुगन्धिस्रक् तस्यां वस मया सह ॥ ९० ॥

९०. आवास इति ॥ हे सीते तस्यां पुर्यां सिक्तसंमृष्टे पूर्वं गन्धोदकैः सिक्ते पश्चाच्छोधनीभिः संमृष्टे शोधिते । स्नातानुलिप्तवत् ॥ “पूर्व-काल—” इत्यादिना समासः ॥ आवासे गृहे त्वं गन्धैर्यक्षकर्दमादिभि-र्लिप्ता अनुलिप्ता पश्चाद्वासिता अगरुधूपादिभिरधिवासिता । पूर्ववत्स-मासः । अर्पिताः न्यस्ताः उरवः प्रभूताः सुगन्धयः शोभनगन्धाः स्रजो यस्याः सा सती ॥ “गन्धस्येदुत्पूतिसुसुरभिभ्यः” इति समा-सान्त इकारः ॥ मया सह वस । प्रार्थनायां लोट् ॥

संगच्छ पौंस्नि स्त्रैणं मां युवानं तरुणी शुभे ।
राघवः प्रोष्यपापीयान् जहीहि तमकिंचनम् ॥ ९१ ॥

९१. संगच्छेति ॥ हे शुभे शोभने । इगुपधलक्षणः कप्रत्ययः । हे पौंस्नि पुंहिते पुमर्हे वा पौंस्नि । एवं स्त्रीभ्यो हितमर्हं वा स्त्रैणम् । नञ्स्नञो-रुपसंख्यानादीकारः । युवानं तरुणं मां मा तरुणी युवतिः । तरुणस्यो-पसंख्यानान्ङीप् । त्वं संगच्छ प्राप्नुहि । सकर्मकत्वात् “समो गम्यृ-च्छि—” इत्यादिना नात्मनेपदम् । राघवो रामः प्रोष्य राज्यात्प्रभ्रश्य अत एवातिशयेन पापो निकृष्टः पापीयान् अभाग्य इत्यर्थः । ‘अथ त्रिषु द्रव्ये पुण्यपापसुखानि च’ इति विशेष्यलिङ्गत्वात् पापशब्दादी-यसुनि तदुत्तरपदस्तत्पुरुषो मयूरव्यंसकादित्वात्साधुः । नास्ति किंच-नास्येत्यकिञ्चनं निःस्वम् । मयूरव्यंसकादिषूच्चावचोच्चनीचाचोपचाच-पराचनखप्रचनिश्चप्रचाकिञ्चनाकुतोभयानीति पाठात्साधुः । तं रामं

जहीहि त्यज। जहातेः प्राप्तकाले लोट्। सेर्हित्वे "आ च हौ" इति चकाराद्वैकल्पिक ईकारः॥

अश्नीतपिबतीयन्ती प्रसिता स्मरकर्मणि।
वशेकृत्य[2] दशग्रीवं मोदस्व वरमन्दिरे॥ ९२॥

९२. अश्नीतेति॥ अश्नीत पिबतेति सातत्येन यस्यां क्रियायां सा अश्नीतपिबता गृहे सर्वनियामकत्वं स्वाम्यमिति यावत्। मयूरव्यंसकादिषु 'आख्यातमाख्यातेन समस्यते क्रियासातत्ये' इति वचनात्समासः। तामात्मन इच्छन्ती अश्नीतपिबतीयन्ती स्वामिनी सतीत्यर्थः॥ "सुप आत्मनः क्यच्"॥ ततः लटः शतरि ङीप्। स्मरकर्मणि प्रसिता सुरतासक्ता सती। 'तत्परे प्रसितासक्तौ' इत्यमरः। दशग्रीवं वशीकृत्य वरमन्दिरे रम्यगृहे मोदस्व आनन्देत्यर्थः॥

मा स्म भूर्ग्राहिणी भीरु गन्तुमुत्साहिनी भव।
उद्भासिनी च भूत्वा नो[3] वक्षःसम्मर्दिनी भव॥ ९३॥

९३. मास्मेति॥ हे भीरु ग्राहिणी आग्रहिणी प्रतिकूला मा स्म भूः॥ "स्मोत्तरे लङ् च" इति चकाराल्लुङ्॥ गन्तुं प्रस्थातुम्। उत्सहत इत्युत्साहिनी भव। उद्भासत इति उद्भासिनी भूत्वा नोऽस्माकं वक्षःसंमर्दिनी वक्षसः पीडयित्रीति षष्ठीसमासः। अनुपपदाधिकारात्। भव। आलिङ्गेत्यर्थः। सर्वत्र "नन्दिग्रहि—" इत्यादिना णिनिः॥

तां प्रातिकूलिकीं[4] मत्वा जिहीर्षुर्भीमविग्रहः[5]।
बाहूपपीडमाश्लिष्य जगाहे[6] द्यां निशाचरः॥ ९४॥

९४. तामिति॥ निशाचरो रावणस्तां सीतां प्रतिकूलं वर्त्तत इति प्रातिकूलिकीं प्रतिकूलवर्त्तिनीमनुनयासाध्याम्॥ "तत्प्रत्यनुपूर्वमीपलोमकूलम्" इति ठक्॥ मत्वा निश्चित्य जिहीर्षुर्बलादपहर्त्तुमिच्छुः

---

[1] प्रसृता E1.
[2] वशीकृत्य T3, T4, D., T., G., Com.
[3] मे C., N., T1, T., T4, E3, c.
[4] प्रातिकूलिनीं T2.
[5] °विक्रमः T2, E2.
[6] जगाम T3.

भीमविग्रहो भयोत्पादनाय प्रकटीकृतनिजाकारः सन् । बाहुभ्यामुपपीड्य बाहूपपीडम् । "सप्तम्यां चोपपीड—" इत्यादिना णमुल् ॥ आश्लिष्य द्यां दिवमाकाशं जगाहे जगाम । दिवृशब्दादन्य ओकारान्तो द्योशब्दः तस्यामि "औतोऽम्शसोः" इत्यात्वम् ॥

त्रस्यन्तीं तां समादाय यातो रात्रिंचरालयम् ।
तूष्णींभूय भयादासाञ्चक्रिरे मृगपक्षिणः ॥ ९५ ॥

९५. त्रस्यन्तीमिति ॥ त्रस्यन्तीं तद्रूपदर्शनाद्बिभ्यतीं तां सीतां समादाय गृहीत्वा । रात्रौ चरन्तीति रात्रिंचराः राक्षसाः ॥ "चरेष्टः" ॥ "रात्रेः कृति विभाषा" इति पक्षे मुमागमः ॥ तेषामालयं लङ्कां यातो गच्छतो रावणात् । यातेः शत्रन्तात् "भीत्रार्थानां भयहेतुः" इत्यपादानत्वात्पञ्चमी । भयाद्भयादिवेत्यर्थः । व्यञ्जकाप्रयोगाद्गम्योत्प्रेक्षा । मृगाश्च पक्षिणश्च मृगपक्षिणः तूष्णींभूय तूष्णीं भूत्वा मौनीभूयेत्यर्थः । 'मौने तु तूष्णीं तूष्णीकाम्' इत्यमरः ॥ "तूष्णीमि भुवः" इति पक्षे क्त्वाप्रत्ययः ॥ "क्त्वा च" इति पक्षे समासे क्त्वो ल्यबादेशः आसाञ्चक्रिरे आसितवन्तः । न तु न्यवारयन्नित्यर्थः । तेन निवारकान्तराभावो व्यज्यत इत्यलंकारेण वस्तुध्वनिः । आसेर्लिट् ॥ "दयायासश्च" इत्याम्प्रत्ययः ॥

उच्चै रारस्यमानां तां कृपणां रामलक्ष्मणौ ।
जटायुः प्राप पक्षीन्द्रः परुषं रावणं वदन् ॥ ९६ ॥

९६. उच्चैरिति ॥ उच्चैस्तारं रामलक्ष्मणौ रारस्यमानां हा राम हा लक्ष्मणेति भृशं क्रोशन्तीम् । रसतेः शब्दकर्मणो यङन्तात् लटः शानचि टाप् । कृपणां दीनां तां सीतां जटायुर्नाम पक्षीन्द्रो गृध्रराजो रावणं परुषं रे रे चोर दुरात्मन् क यासीत्यादिनिष्ठुरं वदन् प्राप । वत्से मा भैषीरित्याश्वासयन्नागत इत्यर्थः ॥

एते प्रकीर्णकाः ।

---

१ तामुपादाय $T_2$, $T_3$, D., $E_1$. | २ रात्रिचरा° $E_3$.

## अतः परं टाधिकारः।

द्विषन्वनेचराग्र्याणां त्वमादायचरो वने।
अग्रेसरो जघन्यानां मा भूः पूर्वसरो मम ॥ ९७ ॥

९७. एवं प्रकीर्णकाण्डं समाप्याधिकारकाण्डमन्तरान्तरा प्रकीर्णकसंकीर्णमारभमाणः प्रथमं तावट् टप्रत्ययाधिकारमारभते द्विषन्नित्यादिना ॥ हे द्विषन्नमित्र ॥ "द्विषोऽमित्रे" इति शतृप्रत्ययः ॥ वनेऽस्मिन्नरण्ये। वने चरन्तीति वनेचरास्तापसाः ॥ "चरेष्टः" इति टप्रत्ययः ॥ तेष्वग्र्याणां श्रेष्ठानाम्। कर्मणि षष्ठी। आदाय गृहीत्वा चरति भक्षतीत्यादायचरः आच्छिद्य भक्षकः ॥ "भिक्षासेनादायेषु च" इति टः ॥ जघनमिव जघन्या नीचाः ॥ "शाखादिभ्यो यः" ॥ तेषामग्रे सरतीति अग्रेसरोऽधमाधमस्त्वम् ॥ "पुरोऽग्रतोऽग्रेषु सर्त्तेः" इति टः ॥ मम पूर्वः सरतीति पूर्वसरोऽग्रयायी प्रष्ठो मा भूः ॥ "पूर्वे कर्त्तरि" इति टप्रत्ययः ॥ ममाग्रे निर्भीकः कथं चरसीत्यर्थः ॥

यशस्करसमाचारं ख्यातं भुवि दयाकरम्।
पितुर्वाक्यकरं रामं धिक् त्वां दुन्वन्तमत्रपम् ॥ ९८ ॥

९८. यशस्करेति ॥ यशः करोतीति यशस्करः यशोहेतुः समाचारश्चरित्रं यस्य तम् ॥ "अतः कृकमि—" इत्यादिना विसर्जनीयस्य सत्वम् ॥ अत एव भुवि ख्यातं प्रसिद्धम्। दयां करोति ताच्छील्येनेति दयाकरं पितुर्वाक्यकरमाज्ञाकरमनुकूलवर्तिनमित्यर्थः ॥ "कृञो हेतु—" इत्यादिना क्रमात् हेत्वाद्यर्थेषु टः ॥ एवंविधं रामं दुन्वन्तं परितापयन्तम्। दुनोतेः शतृप्रत्ययः। अत्रपं निर्लज्जं त्वां धिक् निन्दाम इत्यर्थः ॥

अहमन्तकरो नूनं ध्वान्तस्येव दिवाकरः।
तव राक्षस रामस्य नेयः कर्मकरोपमः ॥ ९९ ॥

९९. अहमिति ॥ हे राक्षस। रामस्य कर्म करोतीति कर्मकरो भृत्यः ॥ "कर्मणि भृतौ" इति टः ॥ तदुपमस्तत्तुल्यः अत एव नेयो नेतव्यः

१ वनचर° T3. | २ धिक् त्वां रामं B3.

विधेयः अहं ध्वान्तस्य दिवाकरो दिनकर इव तव । अन्तं करोतीत्यन्तकरो नाशकरः नूनम् । उभयत्र दिवादिसूत्रणे टः ॥

सतामरुष्करं पक्षी वैरकारं नराशिनम् ।
हन्तुं कलहकारोऽसौ शब्दकारः पपात खम् ॥ १०० ॥

१००. सतामिति ॥ सतां सज्जनानामरुष्करं व्रणकरं पीडाकरमित्यर्थः । दिवादिना टः । वैरकारं सीताहरणेन वैरायमाणं शब्दकारं सिंहनादकरं नराशिनं राक्षसं हन्तुं कलहकारो युद्धकरः सन्नसौ पक्षी जटायुः खमाकाशमुत्पपात उज्जगाम । सर्वत्र वैरकारादौ "न शब्दश्लोक—" इत्यादिना टप्रतिषेधात् "कर्मण्यण्" । 'शब्दकारमित्यत्र "द्वितीयायां च" इति णमुल्' इति केचित् । पक्षी शब्दकारं सिंहनादं कृत्वा खमुत्पपातेति साधीयानेवायमर्थः ॥ किन्तु न शब्देत्यादिसूत्रोदाहरणप्रक्रमभङ्गदोषः सोढव्यः स्यात् ॥

## अतः परं प्रकीर्णकाः ।

धुन्वन् सर्वपथीनं खे वितानं पक्षयोरसौ ।
मांसशोणितसंदर्शं तुण्डघातमयुध्यत ॥ १०१ ॥

पुनःप्रकीर्णमेव श्लोकत्रयेणाह धुन्वन्नित्यादिना ॥ असौ पक्षी । सर्वान् पथः सर्वपथान् व्याप्नोतीति सर्वपथीनम् । "पूर्वकाल—" इति समासः ॥ "ऋक्पूर्—" इति समासान्तः ॥ "तत्सर्वादेः—" इत्यादिना खप्रत्ययः ॥ तं प्रसिद्धं पक्षयोर्वितानं धुन्वन् । विततौ पक्षौ धुन्वन्नित्यर्थः । साकल्येन मांसशोणिते संदर्श्य मांसशोणितसंदर्शम् ॥ "कर्मणि दृशिविदोः साकल्ये" इति णमुल् ॥ दृशिरन्तर्हितण्यर्थः ॥ "अमैवाव्ययेन" इति समासः ॥ तुण्डेन घातो यस्मिन्कर्मणि तद्यथा तथेति

१ वैरकारं तपस्विनाम् E2.
२ नराशनम् B., D., E1, T3.
३ शब्दकारं T., G., Com.
शब्दपातं T2, T3, E1.
४ तं T., G., Com.

घञन्तोत्तरपदो बहुव्रीहिः ॥ "करणे हनः" इति णमुलन्तत्वे पादघातं हन्तीतिवत् "कषादिषु—" इति यथाविध्यनुप्रयोगः स्यात् । न च "हिंसार्थानां च समानकर्मकाणाम्" इति णमुल् । अनुप्रयोगस्य युधेरकर्मकत्वेन समानकर्मकत्वाभावात् । अयुध्यत युद्धं कृतवान् । युधेर्दैवादिकाल्लङि तङ् ॥

न बिभाय न जिह्राय न चक्राम न विव्यथे ।
आघ्रानो विध्यमानोऽपि[1] रणान्निववृते न[2] च ॥ १०२ ॥

१०२. नेति ॥ आघ्रानः स्वयमेव परं घ्नन् ॥ "आङो यमहनः" इत्यकर्मकाद्धन्तेस्तङ् ॥ "गमहन—" इत्यादिनोपधालोपः ॥ विध्यमानो व्याहन्यमानश्च । विध्यतेः कर्मणि यकि संप्रसारणम् । न बिभाय नाभैषीत् । शूरत्वादिति भावः । न जिह्राय न लज्जितवान् । अपराजितत्वादिति भावः । भीह्रीभ्यां लिटि तिपो णलि वृद्ध्यायादेशौ । न चक्राम न क्रान्तवान् । जितश्रमत्वादिति भावः । न विव्यथे न व्यथां गतवान् । मनस्वित्वादिति भावः । न चातिव्यायामादुपरतिरपीत्याह रणान्निववृते न च नोपरराम च । अनिवृत्तिविधानात् । अनिवृत्तिश्च विजयावधिकः प्राणावधिको वा व्यापार इति स्मरणादिति भावः । सर्वत्र लिट् ॥

पिशाचमुखधौरेयं सच्छत्रकवचं रथम् ।
युधि कद्रथवद्भीमं बभञ्ज ध्वजशालिनम् ॥ १०३ ॥

१०३. पिशाचेति ॥ किं चायं पक्षी युधि । पिशाचस्य मुखमिव मुखं येषां तादृशाः धुरं वहन्तीति धौरेया अश्वाः यस्य तम् ॥ "धुरो यड्ढकौ" इति ढक् ॥ सह छत्रकवचाभ्यां सच्छत्रकवचम् ॥ "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः ॥ ध्वजेन शालते इति तच्छालिनं तच्छोभिनम् । भीमं भयंकरं रथम् । महान्तमपीति भावः । कुत्सितः

---

१ विध्यमानो वा N., $T_2$, $T_3$, D. विध्यमानोऽसौ $E_1$.

२ न सः $E_3$.

क्षुद्रो रथः कद्रथः॥ "रथवदयोश्च" इति कोः कदादेशः॥ तेन तुल्यं तद्वत्॥ "तेन तुल्यम्—" इति वतिप्रत्ययः। बभञ्ज॥

इति प्रकीर्णकाः।

## अतः परमामधिकारः।

सन्त्रासयाञ्चकारारिं सुरान् पिप्राय पश्यतः।
सन्त्याजयाञ्चकाराथ सीतां विंशतिबाहुना॥ १०४॥

१०४. पुनः प्रकृतमधिकारकाण्डमेव ब्रुवन् आम्प्रत्ययाधिकारं तावदाह सन्त्रासयामिति॥ अरिं रावणं सन्त्रासयाञ्चकार भीषयाञ्चक्रे। अथ सन्त्रासनानन्तरं विंशतिबाहुना दशाननेन सीतां सन्त्याजयाञ्चकार त्याजितवान्॥ "कास्प्रत्ययात्—" इत्यादिना आम्प्रत्ययः॥ "अयामन्त—" इत्यादिना णेरयादेशः। कृञोऽनुप्रयोगः। पश्यतः स्वपौरुषमालोकमानान् सुरान् पिप्राय प्रीणयामास। प्रीणातेर्लिट्। तिपो णलि वृद्ध्यायादेशौ॥

असीतो रावणः कासाञ्चक्रे शस्त्रैर्निराकुलः।
भूयस्तं चेच्छिदाञ्चक्रे नखतुण्डायुधः खगः॥ १०५॥

१०५. असीत इति॥ अथासीतस्त्यक्तसीतको रावणः शस्त्रैः साधनैः शस्त्रबलेनेत्यर्थः निराकुलोऽनाकुलः सन् कासाञ्चक्रे रे मूर्ख अण्डजाधम हतोऽसीत्येवं कुत्सितं शब्दापयामास प्रललापेत्यर्थः। कासृ शब्दकुत्सायाम्। लिट्। "कास्प्रत्ययात्—" इत्याम्प्रत्ययः॥ खे गच्छतीति खगः पक्षी॥ डोऽन्यत्रापि च दृश्यत इति गमेर्डप्रत्ययः। नखास्तुण्डं मुखं च तन्नखतुण्डमेवायुधं यस्य स सन्। भूयः पुनरपि तं रावणं चेच्छिदाञ्चक्रे भृशं चिच्छेद। छिदेर्यङन्ताल्लिट्। "कास्प्रत्ययात्—" इत्याम्प्रत्ययः। यङो ङित्वात्तङि तद्वदनुप्रयोगात्कृञोऽपि तङ्॥ "गुणो यङ्लुकोः" इत्यभ्यासस्य गुणः॥ अल्लोपयलोपौ॥

---

१ स त्याजयां° N., C., D., E1. B., T1.
२ शस्त्रैरनाकुलः E3.
३ चेच्छिदांचक्रे G., T., Com.

हन्तुं क्रोधवशादीहाञ्चक्राते तौ परस्परम्।
न वा पलायाञ्चक्रे विर्दयाञ्चक्रे न राक्षसः॥ १०६॥

१०६. हन्तुमिति॥ तौ पक्षिराक्षसौ क्रोधवशात् क्रोधपारवश्यात् परस्परं हन्तुमीहाञ्चक्राते तथा व्यापृतवन्तावित्यर्थः। ईह चेष्टायाम्। लिट्॥ "इजादेश्च गुरुमतोऽनृच्छः" इत्याम्प्रत्ययः॥ वयतीति विः पक्षी वा। 'विविष्किरपतत्रिणः' इत्यमरः॥ "वेञो डिच्च" इतीण्प्रत्यये टिलोपः॥ न पलायाञ्चक्रे न पलायितश्च। राक्षसो रावणश्च न दयाञ्चक्रे नानुचकम्पे। अयतेर्दयतेश्च लिट्॥ "दयायासश्च" इत्याम्प्रत्ययः॥

उपासाञ्चक्रिरे द्रष्टुं देवगन्धर्वकिन्नराः।
छलेन पक्षौ लोलूयाञ्चक्रे क्रव्यात्पतत्रिणः॥ १०७॥

१०७. उपासामिति॥ देवगन्धर्वकिन्नराः द्रष्टुं युद्धदर्शनार्थमुपासाञ्चक्रिरे समीपे स्थिता इत्यर्थः। आसेर्लिट्॥ "दयायासश्च" इत्याम्प्रत्ययः॥ क्रव्यमत्तीति क्रव्याद्राक्षसः भल्लेन बाणविशेषेण। 'स्नुहीदलफलो भल्लः' इति यादवः। पतत्रिणः पक्षौ पतत्रे लोलूयाञ्चक्रे भृशं लुलाव। लुनातेर्यङन्ताल्लिटि "कास्प्रत्ययात्—" इत्याम्प्रत्ययः॥

प्रलुठितमवनौ विलोक्य कृत्तं
दशवदनः खचरोत्तमं प्रहृष्यन्।
रथवरमधिरुह्य भीमधुर्यं
स्वपुरमगात्परिगृह्य रामकान्ताम्॥ १०८॥

१०८. प्रलुठितमिति॥ अथ दशवदनः कृत्तं छिन्नपक्षमत एवावनौ प्रलुठितं निपत्य लुठन्तम्। खे चरन्तीति खेचराः खगाः॥ "चरेष्टः"॥ तेषु

१ न विः पलायाञ्चक्रे वा D.
२ भल्लेन T₃, T., G., Com.
३ युग्यं T₂, T₃, T₄, T., G., Com.
४ रामाम् T₂, T₃, T₄, D₂

त्तमं जटायुषं विलोक्य प्रहृष्यन् रामस्य कान्तां सीतां परिगृह्यादाय । भीमा भयंकराः युगं वहन्तीति युग्याः अश्वा यस्य तम् ॥ "तद्वहति रथयुगप्रासङ्गम्" इति यत्प्रत्ययः ॥ रथवरं रथश्रेष्ठमधिरुह्य स्वपुरं लङ्कानगरमगात् गतवान् । पुष्पिताग्रा वृत्तम् । 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात् ॥

इति भट्टिकाव्ये सीताप्रहरणो नाम
पञ्चमः सर्गः ।

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचक
मल्लिनाथसूरिविरचिते भट्टिकाव्यव्याख्याने
सर्वपथीनाख्याने पञ्चमः सर्गः ॥

॥ श्रीः ॥

# अथ षष्ठः सर्गः।

ओषाञ्चकार कामाग्निर्दशवक्त्रमहर्निशम्।
विदाञ्चकार वैदेहीं रामादन्यनिरुत्सुकाम्॥ १॥

१. अथाम्प्रत्ययमेवाधिकृत्य श्लोकचतुष्टयेन रावणवृत्तान्तमेवाह ओषाञ्चकारेति॥ काम एवाग्निः कामाग्निरिति रूपकम्। दाहलिङ्गात्। दशग्रीवं रावणम्। अहश्च निशा च अहर्निशम्। सर्वो द्वन्द्वो विभाषैकवद्भवतीत्येकवद्भावः। अत्यन्तसंयोगे द्वितीया। ओषाञ्चकार उवोष ददाहेत्यर्थः। उष दाह इत्यस्माल्लिट्॥ "उषविदजागृभ्योऽन्यतरस्याम्" इति विकल्पादाम्प्रत्ययः॥ ततो लघूपधगुणः। दाहे कारणमाह। तथाहि रावणः वैदेहीं सीतामन्यस्मिन् रामातिरिक्तपुरुषे निरुत्सुकामनुत्सुकामननुरक्तां विदाञ्चकार विवेद। तद्वेदनादेवेयं विरहवेदना जातेति भावः॥ "उषविद—" इत्याम्प्रत्ययः॥ अत्र विदेरदन्तत्वान्न लघूपधगुणः। तथाच काशिका 'आमोऽमित्वमदन्तत्वादगुणत्वं विदेस्तथा। आस्कासोराम्विधानाच्च पररूपं कतन्तवत्॥" इति॥

प्रजागराञ्चकारारेरीहास्वनिशमादरात्।
प्रविभयाञ्चकारासौ काकुत्स्थादभिशङ्कितः॥ २॥

२. प्रजागरामिति॥ किं चासौ रावणः काकुत्स्थाद्रामादभिशङ्कितः। बलवद्विरोधस्य दुरन्तत्वादनिष्टागममुत्प्रेक्षमाण इत्यर्थः। 'अनिष्टाभ्यागमोत्प्रेक्षां शङ्कामाचक्षते बुधाः' इति लक्षणात्। अरेः रामस्य ईहासु चेष्टासूद्योगेषु विषये अनिशमादरादभिनिवेशात्प्रजागराञ्चकार। अप्रमत्तः स्थित इत्यर्थः॥ "उषविद—" इत्यादिना विकल्पादाम्प्रत्ययः॥ विभयाम्प्रचकार अतिमात्रं बिभाय चेत्यर्थः॥ "भीह्रीभृहुवां

१ °ग्रीव° T₂, T₃, T₄, T., G., Com.
२ रावणोऽन्यनि° T₃.
३ विभयांप्रचकारा° T., G., Com.

श्रुवश्च" इति विकल्पादाम्प्रत्ययः ॥ "श्लौ" इति द्विर्भावश्च ॥ प्रोपसर्गव्यवधानं तूक्षाम्प्रचक्रुरितिवत्समाधेयम् । प्रविभयाञ्चकारेति पाठे पूर्ववच्छन्दोभङ्गः सोढव्यः ॥

न जिह्रयाञ्चकाराथ सीतामभ्यर्थ्य तर्जितः ।
नाप्यूर्जां[1] बिभरामास वैदेह्यां प्रसितो भृशम् ॥ ३ ॥

३. नेति ॥ किं चायं रामाद्भीतोऽपि सीतामभ्यर्थ्यानुनीय तर्जितो भर्त्सितो निरस्त इत्यर्थः । तथापि न जिह्रयाञ्चकार न जिह्राय । वैदेह्यां भृशं प्रसितः आसक्तः सन्नूर्जं बलं पुष्टिं न बिभरामास न बभार । किंतु कार्श्यं गत इत्यर्थः । अत्रोभयत्रापि "भीह्री—" इत्यादिना पूर्ववत्प्रक्रिया ॥

विदाङ्कुर्वन्तु रामस्य वृत्तमित्यवदत्स्वकान्[2] ।
रक्षांसि रक्षितुं सीतामाशिषच्च[3] प्रयत्नवान् ॥ ४ ॥

४. विदाङ्कुर्वन्त्विति ॥ किं च रामस्य वृत्तं व्यापारं विदाङ्कुर्वन्तु जानन्त्वित्यर्थः । विध्यर्थे लोट् ॥ "विदाङ्कुर्वन्त्वित्यन्यतरस्याम्" इति विदेर्लोट्याम्प्रत्ययगुणाभावादिनिपातनात्साधुः ॥ इति स्वकान् स्वकीयान् शुकसारणादीन् गूढपुरुषानवदत् । विदित्वोच्यतामिति चाराभियुक्तवानित्यर्थः । प्रयत्नवानवहितः सन् तां रक्षितुं गोपायितुं रक्षांसि राक्षसानशिषदादिष्टवान् । शासेर्लुङि "सर्त्तिशास्त्यर्त्तिभ्यश्च" इति च्लेरङादेशः ॥ "शास इदङ्हलोः" इतीकारः ॥ "शासिवसिघसीनां च" इति षत्वम् ॥ योषिद्वृन्दारिकेत्यादिना एतदन्तेन सन्दर्भेण दशावस्थासुन्मादादर्वाचीनाः सप्तापि सुव्यक्तमुक्ता यथायोगमुन्नेयाः ॥ "दृङ्मनःसङ्गसंकल्पौ जागरः कृशता रतिः । ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश" ॥

---

१ नाप्यूर्जं T2, D., T., G., Com.
२ वृत्तिमित्याह राक्षसान् T2, T3
३ °माशिषच्च D., T., G., Com. °मादिदेश E2.

## अथ प्रकीर्णकाः ।

रामोऽपि हतमारीचो निवर्त्स्यन् खरनादिनः ।
क्रोष्टून् समशृणोत्क्रूरान् रसतोऽशुभशंसिनः ॥ ५ ॥

५. पुनस्त्रिभिः प्रकीर्णकमनुक्रामत्रामवृत्तान्तमेवाह रामोऽपीति ॥ रामः हतमारीचः सन् निवर्त्स्यन् निवर्त्तिष्यमाणः ॥ "वृद्भ्यः स्यसनोः" इति पाक्षिकं परस्मैपदम् । "लृटः सद्वा" इति शत्रादेशः ॥ "न वृद्भ्यश्चतुर्भ्यः" इतीट्प्रतिषेधः ॥ खरवन्नदन्तीति खरनादिनः परुषाराविण इत्यर्थः ॥ "कर्त्तर्युपमाने" इति णिनिः ॥ क्रूरान्भीमान् अत एव अशुभशंसिनोऽनिष्टसूचकान् रसतः क्रोशतः क्रोष्टून् शृगालान् समशृणोदाकर्णयत् । सकर्मकत्वात् "समो गम्यृच्छि—" इत्यस्येदं प्रत्युदाहरणं तत्राकर्मकाधिकारात् । शंखः श्रूयत इतिवत् शब्दधर्मस्तद्वत्युपचरितः ॥

आशङ्कमानो वैदेहीं खादितां निहतां मृताम् ।
स शत्रुघ्नस्य सोदर्यमारादायान्तमैक्षत ॥ ६ ॥

६. आशङ्कमान इति ॥ वैदेहीं सीतां खादितां व्याघ्रादिभिर्भक्षितां निशाचरैर्मारितां मृतां स्वत एवायुःक्षयात्परेतामाशङ्कमानः पूर्वोक्तदुर्निमित्तादुत्प्रेक्षमाणः स रामः आराद्दूरादायान्तमागच्छन्तं शत्रुघ्नस्य समानोदरे शयितं सोदर्यं लक्ष्मणम् ॥ "सोदराद्यः" ॥ "विभाषोदरे" इति समानस्य सभावः ॥ ऐक्षत अपश्यत् ॥

सीतां सौमित्रिणा त्यक्तां सध्रीचीं त्रस्नुमेकिकाम् ।
विज्ञायामंस्त काकुत्स्थः क्षये क्षेमं सुदुर्लभम् ॥ ७ ॥

७. सीतामिति ॥ काकुत्स्थो रामः सहाञ्चतीति सध्रीचीं सहचरीम् ॥ ऋत्विगादिना किन् ॥ "सहस्य सध्रिः" इति सध्र्यादेशः ॥ "अचः" इत्यकारलोपः ॥ "चौ" इति दीर्घः । "अञ्चतेश्चोपसंख्यानम्" इति

---

१ °शासिनः T3. | २ °यं दूराद° C., N., T., G., Com.

ङीप् । असुं भीरुमेकिकामेकाकिनीम् । "एकादाकिनिच्चासहाये" इति चकारात्कन् ॥ कात्पूर्वस्येत्वम् । सीतां सौमित्रिणा त्यक्तां विज्ञाय तस्यैकाकिन आगमनादनुमाय । क्षयन्ति निवसन्त्यस्मिन्निति क्षये गृहे ॥ 'निवासः शरणं क्षयः' इति गृहपर्यायेष्वमरः । क्षिनिवासगत्योः । तौदादिकः ॥ "एरच्" ॥ क्षेमं कुशलं सुदुर्लभमत्यन्तदुर्लभमर्मस्त निश्चितवानित्यर्थः । मन्यतेरनिटो लुङि सिच् ॥

## अतः परं दुहादिः ।

सोऽपृच्छल्लक्ष्मणं सीतां याचमानैः[1] शिवं सुरान् ।
रामं यथास्थितं सर्वं भ्राता ब्रूते स्म विक्लवः[2] ॥ ८ ॥

८. अथाधिकारकाण्डे दुहादीनाह ॥ स इत्यादिना ॥ स रामः सुरान् शिवं शुभं याचमानो भिक्षमाणः लक्ष्मणं सीतामपृच्छत् अनुयुक्तवान् । 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः । भ्राता लक्ष्मणो विक्लवश्चकितः सन् सर्वं रामं यथास्थितं यथावृत्तं । यथार्थेऽव्ययीभावः । ब्रूते स्म रामायाख्यदित्यर्थः ॥

संदृश्य शरणं शून्यं भिक्षमाणो वनं प्रियाम् ।
प्राणान्दुहन्निवात्मानं शोकं चित्तमवारुधत् ॥ ९ ॥

९. संदृश्येति ॥ शरणं गृहं शून्यं सीताविरहितं संदृश्य दृष्ट्वा वनमरण्यं प्रियां भिक्षमाणः वैदेहीं देहीति याचमानः आत्मानं देहम् । 'आत्मा जीवे धृतौ देहे' इति यादवः । प्राणान्दुहन् प्रपूरयन्निव । प्रपूरणं रिक्तीकरणम् । प्राणशून्यं कुर्वन्निवेत्यर्थः । शोकं चित्तमवारुधत् । चित्ते शोकमरौत्सीदित्यर्थः । रुधेर्लुङि "इरितो वा" इति विकल्पाच्लेरङादेशः ॥

गता स्यादवचिन्वाना[3] कुसुमान्याश्रमद्रुमान् ।
आं[4] यत्र तापसान्धर्मं[5] सुतीक्ष्णः शास्ति तत्र सा ॥ १० ॥

---

१ याचमानं C.
२ विह्वलः N., C., T1, B.
३ °दपाचिन्वाना T., G., Com.
४ आं C.
५ धर्मान् T., G., Com.

१०. गतेति ॥ सा सीता आश्रमद्रुमान् कुसुमान्यपचिन्वाना अवच्छिन्दती ॥ चिनोतेः शानच् । गता वा स्यात् । अथवा सुतीक्ष्णः सुतीक्ष्णाख्यो मुनिः यत्र तापसान्मुनीन् धर्मान् शास्ति उपदिशति तत्र गता स्यात् । आ इति स्मृतौ । 'आ प्रगृह्यस्मृतौ वाक्ये' इत्यमरः । अत्र सोऽपृच्छदित्यादिश्लोकत्रये सर्वत्र सीतादीनां प्रधानकर्मणामीप्सितकर्मत्वं लक्ष्मणादीनामप्रधानकर्मणामकथितकर्मत्वं च द्रष्टव्यम् ॥ 'दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ । ब्रुविशासिगुणेन च यत्सचते तदकीर्त्तितमाचरितं कविना' ॥ इति वचनात् ॥

## अतः परं प्रकीर्णकाः ।

आः कष्टं बत ही चित्रं हूं[1] मातर्दैवतानि धिक् ।
हा पितः क्वासि हे[2] सुभ्रु बह्वेवं विललाप सः ॥ ११ ॥

११. पुनः पञ्चभिः प्रकीर्णकमेवोदाहरन् रामस्य शोकानुभवं प्रलापमाह आः कष्टमित्यादिभिः । स रामः एवमाःकष्टमित्यादिप्रकारेण बहु विललाप । आः इति पीडायाम् । 'आस्तु स्यात्कोपपीडयोः' इत्यमरः । कष्टं कृच्छ्रं प्राप्तमित्यर्थः । 'स्यात्कष्टं कृच्छ्रमाभीलम्' इत्यमरः । बतेति खेदे । हीति विषादे । चित्रं स्वहस्तगतापि क्व गतेति चित्रीयत इत्यर्थः । हुमित्यपकारिणि क्रोधे । मातरित्यापदि स्मृताया मातुरामन्त्रणम् । दैवतानि धिगिति शोकातिरेकाद्देवनिन्दा । हा पितरिति मातृवदेवामन्त्रणम् । हे सुभ्रु क्वासि क्व गतासीत्यगत्या प्रश्नः । 'ऊकारादप्यूङ् वक्तव्यः' इति ऊङन्तत्वात्सुभ्रूशब्दस्य नदीत्वात्संबुद्धौ नदीह्रस्व इति प्रपञ्चितमन्यत्र ॥

इहासिष्टाशयिष्टेह सा सखेलमितोऽगमत् ।
अग्लासीत्संस्मरन्नित्थं मैथिल्या भरताग्रजः[1] ॥ १२ ॥

१ हुं D., E3, T., G., Com.
२ मे T2.

१ अम्लासी° G.

१२. इहेति ॥ सा सीता इह प्रदेशे आसिष्ट उपविष्टा । इह अशयिष्ट शयिता । आसेः शीङश्च लुङि तङि सिचीट् । इतोऽस्माद्देशात् सखेलं सलीलमगमत् गता । गमेर्लुङि लृदित्वाच्लेरङादेशः । इत्थं मैथिल्याः संस्मरन् मैथिलीं स्मरन् । "अधीगर्थ—" इत्यादिना कर्मणि शेषे षष्ठी ॥ भरताग्रजो रामोऽग्लासीत् ग्लानवान् । ग्लायतेरनिटो लुङि "आदेच—" इत्यात्वे सगिटौ ॥

इदं नक्तन्तनं दाम पौष्पमेतद्दिवातनम् ।
शुचेवोद्बध्य शाखायां मग्लायति तया विना ॥ १३ ॥

१३. इदमिति ॥ इदं नक्तं भवं नक्तन्तनं पौष्पं पुष्पमयं दाम माल्यम् । तादिदं दिवा भवं दिवातनं दाम ॥ "सायंचिरम्—" इत्यादिना ट्युप्रत्ययः । तया सीतया विना शुचा शोकेन शाखायामुद्बध्येव उद्बन्धनेन मृत्वेवेत्युत्प्रेक्षा । प्रम्लायति । म्लायतेर्लटि शपः शित्वेनात्वाभावादायादेशः ॥

ऐक्षिष्महि मुहुः सुप्तां यां मृताशङ्कया वयम् ।
अकाले दुर्मरमहो यज्जीवामस्तया विना ॥ १४ ॥

१४. ऐक्षिष्महीति ॥ वयं सुप्तां यां सीतां मृताशङ्कया मृतेत्याशङ्कया मुहुरैक्षिष्महि पुनः पुनः स्पर्शनादिना परीक्षाञ्चक्रमहे । अस्थानशङ्काकरत्वात्प्रेमातिरेकस्य । ईक्षतेर्लुङि तङि महीङि सिच इट् । तया विना यज्जीवामः तज्जीवनमकाले आयुषोऽक्षये दुर्मरं मर्त्तुमशक्यमयोग्यं च आत्महत्याया निषिद्धत्वादिति भावः ॥ म्रियतेर्भावे खल्प्रत्ययः । अहो कष्टं वर्त्तत इत्यर्थः ॥

अक्षेमैः परिहासोऽयं परीक्षां मा कृथा मम ।
मत्तो मान्तर्धिथाः सीते मा रंस्था जीवितेन नः ॥ १५ ॥

---

१ प्रम्लायति B., T₃, E₂, E₃, T., G., Com.
२ अक्षेमपरि° T₃.
३ मयि T., G., Com.
४ ना° c.
५ मे B.

१५. अक्षेम इति ॥ हे सीते अयं परिहासोऽन्तर्धानकेलिरक्षेमः अहितः। मयि विषये परीक्षां वियोगासहत्वपरीक्षणं मा कृथाः मा कार्षीः। करोतेर्लुङि तङि थासि "ह्रस्वादङ्गात्" इति सलोपः। मत्तः मत्सकाशात्॥ "पञ्चम्यास्तसिल्"॥ "अन्तर्धौ येनादर्शनमिच्छति" इत्यपादानत्वम्॥ मान्तर्धिथाः अन्तर्हिता मा भूरित्यर्थः। दधातेर्लुङि तङि थासि "स्थाघ्वोरिच्च" इतीकारादेशे "ह्रस्वादङ्गाद्" इति सिचो लोपः। नोऽस्माकं जीवितेन प्राणैर्मा रंस्थाः मा क्रीडीः। अन्तर्धानक्रीडया प्राणान्मापहरेत्यर्थः। रमेरनिटो लुङि सिचोऽकित्वाद्यानुनासिकलोपः॥

## अथ सिजधिकारः।

अहं न्यवधिषं भीमं[1] राक्षसं क्रूरविक्रमम्।
मा घुक्षः पत्युरात्मानं मा न श्लिक्षः प्रियं प्रिये॥१६॥

१६. अथ सिजधिकारः अहमिति॥ हे प्रिये अहं भीमं भयंकरं क्रूरविक्रमं राक्षसं मारीचं न्यवधिषममीमरम्। हन्तेः "लुङि च" इति वधादेशे अदन्तात्सिच्च इडागमः। आत्मानं पत्युर्मे। संबन्धसामान्ये षष्ठी। मा घुक्षः मा संवृणु। गुहू संवरणे। लुङ्॥ "शल इगुपधादनिटः क्सः" इति च्लेः क्सादेशः॥ "हो ढः"॥ भष्भावकत्वषत्वानि। प्रियं मा न श्लिक्षः। द्वौ नञौ प्रकृतमर्थं गमयतः। आलिङ्गेत्यर्थः। 'संभाव्यनिषेधनिवर्त्तने द्वौ प्रतिषेधौ' इति वामनः। श्लिष्यतेर्लुङि "श्लिष आलिङ्गने" इत्यालिङ्गनार्थे च्लेः क्सः। कत्वषत्वे॥

मा स्म द्राक्षीर्मृषा दोषं भक्तं मां मार्तिचिक्लिशः[2]।
शैलं[3] न्वशिश्रियद्रामो[4] नौर्दी[5] नु प्रसदुद्रुवत॥१७॥

---

१ क्रूरं राक्षसं भीमविक्रमम् Es.
२ मा विचिक्लिशः T., G., Com.
३ शैलान् T., G., Com.
४ °द्रामा c., T., G., Com.
५ नु नदीं c.

१७. मास्मेति ॥ हे प्रिये मृषा अविद्यमानं दोषमपराधं मा स्म द्राक्षीः मा स्म विद्यमानं मंस्थाः इत्यर्थः ॥ "स्मोत्तरे लङ् च" इति चकारात् लुङि "न दृशः" इति क्सप्रतिषेधः ॥ "इरितो वा" इति विकल्पादङभावपक्षे "सृजिदृशोर्झल्यमकिति" इत्यमागमे हलन्तलक्षणा वृद्धिः। व्रश्चादिना षत्वे कत्वम्। भक्तं सेवकं मां मा विचिक्लिशः न विक्लेशय। क्लिश्यतेर्णौ चङ्युपधाह्रस्वः। सर्वत्र "न माङ्योगे" इत्यडभावः। अथवा रामा सीता शैलानशिश्रियन्नु श्रिता वा नदीं प्रत्यदुद्रुवन्नु अभिद्रुता वा ॥ "णिश्रि—" इत्यादिना श्रिद्रुभ्यां लुङि चङि द्विर्भावे इयङुवङादेशौ ॥ नुशब्दः संशये ॥

ऐ[1] वाचं देहि धैर्यं नस्तव हेतोरसुस्रुवत्[2]।
त्वं नो मतिमिवाधासीर्नष्टा प्राणानिवादधः[3] ॥ १८ ॥

१८. हे इति ॥ हे भो इति संबोधने निपातः। वाचं देहि संभाषस्वेत्यर्थः। ददातेः प्रार्थनायां लोट् ॥ "घ्वसोरेद्धावभ्यासलोपश्च" इत्यभ्यासलोपः एकारश्च। तव हेतोस्त्वयि निमित्ते ॥ "षष्ठी हेतुप्रयोगे"॥ नोऽस्माकं धैर्यमसुस्रुवत् स्रुतम्। पूर्ववत् णिश्रीत्यादि कार्यम्। त्वं नष्टा अदर्शनं गता सती नो मतिं बुद्धिमधासीरिव अपा इव। धेटो लुङि सिपि "विभाषा घ्राधेट्शाच्छासः" इति सिचो लुगभावपक्षे "आदेच—" इत्यात्वे "यमरमनमातां सक्च" इति सगिडागमौ ॥ "इट ईटि" इति सलोपः ॥ किं च प्राणानदध इव पीतवतीव। मत्प्राणैः सह नष्टासीति भावः ॥ "विभाषा धेट्श्व्योः" इति चङ्पक्षे द्विर्वचनम् ॥ "आतो लोप इटि च" इत्याकारलोपः ॥

रुदतोऽशिश्वियच्चक्षुरास्यं चार्थे तवाश्वयीत्।
प्रियेऽहं[4] मां निरास्थश्चेन्मा न वोचश्चिकीर्षितम् ॥ १९ ॥

---

१ हे T., G., Com. अयि D.
२ °रसुस्रवत् B., T₃, D.
३ हेतोस्तवा° N., C., T₁, T., E₂. तेऽर्थे ममा° D.
४ प्रिये त्वं मां T₄.

१९. रुदत इति ॥ तवार्थे त्वत्कृते रुदतस्त्वद्दिदृक्षया बाष्पायमाणस्य मे चक्षुरशिश्वियत् उच्छूनमभूत्। श्वयतेर्लुङि "विभाषा धेट्श्व्योः" इति पक्षे चङि द्विर्वचने इयङादेशः। आस्यं मुखं चाश्वयीत्। चङो-वैकल्पिकत्वादुभयाभावपक्षे सिचि इडागमे "ह्म्यन्तक्षण—" इत्यादिना वृद्धिप्रतिषेधः ॥ "इट ईटि" इति सलोपः ॥ गुणायादेशौ। मां निरास्थश्चेत् निरस्तवती चेत्। अस्यतेर्लुङि "अस्यतिवक्तिख्यातिभ्यो-ऽङ्" ॥ "अस्यतेस्थुक्" ॥ म्रिये मरिष्यामि। वर्त्तमानसामीप्ये सामान्ये लट् ॥ "रिङ् शयग्लिङ्क्षु" इति रिङादेशः ॥ कर्त्तुमिष्टं चिकीर्षितं मा न वोचः। किं तु ब्रूह्येवेत्यर्थः। उक्ते तत्करिष्यामीति भावः। वक्तेर्लुङि ब्रूञादेशाद्वा "अस्यतिवक्ति—" इत्यङ् ॥ "वच उम्" इत्युमागमः ॥ मा न श्लिक्ष इतिवन्नञ्द्वयं व्याख्येयम् ॥

लक्ष्मणाचक्ष्व यद्याख्यत्[1] सा किञ्चित्कोपकारणम्।
दोषे प्रतिसमाधानमज्ञाते क्रियतां कथम् ॥ २० ॥

२०. लक्ष्मणेति ॥ हे लक्ष्मण सा सीता किञ्चित्कोपकारणं व्याख्यद्यदि तुभ्यमाख्यातवती चेत्। ख्यातेर्लुङि पूर्ववदङ् ॥ "आतो लोप इटि च" इत्याकारलोपः ॥ आचक्ष्व कथय। चक्षिङो लोटि थासि रूपम्। तथाहि दोषे अपराधे अज्ञाते सति कथं प्रतिसमाधानं प्रतीकारः क्रियतां क्रियेत न शक्यमित्यर्थः। अतः कारणं कथ्यतां येन प्रतिविधास्यामीति भावः ॥

इह सा[2]न्वलिपद्गन्धैः स्नान्तीहाभ्यषिचज्जलैः[3]।
इहाहं द्रष्टुमाह्वं तां स्मरन्नेवं[4] मुमोह सः ॥ २१ ॥

२१. इहेति ॥ सा सीता इह प्रदेशे गन्धैश्चन्दनादिगन्धद्रव्यैः। गन्धशब्दस्य द्रव्यवाचित्वे बहुत्वमुक्तं प्राक्। अन्वलिपदनुलिप्तवती। इह

---

१ यद् व्याख्यत् T., G., Com. Between the two halves of this verses T₃ adds. तन्ममाख्यः करिष्यामि तस्य श्रुत्वा प्रतिक्रियाम्।
२ सान्वलिपद्ग° T., G. Com.
३ जलम् T₃.
४ स्मरन्नेव E₃.

स्नान्ती स्नानं कुर्वती । स्नातेः शतरि ङीप् ॥ "आच्छीनद्योः—" इति विकल्पान्नुम् ॥ जलैरभ्यषिचत् मामिति शेषः । इहाहं तां द्रष्टुमाह्वमा-कारयम् ॥ "लिपिसिचिह्वश्च" इति सर्वत्र च्लेरङादेशः ॥ "आतो लोप इटि च" इति ह्वयतेराकारलोपः ॥ एवमित्थं स्मरन्नेव स रामो मुमोह मुमूर्च्छे ॥

तस्यालिपत शोकाग्निः स्वान्तं काष्ठमिव ज्वलन्[1] ।
अलिप्तैवानिलः[2] शीतो वने तं[3] न व्यजिह्लदत्[4] ॥ २२ ॥

२२. तस्येति ॥ ज्वलन् दीप्यमानः शोक एवाग्निः शोकाग्निः तस्य रामस्य स्वान्तं चित्तं काष्ठमिवालिपत । लेपो व्याप्तिः दाह इति यावत् ॥ "लिपिसिचिह्वश्च" इत्यनुवृत्तौ "आत्मनेपदेष्वन्यतरस्याम्" इति च्लेरङ् ॥ शीतो वने अनिलः वनवायुः तं राममलिप्तैव तथा गाढमस्पृक्षदित्यर्थः । अङभावपक्षे "झलो झलि" इति सलोपः ॥ किन्तु न व्यजिह्लदत् न ह्लदयति स्म प्रत्युत सोऽपि ददाहैवेत्यर्थः । ह्लादेर्णौ चङ्युपधाह्रस्वः ॥

स्नानेऽभ्यषिचताम्भोऽसौ[5] रुदन् दयितया विना ।
तथाभ्यषिक्त वारीणि पितृभ्यः शोकमूर्छितः ॥ २३ ॥

२३. स्नान इति ॥ दयितया सीतया विना शोकमूर्छितः शोकमूढः सन् रामः स्नाने प्राप्ते रुदन् अम्भोभिर्नेत्रजलैरेवाभ्यषिचत आत्मानमभिषिक्तवान् । तथा तर्पणे प्रसक्ते पितृभ्यो वारीण्यश्रुजलान्येवाभ्यषिक्त क्षरितवान् । दत्तवानित्यर्थः । सिञ्चतेः क्षरणमात्रपरत्वे जलानां कर्मत्वं सेकपरत्वे करणत्वं चेति विवेकः । अत्रापि पूर्ववद्विकल्पादङभावपक्षे "झलो झलि" इति सिज्लोपः ॥

---

१ °मिवोज्वलः T₃, T₄.
२ अलिप्तैवा° T., G., Com.
३ न तमजिह्लदत् D.
४ व्यजिह्लदत् T., G., Com.
५ स्नानेऽभ्यषिचताम्भोभी T., G., Com.

तथार्त्तोऽपि[1] क्रियां धर्म्यां[2] स कालेनामुचत्कचित् ।
महतां हि क्रिया नित्या छिद्रे[3] नैवावसीदति ॥ २४ ॥

२४. तथेति ॥ तथा तेन प्रकारेणार्त्तोऽपि स रामो धर्म्यां धर्मादनपेतां विहितामित्यर्थः ॥ "धर्मपथ्यर्थ—" इत्यादिना यत्प्रत्ययः ॥ क्रियामनुष्ठानं कचिदपि काले नामुचत् न त्यक्तवान् ॥ "पुषादि—" इत्यादिना लृदित्वादङ् ॥ तथाहि महतां सतां छिद्रे व्यसनेऽपि नित्या क्रिया नियतानुष्ठानं नावसीदत्येव न लुप्यत एव । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥

आह्वास्त[4] स मुहुः शूरान्[5] मुहुराह्वत राक्षसान् ।
एत सीताद्रुहः संख्ये प्रत्यर्थयत राघवम् ॥ २५ ॥

२५. आह्वास्तेति ॥ स रामो मुहुः शूरान् शूराभिमानिनः आह्वास्त स्पर्धया आहूतवान् । तथा राक्षसानपि मुहुराह्वत ॥ "स्पर्धायामाङः" इत्यात्मनेपदे पूर्ववद्विकल्पात्सिजङौ ॥ हे सीताद्रुहः एत आगच्छत । आङ्पूर्वादिणः कर्त्तरि लोटि थस्य तादेशः । संख्ये युद्धे राघवं रामं प्रत्यर्थयत प्रत्यर्थिनं कुरुत योधयध्वमित्यर्थः । प्रत्यर्थिन्शब्दात् तत्करोतीतिण्यन्तात् लोटि थस्य तादेशः । णाविष्ठवद्भावाट्टिलोपः । अर्थयतेस्तु नित्यात्मनेपदित्वात् परस्मैपदविरोधः ॥

स्वपोषमपुषद्युष्मान् या पक्षिमृगशावकाः[6] ।
अद्युतचेन्दुना सार्धं तां[7] प्रब्रूत गता यतः ॥ २६ ॥

२६. स्वपोषमिति ॥ हे पक्षिमृगाणां शावकाः शिशवः या सीता युष्मान् स्वेन धनेन पुष्ट्वा स्वपोषम् ॥ "स्वे पुषः" इति णमुल्प्रत्ययः ॥ अपुषत् । कषादित्वादनुप्रयोगः । पुषादित्वादङ् । इन्दुना सार्धमद्युतत्

१ तथार्त्तोऽपि कचिद्रामो न धर्म्याममुचत्क्रियाम्. $T_3$.

२ धर्म्यां $E_3$.

३ कृच्छ्रे $E_2$.

४ आह्वास्त स मुहू रामः शूरानाह्वत राक्षसान् $T_2$.

५ शूरं $T_2$.

६ °शावकान् $T_2$.

७ यातां ब्रूत D.

इन्दुसाम्येन व्यद्योतिष्टेत्यर्थः ॥ "द्युद्भ्यो लुङि" इति विकल्पात्परस्मैपदम् ॥ द्युतादित्वादङ् । तां सीतां प्रब्रूत कथयत यतो गता यत्र गता तद्ब्रूतेत्यर्थः ॥

गिरिमन्वस्थपद्रामो लिप्सुर्जनकसंभवाम् ।
तस्मिन्नायोधनं वृत्तं लक्ष्मणायाशिषन्महत् ॥ २७ ॥

२७. गिरिमिति ॥ रामो जनकसंभवां जानकीं लिप्सुर्लब्धुमिच्छुः सन् ॥ "सनि मीमा—" इत्यादिना इकारेऽभ्यासलोपः ॥ गिरिमन्वस्खपत् अभ्यगमत् । लृदित्वादङ् । तस्मिन्गिरौ वृत्तं पुराभूतं महदायोधनं युद्धं लक्ष्मणाय । क्रियाग्रहणाच्चतुर्थी । अशिषत् अवोचत् ॥ "सर्त्तिशास्त्यर्त्तिभ्यश्च" इत्यङ् ॥ "शास इदङ्हलोः" इतीकारे षत्वम् ॥

सीतां जिघांसू सौमित्रे राक्षसावारतां ध्रुवम् ।
इदं शोणितमभ्यग्रं संप्रहारेऽच्युतत्तयोः[2] ॥ २८ ॥

२८. सीतामिति ॥ हे सौमित्रे लक्ष्मण सीतां जिघांसू हन्तुमिच्छू । हन्तेः सन्नन्तादुप्रत्ययः ॥ "अज्झनगमां सनि" इति दीर्घः ॥ राक्षसावारतामागतौ ध्रुवम् । ऋ गतौ । लुङि "सर्त्तिशास्त्यर्त्तिभ्यश्च" इत्यङ् ॥ "आडजादीनाम्" ॥ तथाहि तयोः संप्रहारे युद्धे इदमभ्यग्रं प्रत्यग्रं शोणितमश्चुतत् क्षरितम् । श्चुतिर् क्षरणे । लुङि "इरितो वा" इत्यङ् । एतच्च युद्धानुमापकं लिङ्गमित्यर्थः ॥

इदं कवचमच्योतीत्[3] साश्वोऽ[4]यं चूर्णितो रथः ।
एह्यमुं गिरिमन्वेष्टुमवगाहावहे द्रुतम् ॥ २९ ॥

२९. इदमिति ॥ इदं कवचं वर्म अश्चोतीत् अपप्तत् ॥ "इरितो वा" इत्यङ्भावपक्षे रूपम् ॥ सिचि "नेटि" इति हलन्तलक्षणा वृद्धिप्रति-

१ °मत्यर्थ Es.
२ °श्चुतत्तयोः T., G., Com.
°श्च्युतत्तयोः Es.
३ °मश्चोतीत् D., G., T., Com.
°मश्च्योतीत् Es.
४ साश्वो Es.

षेधे लघूपधगुणः । अयं साश्वो रथश्चूर्णितः । अन्वेष्टुं सीतां गवेषितु-
ममुं गिरिमवगाहावहे प्रवेक्ष्यावहे । द्रुतमेह्यागच्छ ॥

मन्युर्मन्ये ममास्तम्भीद्विषादोऽस्तभदुद्यतिम् ।
अजारीदिव च प्रज्ञा[1] बलं शोकात्तथाजरत्[2] ॥ ३० ॥

३०. मन्युरिति ॥ हे लक्ष्मण मम मन्युः शोकोऽस्तम्भीत् । अतिदुःखो
निर्दुःख इति न्यायात् स्तब्धोऽभूदिति मन्ये । उन्मस्तकः शोक इति
भावः ॥ "जृस्तम्भु—" इति विकल्पादङभावे सिचि "इट ईटि" इति
सलोपः ॥ विषादो मनोभङ्गः । 'विषादश्चेतसो भङ्ग उपायाभावनाशनैः'
इति लक्षणात् । उद्यतिमुद्यममस्तभत् तस्तम्भ । अङ्पक्षेऽनुनासिक-
लोपः । प्रज्ञा बुद्धिश्च अजारीत् जीर्णेव ॥ "जृस्तम्भु—" इत्येवाङभावे
सिचि वृद्धिः "इट ईटि" इति सलोपश्च ॥ तथा प्रज्ञावदेव बलं चाज-
रत् जीर्णम् । अङ्पक्षे "ऋदृशोऽङि गुणः" ॥

गृध्रस्येहाश्वतां पक्षौ कृत्तौ[3] वीक्षस्व लक्ष्मण ।
जिघत्सोर्नूनमापादि ध्वंसोऽयं तां निशाचरात् ॥ ३१ ॥

३१. गृध्रस्येति ॥ हे लक्ष्मण इह प्रदेशे कृत्तौ छिन्नौ गृध्रस्य पक्षौ
अश्वतां शूनौ । श्वयतेर्लुङि ॥ "जृस्तम्भु—" इत्याङि "श्वयतेरः"
इत्यकारे "अतो गुणे" इति पररूपता ॥ वीक्षस्व पश्य । तां सीतां घस्तु-
मत्तुं वा इच्छोर्जिघत्सोः विभक्षयिषोरस्य गृध्रस्येति शेषः । घसेरदेर्वा
सन्नन्तादुप्रत्ययः । अदेरपि "लुङ्सनोर्घस्लृ" । अयं ध्वंसः पक्षच्छेदो
निशाचराद्राक्षसादापादि आपन्नः आगत इत्यर्थः । पद्यतेः कर्त्तरि
लुङि "चिण् ते पदः" इति च्लेश्चिणादेशः ॥ "चिणो लुक्" इति तश-
ब्दस्य लुक् ॥

क्रुद्धोऽदीपि रघुव्याघ्रो रक्तनेत्रोऽजनि क्षणात् ।
अबोधि दुःस्थं त्रैलोक्यं दीप्तैरापूरि भानुवत् ॥ ३२ ॥

१ अजारि वचनं प्रज्ञा T3.
२ शोकादिवाजरत् T2, T4.
३ भूमौ E3.
४ जिघांसो° C., c., T1, E2 T2, T4,
५ शुद्धो° T3.
६ रापदि C., T1.

३२. क्रुद्ध इति ॥ रघुव्याघ्रो रघुश्रेष्ठो रामः क्रुद्धः सन्नदीपि दिदीपे। क्रोधादग्निरिव जज्वालेत्यर्थः । क्षणाद्रक्तनेत्रोऽजनि जातः ॥ "जनि-वध्योश्च" इति चिणि वृद्धिप्रतिषेधः । त्रयो लोकास्त्रैलोक्यम् । चातु-र्वर्ण्यादित्वात्स्वार्थे ष्यञ् । दुःखेन तिष्ठतीति दुःस्थं दुरवस्थम् ॥ "आतश्चोपसर्गे" इति कर्त्तरि कप्रत्ययः ॥ अबोधि बुद्धवान् । सर्वं संहनिष्यामीत्यमन्यतेत्यर्थः । भानुवत् भानुना तुल्यं दीप्तैर्दीप्तिभिः । भावे क्तः । आपूरि आपूर्णः । स तिग्मभानुरिव दुर्दर्शोऽभूदित्यर्थः । सर्वत्र कर्त्तरि लुङि तङि "दीपजन—" इत्यादिना च्लेश्चिणादेशो "चिणो लुक्" ॥

अताय्यस्योत्तमं सत्वमप्यायि[1] कृतकृत्यवत् ।
उपाचायिष्ट सामर्थ्यं तस्य संरम्भिणो महत् ॥ ३३ ॥

३३. अतायीति ॥ कृतकृत्यवत् कृतकर्त्तव्यस्येव सर्वं कृतप्रायं मन्य-मानस्य । तथा तद्वधे व्यग्रस्येत्यर्थः । तस्य रामस्य सत्वं शरीरबल-मतायि सन्ततमविच्छिन्नमभूदित्यर्थः । तथाप्यायि अवर्धिष्ट । तायृ संतानपालनयोः । प्यायी वृद्धौ ॥ इत्याभ्यां कर्त्तरि लुङि पूर्ववत् "दीपजन—" इत्यादिना च्लेश्चिणादेशः । किं च संरम्भिणः संभ्रा-न्तस्य कुपितस्य वा । 'संरम्भः संभ्रमे कोपे' इति विश्वः । तस्य रामस्य सामर्थ्यमन्तःशक्तिः महदधिकमुपाचायिष्ट स्वयमेवोपा-चायि ववृधे ॥ "अचः कर्मकर्त्तरि" इति चिनोतेर्लुङि च्लेश्चिणभाव-पक्षे सिचि चिण्वदिटि वृद्धिः ॥

अदोहीव विषादोऽस्य समरुद्धेव विक्रमः ।
सम[2]भावि च कोपेन न्यश्वसी[3]चायतं मुहुः ॥ ३४ ॥

३४. अदोहीति ॥ अस्य रामस्य विषादः प्रागनुवर्त्तमानो मनःखेदः अदोहीव स्वयमेव दुग्धः क्षारित इव तथा गत इत्यर्थः । दुहः कर्म-

१ °माप्यायि T₂, T₃, E₂.
२ समतत T., G., Com.
३ तेन न्यश्वसि चायतम् T., G., Com.

कर्त्तरि लुङि तङि "दुहश्च" इति विकल्पात् च्लेश्चिणादेशः । विक्रमः समरुद्धेव स्वयमेवावरुद्ध इव एकत्र राशीभूय स्थित इत्यर्थः । रुधः कर्मकर्त्तरि लुङि तङि कर्मवत् भावेन प्राप्तस्य चिणः "न रुधः" इति प्रतिषेधे सिच् । सकारस्य "झलो झलि" इति लोपे तङि स्थानिवद्भावाच्च लघूपधगुणः । धत्वजश्त्वे । किं च कोपेन समतप्त च कष्टं कालेनाश्वासिषमनेन वञ्चितोऽस्मीत्यन्वतप्त च पश्चात्तापं गमित इत्यर्थः । तपेः कर्मणि "तपोऽनुतापे च" इति चिणः प्रतिषेधः ॥ "झलो झलि" इति सलोपः ॥ तेन रामेणायतं दीर्घं न्यश्वासि निश्वसितं च । श्वसेर्भावे लुङि "चिण्भावकर्मणोः" इति च्लेश्चिणादेशः । एतेन रौद्रस्थायिना क्रोधेन शोकस्तिरस्कृतः ॥

## अथ श्नमधिकारः ।

अथालम्ब्य धनू रामो जगर्ज गजविक्रमः ।
रुणध्मि सवितुर्मार्गं भिनद्मि कुलपर्वतान् ॥ ३५ ॥

३५. अथेति ॥ अथ क्रोधप्रादुर्भावानन्तरं गजविक्रमो गजपराक्रमो रामो धनुरालम्ब्यावष्टभ्य जगर्ज उच्चैर्बहु भीषणं च बभाषे इत्यर्थः । धनू राम इत्यत्र "ढ्रलोपे पूर्वस्य दीर्घोऽणः" । 'एवं वदन् दाशरथिः' इत्यतः प्राग्गर्जनप्रकारमेव प्रपञ्चेनाह । सवितुर्मार्गं रुणध्मि आवरिष्यामीत्यर्थः ॥ रुधिर् आवरणे । लटि मिपि "रुधादिभ्यः श्नम्" । सामीप्ये वर्त्तमानप्रत्ययः । एवमुत्तरत्रापि द्रष्टव्यम् । कुलपर्वतान् भिनद्मि विदारयिष्यामि ॥

रिणच्मि जलधेस्तोयं विविनच्मि दिवः सुरान् ।
क्षुणद्मि सर्पान्पाताले छिनद्मि क्षणदाचरान् ॥ ३६ ॥

१ सीताविरहदुःखार्तः कोपरक्तान्तलोचनः D., c., B.

२ c. and B. read the verse as follows:—
रुणध्मि सवितुर्मार्गं &c.
रिणच्मि जलधेस्तोयं &c.
D. reads it as under:—
रुणध्मि सवितुर्मार्गं &c.
क्षुणद्मि सर्पान् पाताले &c.

३६. रिणच्मीति ॥ जलधेस्तोयं रिणच्मि रेचयिष्यामि । रिचिर्विरेचने । सुरान् दिवः स्वर्गाद्विविनच्मि पृथक् करिष्यामि । अपनेष्यामीत्यर्थः । विचिर् पृथग्भावे । पाताले सर्पान् क्षुणद्मि चूर्णयिष्यामि । क्षुदिर् संचूर्णने । क्षणदाचरान् राक्षसान् छिनद्मि छेत्स्यामि । छिदिर् द्वैधीकरणे ॥

यमं[1] युनज्मि कालेन समिन्धानोऽस्त्रकौशलम् ।
शुष्कपेषं पिनष्म्युर्वीमखिन्दानः स्वतेजसा ॥ ३७ ॥

३७. यममिति ॥ अस्त्रकौशलं समिन्धानो दीपयन् । ञीइन्धी दीप्तौ । शानच् ॥ "श्नान्नलोपः" इति धातुनकारलोपः ॥ "श्नसोरल्लोपः" इति प्रत्ययाकारलोपः । यममन्तकं कालेन मृत्युना युनज्मि योक्ष्यामि । किमुतान्यमिति भावः । अखिन्दानोऽश्राम्यन् । खिद दैन्ये । पूर्ववच्छानचि "श्नसोरल्लोपः" । स्वतेजसा स्वप्रतापेनोर्वीं शुष्कं पिष्ट्वा शुष्कपेषं पिनष्मि संचूर्णयिष्यामि । शुष्कं पिनष्मीत्यर्थः ॥ "शुष्कचूर्णरूक्षेषु पिषः" इति कर्मोपपदे णमुल्प्रत्ययः । कषादिष्वनुप्रयोगः ॥

भूतिं[2] तृणह्मि यक्षाणां हिनस्मीन्द्रस्य विक्रमम् ।
भनज्मि सर्वमर्यादास्तनच्मि व्योम विस्तृतम्[3] ॥ ३८ ॥

३८. भूतिमिति ॥ यक्षाणां भूतिं कुबेरसंपदमित्यर्थः । तृणह्मि हिनस्मि । तृदि हिंसायाम् । इन्द्रस्य विक्रमं हिनस्मि नाशयिष्यामीत्यर्थः । हिसि हिंसायाम् । सर्वमर्यादाः व्यवस्थाः भनज्मि भङ्क्ष्यामी-

---

१ c. and B. read the verse as
क्षुणह्मि सर्पान् पाताले &c.
यमं युनज्मि कालेन &c.
E3. reads it as under:—
यमं युनज्मि कालेन &c.
विनज्मि धाम सर्वेषां तृणेह्मि सकलं जगत् ॥

२ C. and B. read the following as the 38th verse.
विनज्मि धाम सर्वेषां तृणेह्मि सकलं जगत् ।
{ शुष्कपेषं पिनष्म्युर्वी &c.
{ भूतिं तृणह्मि यक्षाणां &c., is given in c. and B. as the 39th verse.
E3. reads thus:—
शुष्कपेषं पिनष्म्युर्वीं &c.
भूतिं तृणह्मि यक्षाणां &c.

३ विस्तृतिम् T., G., Com.

स्यर्थः । भञ्जो आमर्दने । व्योञ्जो विस्तृतिं महत्ताम् । स्तृञ् आच्छादने इति ह्रस्वान्तात्सौवादिकात् स्त्रियां क्तिन् । न तु क्रैयादिकाद्दीर्घान्तात् । तस्य स्तीर्णीरिति स्यात् । तनच्मि संकोचयिष्यामि । तञ्चू संकोचने ॥ "श्नान्नलोपः" ॥

न तृणेह्मीति लोकोऽयं मां विन्ते निष्पराक्रमम् ।[1]
एवं वदन् दाशरथिरपृणग्धनुषा शरम् ॥ ३९ ॥[2]

३९. नेति ॥ न तृणेह्मि अद्यापि न हन्मि । तृह हिंसायाम् । लटि मिपि श्नमि "तृणह इम्" इतीम् । गुणः । इति हेतोः अयं लोको मां निष्पराक्रमं विन्ते विचारयति । पौरुषहीनं मन्यत इत्यर्थः । विद् विचारणे लटि तङ् ॥ "श्नसोरल्लोपः" ॥ टेरेत्वम् । दाशरथिः रामः एवं वदन् गर्जन् धनुषा शरमपृणक् अयुनक् । पृची संपर्के । लङि तिपि श्नम् । "हल्—" आदिना लोपः ॥

## अथ पुनः प्रकीर्णकाः ।

न्यवर्त्तयत्सुमित्राभूस्तं चिकीर्षुं जगत्क्षयम् ।
तेजः क्षात्रं[3] विवृण्वन्तं[4] दिधक्षन्तमिवानलम् ॥ ४० ॥

४०. न्यवर्त्तयदिति ॥ सुमित्रायां भवतीति सुमित्राभूः सौमित्रिः ॥ "क्विप् च" इति क्विप् ॥ क्षत्रस्येदं क्षात्रं तेजःप्रतापं विवृण्वन्तं पूर्वोक्तगर्जनेन प्रकटयन्तम् । अत एव दिधक्षन्तं दग्धुमिच्छन्तम् । दहेः सन्नन्ताल्लटः शत्रादेशः । घत्वादिकार्यम् । अनलमग्निमिव स्थितं

१ विन्ते मां D., c.
E₂, reads thus:—
भनज्मि सर्वं मर्यादा &c.
न तृणेह्मीति लोकोऽयं &c.
२ The second line of this verse is not found in C., N., B., E₂, and E₃. It is found in T., G., Com. D., T₂, T₃, and T₄.
C., N., B., E₂, read thus:—
न्यवर्त्तयत् सुमित्राभू &c.
ऐक्षेतामाश्रमादारा &c. (*l.* 1 *v.* 41).
E₃, reads thus:—
एवं वदन् दाशरथि &c.
न्यवर्त्तयत् सुमित्राभू &c.
ऐक्षेतामाश्रमादारा &c.
३ क्षात्रं तेजो D., T.
४ विवृण्वानं T₂, T₃.
विचिन्वानं D.

जगतः क्षयं जगत्संहारं चिकीर्षु कर्त्तुमिच्छन्तं रामं न्यवर्त्तयत् न्यवारयत् ॥

ऐक्षेतामाश्रमादाराद्गिरिकल्पं पतत्रिणम् ।
[1]तं सीताघातिनं मत्वा हन्तुं रामोऽभ्यधावत ॥ ४१ ॥

४१. ऐक्षेतामिति ॥ अथ तौ राघवौ आश्रमादारादाश्रमस्य समीपे ॥ "अन्यारात्—" इति पञ्चमी ॥ गिरिकल्पं पर्वतप्रख्यम् । ईषदसमाप्तौ कल्पम् । 'कल्पब्देशीयदेश्यादिप्रख्यप्रतिनिधी अपि' इति सादृश्यवाचकेषु दण्डी । पतत्रिणं पक्षिणं जटायुषमैक्षेतामपश्येताम् । रामस्तं जटायुषं सीताघातिनं सीतां हतवन्तं मत्वा ॥ "कर्मणि हनः" इति हन्तेः कुत्सितार्थे भूतो णिनिः । स्त्रीवधस्य निन्दितत्वादिति । हन्तुम् ॥ "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" इति तुमुन् ॥ अभ्यधावत अभ्यगच्छत् । स्वरितेत्त्वात्तङ् ॥

[2]मा[3]वधिष्ठा[4] जटायुं मां सीतां रामाहमैक्षिषि ।
उपास्थितैवमुक्ते तं सखायं राघवः पितुः ॥ ४२ ॥

४२. मेति ॥ हे राम मावधिष्ठाः मा वधीरित्यर्थः । अत्राङ्प्रश्लेषादाङ्पूर्वाद्धन्तेरकर्मकात् "आङो यमहनः" इत्यात्मनेपदम् ॥ "आत्मनेपदेष्वन्यतरस्याम्" इति वधादेशः ॥ अवध्यत्वे हेतुमाह । मां जटायुषं विद्धीति शेषः । यस्ते पितृसखो न त्वन्य इति भावः । हिंसार्थो वधिरयं प्रकृत्यन्तरमिति पक्षेऽप्यात्मनेपदं चिन्त्यम् । मा

---

१ c., Es, Es, B., read as follows:—
तं सीताघातिनं मत्वा &c . . . ।
प्रोवाच स तदा पक्षी भयाद्रामेण तर्जितः ॥
N. and C. read:—
तं सीताघातिनं मत्वा &c . . . ।
मावधिष्ठा जटायुं मां &c. . . . . ॥

२ N. and C. read as under a verse of 3 lines:—
उपास्थितैवमुक्ते तं &c.
पप्रच्छ जानकीवार्त्तां संग्रामं च पतत्रिणम्
ततो रावणमाख्याय &c. (*l.* 1 *v.* 43).
c. reads as under:—
मा वधीस्त्वं जटायुं मां &c.
उपास्थितैवमुक्ते तं &c.
पप्रच्छ जानकीवार्त्तां संग्रामं च पतत्रिणम् ॥

३ °वधीस्त्व° Es, c.

४ मा Es.

बाधिष्ठा इति पाठान्तरकल्पनं च साहसमेव । मा बन्धिष्ठा इति जयमङ्गलाकारकल्पितपाठस्तु पापिष्ठः । बध्नातेरनात्मनेपदित्वादर्थविरोधाच्चेति। अहं सीतामैक्षिषि अद्राक्षम् । ईक्षतेः कर्त्तरि लुङि तङि सिच इट्। एवं पक्षिणोक्ते राघवो रामः पितुः सखायं तं जटायुषमुपास्थित सङ्गतः ॥ "उपाद्देवपूजा—" इत्यादिना संगतकरणे तङ् ॥ "स्थाघ्वोरिच्च" ॥ "ह्रस्वादङ्गात्" इति सलोपः ॥

ततो[1] रावणमाख्याय[2] द्विषन्तं पततां वरः ।
व्रणवेदनया ग्लायन् ममार गिरिकन्दरे ॥ ४३ ॥

४३. तत इति ॥ ततो रामसमागमानन्तरं पततां पक्षिणां वरो जटायुः रावणं द्विषन्तं द्रोहिणं सीताहर्त्तारमाख्याय व्रणवेदनया प्रहारव्यथया ग्लायन् ग्लानः सन् । ग्लैधातोः शतरि शप्यात्वाभावादायादेशः । गिरेः कन्दरे दर्यां ममार ॥ "म्रियतेर्लुङ्लिङोश्च" इति नियमाल्लिटि न तङ् ॥

तस्या[3]ग्न्यम्बुक्रियां कृत्वा प्रतस्थाते पुनर्वनम् ।
विषादमीयिवांसौ तौ विचिन्वानावितस्ततः ॥ ४४ ॥

४४. तस्येति ॥ तौ रामलक्ष्मणौ तस्य जटायोरग्न्यम्बुनोः क्रियामग्निदाहमुदकदानं च कृत्वा विषादं खेदमीयिवांसौ प्राप्तौ ॥ "उपेयिवान्—" इति निपातः ॥ पुनर्भूय इतस्ततो विचिन्वानौ सीतामन्विष्यन्तौ वनं प्रति प्रतस्थाते प्रस्थितौ। तिष्ठतेर्लिट् ॥ "समवप्रविभ्यः स्थः" इति तङ् ॥

---

१ N. and C. read as under:—
व्रणवेदनया ग्लायन् &c.
तस्याग्न्यम्बुक्रियां कृत्वा &c.(*l.* 1 *v.* 44).
E2, E3, B. पप्रच्छ जानकीवार्त्तां &c.
ततो रावणमाख्याय &c.
२ °माचख्यौ.
३ c. reads 3 lines as under:—
तस्याग्न्यम्बुक्रियां &c.
सत्त्वानजस्रं घोरेण &c. (*l.* 1 *v.* 45).
क्षुभ्यता जगृहाते तौ &c. (*l.* 2 *v.* 45).
B. reads as follows:—
व्रणवेदनया ग्लायन् &c.
तस्याग्न्यम्बुक्रियां &c.
विराधं प्रापिवांसौ तां &c.
सत्त्वानजस्रं घोरेण &c.

सत्वानजस्रं घोरेण वनाकर्षं[1] समश्नता।
क्षुध्यता जगृहाते तौ रक्षसा दीर्घबाहुना ॥ ४५ ॥

४५. सत्वानिति ॥ क्षुध्यता बुभुक्षमाणेन अत एव अजस्रं सत्वान् जन्तून्। 'सत्वमस्त्री तु जन्तुषु' इत्यमरः। वनात्त्वरयाकृष्य वनाकर्षम् ॥ "अपादाने परीप्सायाम्" इति णमुल् ॥ परीप्सा त्वरा। समश्नता भुञ्जानेन घोरेण भयंकरेण दीर्घबाहुना योजनबाहुनेत्यर्थः। रक्षसा कबन्धाख्येन राक्षसेन जगृहाते युगपद्गृहीतावित्यर्थः ॥

भुजौ चकृततुस्तस्य निस्त्रिंशाभ्यां रघूत्तमौ[2]।
स[3] छिन्नबाहुरपतद्विह्वलो ह्वलयन्[4]भुवम् ॥ ४६ ॥

४६. भुजाविति ॥ रघूत्तमौ तस्य कबन्धस्य भुजौ। त्रिंशतोऽङ्गुलिभ्यो निष्क्रान्तौ निस्त्रिंशौ खड्गौ। "डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानं। निस्त्रिंशाद्यर्थम्" इति डच्प्रत्यये टिलोपः। ताभ्यां चकृततुः कृत्तवन्तौ। कृती छेदने। लिटि तसोऽतुसादेशः। छिन्नबाहुः स कबन्धः विह्वलो विभ्रान्तः सन् भुवं ह्वलयन् कम्पयन्। ह्वल चलने चुरादौ। मित्वाद्ध्रस्वः। अपतत् ॥

## अथ कृत्याधिकारः।

प्रष्टव्यं पृच्छतः[5]तस्य कथनीयमवीवचत्।
आत्मानं वनवासं च जेयं चारिं रघूत्तमः ॥ ४७ ॥

४७. अथ कृत्याधिकारः। ते च प्राङ्ण्वुलीयास्तव्यादयः। तानेवोदाहरति। प्रष्टव्यमिति ॥ रघूत्तमो रामः कस्त्वं किमीयः कुतो वनवासः किं

१ बलापकर्षमश्नता N., C., c., B., T1. घोरेणापकर्षं भाश्नता वनात् D. B. reads:—क्षुध्यता जगृहातेतौ. भुजौ चकृततुस्तस्य.
२ रघूद्वहौ T3.
३ सन्छिन्न° T2, T3.
४ ज्वलयन् B. B. has स छिन्नबाहुरपत &c. as the first line. The second line is not given.
५ व्रजतः T3.

ते कार्यमिति यत्प्रष्टव्यम् । व्रश्चादिना षत्वे ष्टुत्वम् । तत्सर्वं पृच्छतोऽनुयुञ्जानस्य देवभूयं गतस्य तस्य कबन्धस्य कथनीयं वक्तव्यम् ॥ "तव्यत्तव्यानीयरः" इति क्रमात्तव्यानीयरौ प्रत्ययौ ॥ आत्मानं रामं दाशरथिमित्यर्थः । पित्रादेशाद्वनवासम् । जेयं जेतव्यम् ॥ "अचो यत्" इति यत्प्रत्ययः ॥ अरिं सीताहारिणं च अवीवचदवोचत् । वच परिभाषणे इति धातोश्चौरादिकात् स्वार्थण्यन्ताण्णौ चङ्युपधाह्रस्वः ॥

लभ्या कथं नु वैदेही शक्यो द्रष्टुं कथं रिपुः[1] ।
सह्यः कथं वियोगश्च गद्यमेतत्त्वया मम ॥ ४८ ॥

४८. लभ्येति ॥ वैदेही कथं नु लभ्या प्राप्या ॥ "पोरदुपधात्" इति यत्प्रत्ययः ॥ हरिः सुग्रीवः कथं द्रष्टुं शक्यः । वियोगश्च कथं सह्यः ॥ "शकिसहोश्च" इति यत्प्रत्ययः ॥ एतत्सर्वं त्वया मम गद्यं वाच्यम् ॥ "गदमद—" इत्यादिना यत्प्रत्ययः ॥ ममेति कर्मणः शेषत्वविवक्षायां षष्ठी । इयं च प्रार्थना । कस्त्वं किंनिमित्तं च ते राक्षसत्वं कथं च तद्विमोक्ष इत्यादि प्रश्नान्तरमप्युत्तरानुसारादूह्यम् ॥

अहं राम श्रियः पुत्रो मद्यपीत इव भ्रमन् ।
पापचर्यो मुनेः शापाज्जात इत्यवदत्स तम् ॥ ४९ ॥

४९. अथ त्वं क इति पृष्टे अस्य नवभिरुत्तरमाहाहमित्यादिभिः ॥ हे राम अहं श्रियः पुत्रः । माद्यन्त्यनेनेति मद्यं मदिरा ॥ "कृत्यल्युटो बहुलम्" इति करणार्थे यत्प्रत्ययः ॥ मद्यपीतः पीतमद्य इव । वाहिताग्न्यादित्वान्निष्ठायाः परनिपातः । भ्रमन्नैश्वर्यमदाद् भ्रान्तः सन् । अन्यायवर्त्ती सन्नित्यर्थः । मुनेः स्थूलशिरोनामकस्य शापात् । पापं चर्यं चरणीयं यस्य स पापचर्यः क्रूरकर्मा जातोऽस्मीति स कबन्धः तं राममवदत् ॥

तव[4] भयातो यम्यत्वं शस्त्रपूतो ब्रवीमि ते ।
रावणेन हृता सीता नीता[5] लङ्कां सुरारिणा[6] ॥ ५० ॥

---

१ रिपुः कथम् B.
२ हरिः T., G., Com.
३ द्रुतम् T2, T3, T4.
४ भयातस्तव N., C., D., T1.
५ लङ्कां नीता N., C., T.
६ सुदुर्गमाम् T2, T3, T4.

५०. तवेति ॥ संप्रति तव यम्यत्वं प्रयातः त्वया दण्डितोऽस्मीत्यर्थः । गद्यादि यम्यान्ते "गदमद—" इत्यादिना यत्प्रत्ययः । शस्त्रेण त्वच्छस्त्रपातेन पूतो निष्पापः सन्नित्यर्थः । 'राजभिः कृतदण्डास्तु कृत्वा पापानि मानवाः । निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा' ॥ इति मनुस्मरणादिति भावः । शापावसाने ज्ञानोदयात् ते तुभ्यं ब्रवीमि सर्वं स्पष्टं कथयामीत्यर्थः । कथयति । सुरारिणा रावणेन सीता हृता सती लङ्कां नीता । 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' इति तत्रैव क्तः ॥

ऋष्यमूकेऽनवद्योऽस्ति पण्यभ्रातृवधः कपिः[1] ।
सुग्रीवो नाम वर्योऽसौ भवता चारुविक्रमः ॥ ५१ ॥

५१. सीतावृत्तान्तमुक्त्वा सुग्रीवसमागमोपायं ब्रुवन्नवद्यपण्येत्यादिनिपातत्रयं क्रमेणोदाहरति ऋष्यमूक इति ॥ ऋष्यमूके ऋष्यमूकाद्रौ । वदितुमनर्हमवद्यं गर्ह्यं पापमिति यावत् । वदेर्नञ्पूर्वात् क्यबपवादी गर्ह्यार्थे यत्प्रत्ययान्तो निपातः । अनवद्योऽगर्ह्यो निष्पापः । वालिनः स्वयमद्रोहित्वादिति भावः । पण्यः पणितव्यः त्वया प्रत्युपकारेण विनिमेतव्यः भ्रातुर्वालिनः स्वदारहरस्याततायिनो वधो यस्य सः तथोक्तः । 'नाततायिवधे दोषो हन्तुर्भवति कश्चन' इति स्मरणादिति भावः । पण व्यवहारे । पणितव्यार्थे ण्यदपवादी पूर्ववद्यत्प्रत्ययान्तो निपातः । सुग्रीवो नाम कपिः अस्ति । चारुविक्रमः श्लाघ्यपौरुषः प्रत्युपकारसमर्थ इति भावः । असौ सुग्रीवो भवता वर्यः मित्रत्वेनाप्रतिबन्धं वरणीय इत्यर्थः । अनिरोधेऽर्थे वृञः पूर्ववत् ण्यदपवाद्येव यत्प्रत्ययान्तो निपातः । किन्तु स्त्रियामस्य निपातनात्पुंसि प्रयोगः कवेः स्वातन्त्र्यात् । यद्वा वार्य इति ण्यदन्तपाठः प्रत्युदाहरणार्थः । तेनार्थादुदाहरणस्य सुज्ञानत्वादिति भावः ॥

तेन वध्येन[2] हन्तासि त्वमर्यं पुरुषाशिनाम् ।
राक्षसं क्रूरकर्माणं शक्रारिं दूरवासिनम् ॥ ५२ ॥

---

१ कवय° T. | २ भव्येन T₃.

५२. तेनेति ॥ हे राम त्वम् । वहन्त्यनेनेति वह्यं शकटम् ॥ "वह्यं करणम्" इति ण्यदपवादेन यत्प्रत्ययान्तो निपातः । इह वह्येन करणेन सहायभूतेन तेन सुग्रीवेण पुरुषाशिनां रक्षसामर्यं स्वामिनं बलाधिकमित्यर्थः । ऋ गतौ इत्यस्मात् "अर्यः स्वामिवैश्ययोः" इति पूर्ववद्यत्प्रत्ययान्तो निपातः । क्रूरकर्माणं निष्कृपमित्यर्थः । शक्रारिमप्रतिद्वन्द्विनमित्यर्थः । दूरवासिनं समुद्रवर्त्तितया दुरासदमित्यर्थः । राक्षसं जात्यापि क्रूरं रावणं हन्तासि । दुर्धर्षमपि सुग्रीवसहायो हनिष्यसीत्यर्थः । हन्तेर्लुटि सिपि "स्यतासी ऌलुटोः" इति तास्प्रत्ययः ॥

आस्ते स्मरन् स कान्ताया हृताया वालिना कपिः ।
वृषो यथोपसर्याया गोष्ठे गोर्दण्डताडितः ॥ ५३ ॥

५३. अथ सुग्रीवस्य वालिवधे कारणमाह आस्त इति ॥ स कपिः सुग्रीवः गोष्ठे व्रजे दण्डताडितो दण्डघातेन वारितप्रवृत्तिर्वृषो वृषभः उपसर्या उपसंक्रमणीया प्राप्तगर्भग्रहणकालेत्यर्थः ॥ 'काल्योपसर्या प्रजने' इत्यमरः ॥ "उपसर्या काल्या प्रजने" इति सर्त्तेरुपपूर्वाद्यत्प्रत्ययान्तो निपातः ॥ तस्याः गोः यथा तां गामिव वालिना हृतायाः कान्तायाः भार्यायाः स्मरन् कान्तां स्मरन् ॥ "अधीगर्थ—" इत्यादिना कर्मणि शेषे षष्ठी ॥ आस्ते निवृत्तव्यापारान्तरस्तिष्ठतीत्यर्थः । दारहरोऽपि भ्रातापि पापिष्ठत्वाद्वध्यं इति भावः ॥

तेन सङ्गतमार्येण रामाजर्यं कुरु द्रुतम् ।
लङ्कां प्राप्य ततः पापं दशग्रीवं हनिष्यसि ॥ ५४ ॥[१]

५४. तेनेति ॥ हे राम आर्येण अर्तुमर्हेण संगत्यर्हेण । ऋ गतौ ॥ "ऋहलोर्ण्यत्" ॥ अर्यस्येदं प्रत्युदाहरणम् । तेन सुग्रीवेण । न जीर्यतीति जर्यमनपायि ॥ "अजर्यं संगतम्" इति संगतविषये जीर्यतेर्नञ्पूर्वात्कर्त्तरि यत्प्रत्ययान्तो निपातः ॥ संगतं संगतिं सख्यमित्यर्थः । भावे क्तः । द्रुतं क्षिप्रं कुरु । 'अजर्यमार्यसंगतम्' । 'अजर्यं नोऽस्तु संग-

१ This latter half is omitted in $T_3$, and $T_4$.

तम्' । 'अजरिता कम्बलः' इति वृत्तौ उदाहरणप्रत्युदाहरणयोर्विशेषण-विशेष्यभावावगमात् अजर्यं सङ्गतमिति तथैव प्रयुक्तम् । कालिदासेन तु पर्यायत्वदृष्ट्या 'मृगैरजर्यं जरसोपदिष्टम्' इति कैवल्येन प्रयुक्तम् । अथवा तत्रापि सङ्गतमिति शेष इत्यास्तां तावत् । ततः सुग्रीवसंगत्या लङ्कां प्राप्य पापं क्रूरं दशग्रीवं हनिष्यसि ॥

अनृतोद्यं न तत्रास्ति सत्यवद्यं ब्रवीम्यहम्[1] ।
मित्रभूयं गतस्तस्य रिपुहत्यां करिष्यसि ॥ ५५ ॥

५५. न चायं कृतघ्न इत्याह अनृतेति ॥ तत्र सुग्रीवे अनृतोद्यमनृतवचनं नास्ति ॥ "वदः सुपि क्यप् च" इति भावे क्यपि संप्रसारणम् । अहं सत्यवद्यं सत्यवचनं ब्रवीमि । अत्रैव सूत्रे चकाराद्यत् । तस्य सुग्रीवस्य मित्रभूयं मित्रभावं गतः सन् ॥ "भुवो भावे" इति क्यप् । रिपुहत्यां शत्रुवधं करिष्यसि ॥ "हनस्त च" इति हन्तेः क्यप् ॥ तकारश्चान्तादेशः ॥

आदृत्यस्तेन[2] वृत्येन स्तुत्यो जुष्येण सङ्गतः ।
इत्यः शिष्येण गुरुवद्गृध्यमर्थमवाप्स्यसि ॥ ५६ ॥

५६. आदृत्य इति ॥ किं च वृत्येन त्वया मित्रत्वेन वरणीयेनेत्यर्थः । जुष्येण हनूमदादिना सेव्येन परिवारवतेत्यर्थः । तेन सुग्रीवेण संगतस्त्वमादृत्यः तेषां सुग्रीवादीनामादरणीयः सत्करणीयः स्तुत्यः स्तोतव्यश्च तथा शिष्येण शासनीयेनान्तेवासिना ॥ "शास इदङ्हलोः" इतीकारः ॥ गुरुवद्गुरुरिव इत्य एतव्योऽनुगम्यश्च सन् ॥ "एतिस्तुशास्वृदृजुषः क्यप्" इति सर्वत्र क्यपि यथायोगं तुगागमो गुणप्रतिषेधश्च द्रष्टव्यः । गृध्यमभिकाङ्क्ष्यमर्थं रावणवधसीताप्राप्तिलक्षणमीप्सितार्थम् ॥ "ऋदुपधाच्चाक्लृपिचृतेः" इति क्यप् ॥ अवाप्स्यसि प्राप्स्यसि ॥

---

[1] ब्रवीमि ते E3, E4. | [2] आदृत्यः C.

नाखेयः सागरोऽप्यन्यस्तस्य सद्भृत्यशालिनः ।
मन्युस्तस्य त्वया मार्ग्यो मृज्यः शोकश्च तेन ते ॥ ५७ ॥

५७. नेति ॥ सन्तः कार्यक्षमाः भृत्या भर्त्तव्याः कर्मकराः ॥ "भृञोऽसंज्ञायाम्" इति क्यपि तुक् ॥ तैः शालत इति तच्छालिनस्तस्य सुग्रीवस्य ॥ "कृत्यानां कर्त्तरि वा" इति षष्ठी ॥ अन्यो द्वितीयोऽपि सागरः । अपिः संभावनायाम् । न खेयोऽखेयः खनितुमशक्यो न । अयं तु कियानस्येति भावः ॥ "ई च खनः" इति क्यपीकारश्चान्तादेशः । प्रश्लिष्टदीर्घनिर्देशात् "ये विभाषा" इत्यात्वाभावः । किन्तु तस्य मन्युः शोकस्त्वया मार्ग्यो मार्जनीयः । तेन च तव शोको मृज्यो मार्ष्टव्यः । परस्परोपकारादुभाभ्यामपि कृतार्थाभ्यां भवितव्यमित्यर्थः ॥ "मृजेर्विभाषा" इति क्यपि मृज्यः ण्यति मार्ग्यः ॥ "मृजेर्वृद्धिः" "चजोः कु घिण्यतोः" इति कुत्वम् ॥

स राजसूययाजीव तेजसा सूर्यसंनिभः ।
अमृषोद्यं वदन् रुच्यो जगाहे द्यां निशाचरः ॥ ५८ ॥

५८. अथ राजसूयादिसूत्रोक्तान् क्यबन्तनिपातान् सपादश्लोकद्वयेनोदाहरति स इत्यादिना ॥ स निशाचरः । राज्ञा सूयते इति राजसूयः क्षत्रियाधिकारः क्रतुविशेषः । सुनोतेः क्यबन्तो निपातः । तेनेष्टवान् राजसूययाजी ॥ "करणे यजः" इति भूतार्थे णिनिः ॥ स इव तेजसा सूर्यसंनिभः । सरति सुवतीति वा सूर्यः । पूर्ववन्निपातः । तत्सन्निभः । मृषोद्यं मृषा वदनं न भवतीत्यमृषोद्यं सत्यवादं वदन् मृषापूर्वाद्वदः "वदः सुपि क्यप् च" इति पक्षे यति प्राप्ते नित्यं क्यबेव निपातितः । रोचत इति रुच्यो रोचमानः सन् । कर्त्तरि निपातः । द्यां दिवं जगाहे जगाम ॥

अकृष्टपच्याः पश्यन्तौ ततो दाशरथी लताः ।
रत्नान्नपानकुप्यानामाटतुर्नष्टसंस्मृती ॥ ५९ ॥

१ अकृष्टपच्याः E१.

५९. अकृष्टेति ॥ ततः कबन्धगमनानन्तरं दाशरथी रामलक्ष्मणौ । कृष्टे पच्यन्त इति कृष्टपच्याः । कर्मकर्त्तरि निपातनात् क्यपि ततो नञ्समासः । अकृष्टपच्या लताः पश्यन्तौ तत्फलशालिनौ सन्तावित्यर्थः । अत एव रत्नान्नपानकुप्यानां नष्टसंस्मृती नष्टरत्नादिसंस्मरणौ विस्मृतराजभोगौ सन्तावित्यर्थः । 'रतेर्गृहीतानुनयेन' इत्यादिवत्सापेक्षत्वेऽपि गमकत्वात्समासः । गोप्यत इति गुप्यं हेमरूप्यातिरिक्तं धनम् । गुपेः क्यपि निपातनाद्गस्य कः । आटतुः चेरतुः ॥

समुत्तरन्तावव्यथ्यौ नदान् भिद्योद्ध्यसंनिभान् ।
सिध्यतारामिव ख्यातां शबरीमापतुर्वने ॥ ६० ॥

६०. समुत्तरन्ताविति ॥ अव्यथ्यावव्यथमानावश्रान्तावित्यर्थः । नञ्पूर्वाद् व्यथेः तत एव निपातनात्कर्त्तरि क्यप् । भिनत्ति कूलमिति भिद्यः उज्झत्युदकमित्युद्ध्यश्च नदौ ॥ "भिद्योद्ध्यौ नदे" इति क्यप् उज्झेर्धत्वं च ॥ तत्संनिभान्नदान् पुंप्रवाहान् समुत्तरन्तौ । सिध्यन्त्यस्मिन्नर्था इति सिध्यः पुष्यः ॥ "पुष्यसिध्यौ नक्षत्रे" इत्यधिकरणे निपातनात्क्यप् ॥ स एव तारा नक्षत्रं तामिव ख्यातां शबरीं नाम कांचित्तापसीं वने कचिदाश्रमे आपतुः प्राप्तौ ॥

वसानां वल्कले शुद्धे विपूयैः कृतमेखलाम् ।
क्षामामञ्जनपिण्डाभां दण्डिनीमजिनास्तराम् ॥ ६१ ॥

६१. अथ श्लोकत्रयेण तामेव विशिषन्नाह वसानामित्यादिना ॥ शुद्धे वल्कले वसानामाच्छादयन्तीम् । विपूयन्त इति विपूयाः मुञ्जाः ॥ "विपूयविनीय—" इत्यादिना विपूर्वात्पवतेर्मुञ्जार्थे कर्मणि क्यबन्तो निपातः ॥ तैः कृतमेखलां कृतमौञ्जीकां क्षामां तपःकृशामञ्जनखण्डाभां कृष्णवर्णां दण्डिनीं धृतदण्डामाजिनमास्तरस्तल्पं यस्यास्ताम् ॥

प्रगृह्य पदवत् साध्वीं स्पष्टरूपामविक्रियाम् ।
अगृह्यां वीतकामत्वादेवगृह्यामनिन्दिताम् ॥ ६२ ॥

---

१ मुञ्जैः D. | २ खण्डा° T., G., Com.

६२. प्रगृह्येति ॥ पुनः ॥ "ईदूदेद्द्विवचनं प्रगृह्यम्" इत्यादि सूत्रैर्यत्कृतसंज्ञं तत्प्रगृह्यपदं तद्वत्साध्वीं सद्वृत्ताम् । अन्यत्र सौशब्द्यात्प्रयोगार्हम् । स्पष्टरूपां स्वच्छमूर्त्तिम् । अन्यत्र संहितायां प्रकृतिभावात् पदान्तरासंकीर्णरूपम् । अविक्रियां विरुद्धचेष्टारहिताम् । अन्यत्र सन्धिप्रयुक्तवर्णविकाररहितम् । किं च वीतकामत्वान्निःस्पृहत्वात् । गृह्या अस्वैरिणी परतन्त्रा अगृह्यां स्वतन्त्राम् । देवगृह्यां देवपक्ष्याम् । अनिन्दितामगर्हितां प्रत्युत प्रशस्यामित्यर्थः । सर्वत्र "पदास्वैरिबाह्यापक्ष्येषु च" इति पदाद्यर्थेषु क्यप् ॥

धर्मकृत्यरतां नित्यमवृष्यफलभोजनाम् ।
दृष्ट्वा तामुमुचद्रामो युग्यायात[1] इव श्रमम् ॥ ६३ ॥

६३. धर्मेति ॥ नित्यं धर्मकृत्यरतां धर्मकार्यसक्ताम् अवृष्याण्यनिन्द्रियवर्धनानि प्रत्युत शोषणानीत्यर्थः ॥ "विभाषाकृवृषोः" इत्युभयत्र क्यप् ॥ ह्रस्वस्य तुक् । तानि फलानि भोजनमाहारो यस्यास्ताम् । तां शबरीं दृष्ट्वा रामो । युग्यं पत्रं वाहनम् ॥ "युग्यं च पत्रे" इति क्यबन्तो निपातः ॥ तेनायातः प्रयात इव श्रममुमुचत् । तद्दर्शनादाह्लादं गत इत्यर्थः । मुचेर्लुङि लृदित्वादङ् ॥

स तामूचेऽथ कच्चित्त्वममावास्यासमन्वये[2][3] ।
पितॄणां कुरुषे कार्यमपाक्यैः[4] स्वादुभिः[5] फलैः ॥ ६४ ॥

६४. स इति ॥ अथ स रामस्तां शबरीमूचे । यदूचे तदेव सप्तभिराह । हे भद्रे । अमा सह वसतोऽस्यां सूर्याचन्द्रमसावित्यमावस्या अमावास्या ॥ "अमावस्यदन्यतरस्याम्" इत्यमाशब्दपूर्वाद्वसेः विकल्पेन निपातनादधिकरणार्थे ण्यत् । तस्याः समन्वये समागमे अपाक्यैर् पचनीयैरनग्निपक्वैरित्यर्थः ॥ "ऋहलोर्ण्यत्" ॥ "चजोः कु—" इति

---

१ युग्ययात D., T2, T3, T4.
२ °ममावस्या° T., L., Com.
३ समुच्चये C., c.
४ °मवाच्यैः D., B.
५ स.धुभिः T2.
वारिभिः T2.

कृत्यम् ॥ स्वादुभिः रुच्यैः फलैः पितॄणां कार्यं पितृकृत्यं श्राद्धकर्म । पूर्ववण्ण्यत् । कुरुषे कच्चित् ॥

अवश्यपाव्यं पवसे कच्चित्त्वं देवभाग्घविः ।
आसाव्यमध्वरे सोमं द्विजैः कच्चिन्नमस्यसि ॥ ६५ ॥

६५. अवश्येति ॥ हे पुण्ये त्वमवश्यपाव्यमवश्यशोध्यम् । पूञो भौवादिकात् "ओरावश्यके" इति ण्यत् ॥ मयूरव्यंसकादित्वात्समासः । 'लुम्पेदवश्यमः कृत्ये' इति मकारलोपः । देवभाक् देवतार्हं हविराज्यादिकं पवसे कच्चित्पुनासि किम् । तस्मादेवधातोर्लेटि "थासः से" । अध्वरे क्रतौ द्विजैरासाव्यमभिषोतव्यम् । आङ्पूर्वात्सुनोतेः "आसुयुवपि—" इत्यादिना ण्यत् । सोमं नमस्यसि नमस्करोषि कच्चित् ॥ "नमो वरिवश्चित्रङः क्यच्" ॥ ततो लटि सिप् ॥

आचाम्यं सन्ध्ययोः कच्चित् सम्यक् ते न प्रहीयते ।
कच्चिदग्निमिवानाय्यं काले संमन्यसेऽतिथिम् ॥ ६६ ॥

६६. आचाम्यमिति ॥ हे कल्याणि सन्ध्ययोः सायंप्रातःकालयोः ते तवाचाम्यमाचमनकर्म ॥ "आसुयुवपि" इत्येव ण्यत् ॥ न प्रहीयते न लुप्यति कच्चित् । काले प्राप्तमतिथिं गार्हपत्याग्नित्यादानीय प्रणीयतेऽग्निरनित्य आनाय्यो दक्षिणाग्निः । 'यो गार्हपत्यादानीय दक्षिणाग्निः प्रणीयते । तस्मिन्नानाय्य—' इत्यमरः । "आनाय्योऽनित्ये" इत्यनित्याग्नावाङ्पूर्वान्नयतेर्ण्यदायादेशनिपातः । तमग्निमिव संमन्यसे मानयसि कच्चित् ॥

न प्रणाय्यो जनः कच्चिन्निकाय्यं तेऽधितिष्ठति ।
देवकार्यविघाताय धर्मद्रोही महोदये ॥ ६७ ॥

६७. नेति ॥ हे महोदये पुण्ये धर्माय द्रुह्यतीति धर्मद्रोही धर्मविघातकः ॥ "प्रणाय्योऽसंमतौ" इति निपातः ॥ देवकार्यविघाताय ते तव

१ पचसे D. | २ कच्चित् C.

निकाय्यं निवासम् ॥ "पाय्यसांनाय्य—" इत्यादिना वासार्थे निपातः ॥ 'निकाय्यनिलयालयाः' इत्यमरः । नाधितिष्ठति कच्चित् ॥

कुण्डपाय्यवतां कच्चिदग्निचित्यावतां तथा ।
कथाभी रमसे नित्यमुपचाय्यवतां शुभे ॥ ६८ ॥

६८. कुण्डेति ॥ हे शुभे शोभने कुण्डैः पीयते सोमोऽस्मिन्निति कुण्डपाय्यः क्रतुविशेषः ॥ "क्रतौ कुण्डपाय्यसंचाय्यौ" इति स्वरार्थे यत्प्रत्ययान्तो निपातः ॥ तद्वतां तद्याजिनामित्यर्थः । तथा उपचाय्योऽग्निस्त्याग्निविशेषः ॥ "अग्नौ परिचाय्योपचाय्यसमूह्याः" इति चिनोतेर्ण्यदायादेशनिपातः ॥ तद्वतामग्निचित्याग्निचयनम् ॥ "चित्याग्निचित्ये च" इति चिनोतेः स्वरार्थे भावे यकारस्तुक् च निपातितौ । तद्वतामग्निचितां च कथाभिः पुण्यकथाभिः नित्यं रमसे सन्तुष्यसि कच्चित् ॥

इति कृत्याधिकारः ।

वर्धते ते तपो भीरु व्यजेष्ठा विघ्ननायकान् ।
अजैषीः कामसंमोहौ संप्राप्था विनयेन वा ॥ ६९ ॥

६९. अथ श्लोकत्रयेण प्रकीर्णकानाह वर्धत इति ॥ हे भीरु भयशीले । संज्ञापूर्वकस्य विधेरनित्यत्वात् न गुणः । ते तव तपो वर्धते कच्चिदिति सर्वत्रानुषङ्गः । विघ्ननायकान् तपोविघ्नकारिण इन्द्रियदोषान् व्यजेष्ठाः विजितवत्यसि कच्चित् । जेर्लुङि "विपराभ्यां जेः" इत्यात्मनेपदम् । कामसंमोहौ । उपलक्षणमेतत् । अरिषड्वर्गमजैषीः किमित्यर्थः । जेर्लुङि सिचि वृद्धिः । विनयेनानौद्धत्येन संप्राप्थाः प्राप्तासि किम् । आप्नोतेः कर्मणि लुङि थासि "झलो झलि" इति सलोपः ॥

नायस्यासि तपस्यन्ती गुरून्सम्यगतूतुषः ।
यमान्नोदविजिष्ठास्त्वं निजाय तपसेऽतुषः ॥ ७० ॥

---

१ दण्डपाय्य° E2.
२ कच्चिदुप° T2, T3, T4.
३ °मुपकार्यवतां C.

७०. नेति ॥ हे पुण्ये त्वं तपस्यन्ती तपश्चरन्ती ॥ "कर्मणो रोमन्थ-तपोभ्यां वर्त्तिचरोः" इति क्यङ् ॥ "तपसः परस्मैपदं वक्तव्यम्"। तस्माल्लटः शतरि ङीप् । नायस्यसि न क्लिश्यसि किम् । यसु प्रयत्ने । लटि सिपि श्यन् । गुरून् सम्यगतूतुषः शुश्रूषया तोषितवत्यसि । तुष्यतेर्णौ चङ्युपधाह्रस्वः । अभ्यासदीर्घः । यमादन्तकान्नोदविजिष्ठाः नोद्विग्नासि नाभैषीः किमित्यर्थः । कृतकृत्यानां मृत्युभयायोगादिति भावः । ओविजी भयचलनयोः । लुङि तङि थासि इट् ॥ "विज इट्" इति ङित्वान्न गुणः । निजाय नित्याय । 'निजमात्मीयनित्ययोः' इति विश्वः । तपसे तपश्चरणाय अतुषः । नित्यं तपसि त्वमुत्सुकासि किमित्यर्थः । पुषादित्वादङ् ॥

अथार्घ्यं[1] मधुपर्काद्यमुपनीयादरादसौ ।
अर्चयित्वा फलैरर्च्यौ सर्वत्राख्यदनामयम् ॥ ७१ ॥

७१. अथेति ॥ अथ कुशलप्रश्नानन्तरमसौ शबरी । अर्घार्थं जलमर्घ्यं तन्मधुपर्कश्चाद्यं यस्य तदर्चासाधनमुपानीय अर्च्यौ पूज्यौ तावादरात्फलैरर्चयित्वा सर्वत्र सर्वेषु पृष्टार्थेषु अनामयं क्षेममाख्यदवोचत् ॥ "अस्यतिवक्तिख्यातिभ्योऽङ्"॥

## अथ कृदधिकारः ।

सख्यस्य[2] तव सुग्रीवः कारकः कपिनन्दनः ।
द्रुतं द्रष्टासि मैथिल्याः सैवमुक्त्वा तिरोऽभवत् ॥ ७२ ॥

७२. कृत्सु कृत्यान्भावकर्मार्थानुक्त्वा कर्त्रर्थान् ण्वुलादीन्निरुपपदानधिकृत्याह सख्यस्येति ॥ हे राम कपीनां नन्दनो नन्दयिता । नन्द्यादित्वाल्ल्युः । सुग्रीवस्तव सख्यस्य सखित्वस्य ॥ "सख्युर्यः" ॥ कर्मणि षष्ठी । कारकः कर्त्ता सख्यं करिष्यतीत्यर्थः । द्रुतं क्षिप्रमेव मैथिल्याः सीतायाः द्रष्टा पश्यन् असि भविष्यसीत्यर्थः । वर्त्तमानसामीप्ये लट् । कृद्दशिभ्यां

१ °र्घ्यमधुपर्का° T., G., Com. | २ तव सख्यस्य T₂, T₃, T₄.

क्रमात् "ण्वुल्तृचौ" इति ण्वुल्तृचौ। इत्युक्त्वा सा शबरी तिरोऽभवत्तिरोभूता॥

नन्दनानि मुनीन्द्राणां रमणानि वनौकसाम्।
वनानि भेजतुर्वीरौ ततः पाम्पानि राघवौ॥ ७३॥

७३. नन्दनानीति॥ ततः शबरीतिरोधानानन्तरं वीरौ राघवौ मुनीन्द्राणां नन्दनानि नन्दकानि वनौकसां वनवासिनां प्राणिनां रमणानि मनोरमाणि। उभयत्रापि नन्द्यादित्वाल्ल्युः। कर्मणि षष्ठी। पम्पाया अदूरभवानि पाम्पानि॥ "अदूरभवश्च" इत्यण्॥ वनानि भेजतुः प्रापतुः। भजेर्लिट्॥ "तॄफलभजत्रपश्च" इत्येत्वाभ्यासलोपौ॥

भृङ्गालीकोकिलक्रुङ्भिर्वाशनैः पश्य लक्ष्मण।
रोचनैर्भूषितां पम्पामस्माकं हृदयाविधम्॥ ७४॥

७४. भृङ्गेति॥ हे लक्ष्मण वाश्यन्त इति वाशनैः कूजद्भिः रोचन्त इति रोचनैः रोचमानैः। उभयत्रापि नन्द्यादित्वाल्ल्युः॥ भृङ्गालिभिः कोकिलैः क्रुङ्भिः क्रौञ्चैश्च। 'क्रुङ् क्रौञ्चः' इत्यमरः। ऋत्विगादिना क्रुञ्चतेः क्विन्प्रत्ययः। निपातसाहचर्यान्नानुनासिकलोपः॥ "संयोगान्तस्य लोपः"॥ "क्विन्प्रत्ययस्य कुः"॥ भूषितामत एवोद्दीपकत्वादस्माकं हृदयं विध्यतीति हृदयावित्। क्विप्। ग्रहादिना संप्रसारणम्॥ "नहिवृति—" इत्यादिना दीर्घः॥ तां पम्पां पम्पासरः पश्य॥

परिभावीनि[3] ताराणां पश्य मन्थीनि चेतसाम्।
उद्भासीनि जलेजानि दुन्वन्त्सदयितं जनम्॥ ७५॥

७५. परीति॥ ताराणां नक्षत्राणां परिभावीनि तिरस्कारीणि। ततोऽपि रमणीयानीत्यर्थः। चेतसां विरहिचित्तानां मन्थन्तीति मन्थीनि प्रमाथीनि। मन्थेर्भौवादिकस्येदित्वान्नुमागमः। उद्भासीनि विकासीनि।

---

१ पम्पानि c., T3.
२ भृङ्गालि T., G., Com.
३ परिभाविणि N., C.
४ धुवन्त्य° c.

सर्वत्र "नन्दिग्रहि—" इत्यादिना ग्रह्यादित्वाण्णिनिः। जले जातानि॥ जलेजानि॥ "सप्तम्यां जनेर्डः"॥ "तत्पुरुषे कृति बहुलम्" इत्यलुक्॥ अदयितं दयिताविरहिणं जनं दुन्वन्ति तपन्ति। टुदु उपतापे। ऌट्। स्वादिभ्यः श्नुः।

सर्वत्र दयिताधीनं सुव्यक्तं रामणीयकम्।
येन जातं प्रियापाये कद्वदं हंसकोकिलम्॥ ७६॥

७६. सर्वत्रेति॥ सर्वत्र सर्वेष्वपि वस्तुषु रामणीयकं रमणीयत्वम्॥ "योपधाद्गुरूपोत्तमाद्वुञ्"॥ दयिताधीनं सुव्यक्तम्। कुतः। येन कारणेन प्रियापाये प्रियाविरहे। हंसाश्च कोकिलाश्च हंसकोकिलम्॥ "विभाषा वृक्षमृग—" इत्यादिना शकुनिद्वन्द्वः॥ कुत्सितं वदतीति कद्वदमसह्यमपि जातम्। वदेः पचाद्यच्॥ "रथवदयोश्च" इति कोः कदादेशः॥ यत्पूर्वं प्रियासहचरस्य मे सुखावहं तत्सर्वमिदानीमसह्यं जातमिति तात्पर्यम्॥

पक्षिभिर्वितृदैर्यूनां शाखिभिः कुसुमोत्किरैः।
अज्ञो यो यस्य वा नास्ति प्रियः प्रग्लो भवेन्न सः॥ ७७॥

७७. पक्षिभिरिति॥ यो न जानातीत्यज्ञो विषयरसानभिज्ञः। अज्ञस्य वा यस्य। प्रीणयतीति प्रियः प्रीतिकरः प्रेमास्पदीभूतः। जनो नास्ति स एव यूनां तरुणानाम्। कर्मणि षष्ठी। वितुन्दन्तीति वितृदाः हिंसकाः। इगुपधलक्षणः कः प्रत्ययः। तैः पक्षिभिः कोकिलादिभिः। उत्किरन्ति विक्षिपन्तीत्युत्किराः॥ सर्वत्र "इगुपधज्ञाप्रीकिरः कः"॥ कुसुमानामुत्किराः पुष्पवर्षिणः। कर्मणि षष्ठीसमासः। तैः शाखिभिः वृक्षैश्च। व्रीह्यादित्वादिनिः। प्रकर्षेण ग्लायत इति प्रग्लः प्रग्लानः क्षीणहर्षो न भवेत्। अभिज्ञः प्रियजनवांश्च ग्लायत्येवैतैरित्यर्थः॥ "आतश्चोपसर्गे" इति कप्रत्ययः॥

१ विभृतैः B.
२ कुसुमोत्करैः C.
३ प्रिया C., Es.

ध्वनीनामुद्धमैरेभिर्मधूनामुद्धयैर्भृशम्।
आजिघ्रैः पुष्पगन्धानां पतङ्गैर्ग्लपिता वयम्॥ ७८॥

७८. ध्वनीनामिति॥ ध्वनीनां शब्दानाम्। उद्धमन्तीत्युद्धमाः उत्पादकाः ध्वनन्त इत्यर्थः। तैर्मधूनां मकरन्दानाम्। उद्धयन्तीत्युद्धयाः पातारः। तैः पुष्पगन्धानाम्। आजिघ्रन्तीत्याजिघ्राः आघ्रातारः। तैः। सर्वत्र "पाघ्रा—" इत्यादिना शप्रत्यये कर्मणि षष्ठी। सार्वमेन "पाघ्रा—" इत्यादिना घ्राध्मोर्जिघ्रधमादेशौ। धेटस्त्वयादेशः। एभिः पतङ्गैः पक्षिविशेषैः भृङ्गैः। विशेषणैस्तद्धर्माभिधानात्सामान्यशब्देन विशेषलक्षणा। वयं ग्लपिताः पीडिताः। ग्लायतेर्ण्यन्तात्करणे "अर्त्तिह्री—" इत्यादिना पुगागमः॥ "ग्लास्नावनुवमां च" इति मित्वाद्ध्रस्वत्वम्॥

धारयैः कुसुमोर्मीणां पारयैर्बाधितुं जनान्[2]।
शाखिभिर्हा हतो[3] भूयो हृदयानामुदेजयैः॥ ७९॥

७९. धारयैरिति॥ कुसुमोर्मीणां पुष्पपरंपराणाम्। धारयन्तीति धारयैः धारकैः। जनान् विरहिजनान् बाधितुम्। पारयन्तीति पारयैः शक्तैः हृदयानाम्। उदेजयन्तीत्युदेजयैरुत्कम्पनैः॥ "अनुपसर्गाल्लिम्प—" इत्यादिना सर्वत्र शप्रत्ययः। कर्मणि षष्ठी च। शाखिभिर्वृक्षैर्भूयो हतोऽस्मि। हेति खेदे॥

ददैर्दुःखस्य मादृग्भ्यो धायैरामोदमुत्तमम्।
लिम्पैरिव तनोर्वातैश्चेतयः स्याज्ज्वलो न कः[4]॥ ८०॥

८०. ददैरिति॥ मादृग्भ्यो मादृशेभ्यः वियोगिभ्यः। त्यदादिसूत्रे चकारात् दृशेः क्विन्प्रत्ययः। दुःखस्य। ददतीति ददैर्दायकैः॥ "ददतिदधात्योर्विभाषा" इति विकल्पात्कर्त्तरि शप्रत्ययः। उत्तममुत्कृष्टमामोदं सौरभम्। दधतीति धायैः दधानैः॥ "ददातिदधात्योः—" इति शाभावपक्षे

१ °ग्लापिता C.
२ जनम् T2, T3, T4.
३ हतो T., G., Com.
४ स्याज्जनो न कः E3.

आकारान्तत्वात् "श्याद्व्यध—" इत्यादिना णप्रत्यये युगागमः॥ "कर्तृकर्मणोः कृति" इत्यत्र शेषत्वविवक्षायामेव षष्ठीविधानादिह तदविवक्षायामामोदमिति कर्मणि द्वितीया। तनोर्देहस्य। लिम्पन्तीति लिम्पैरिव तनुं लिम्पद्भिरिव स्थितैः॥ "अनुपसर्गाल्लिम्प—" इत्यादिना शप्रत्ययः। वातैः कः। चेतयतीति चेतनः प्राणी॥ "अनुपसर्गात्—" इत्यादिनैव चेतयतेः शप्रत्ययः। ज्वलयतीति ज्वलः प्रज्वलनात्मको न स्यात्। सर्वोऽपि स्यादेवेत्यर्थः॥ "ज्वलितिकसन्तेभ्यो णः" इति णविकल्पात्पचाद्यच्॥

अवश्यायकणास्रावाश्चारुमुक्ताफलत्विषः।
कुर्वन्ति चित्त[1]संस्रावं चलत्पर्णाग्रसंभृ[2]ताः॥ ८१॥

८१. अवश्यायेति॥ चलत्सु पर्णाग्रेषु संभृताः संचिताः अत एव चारूणां मुक्ताफलानां त्विष इव त्विषो येषां ते तत्कल्पा इत्यर्थः। अवश्यायत इत्यवश्यायो हिमम्। तस्य कणास्त एव आस्रवन्तीत्यास्रावाः निष्यन्दाः। निष्यन्दमानहिमबिन्दव इत्यर्थः। चित्तम्। संस्रवतीति संस्रावं द्रवम्। कुर्वन्ति। द्रावयन्तीत्यर्थः॥ "श्याद्व्यध—" इत्यादिना श्यायतेरवपूर्वात्कर्त्तरि णप्रत्ययः

अवसायो भविष्यामि दुःखस्यास्य कदा न्वहम्।
न जीवस्याव[3]हारो मां करोति सुखिनं यमः॥ ८२॥

८२. अवसायेति॥ अहं कदा अस्य अवस्यतीत्यवसायोऽवसायकः समापको भविष्यामि। यमोऽन्तकोऽपि जीवस्य प्राणस्यापहरतीत्यपहारो हर्त्ता सन् मां सुखिनं न करोति। अस्मज्जीवनान्मरणमेव वरमिति भावः। श्यादिनैवावापपूर्वात्स्यतेर्हरतेश्च णप्रत्ययः॥

दह्योऽहं मधुनो लेहैर्दावैरुग्रैर्यथा गिरिः।
नायः को [4]नु स येन[5] स्यां बताहं विगतज्वरः॥ ८३॥

१ चित्तं सं॰ T., G., Com.,
२ संहृताः E2.
संस्थिताः E3.
३ ॰स्यापहारो T., G., T2, Com.
४ कोऽत्र N., C., E2, E3, c., T1, T.
५ येनाहं बत स्यां विगत॰ T2, T3, T4.

८३. दृष्ट इति ॥ अहं मधुनो मकरन्दस्य लिहन्तीति लेहैर्मधुलिड्भिः ॥ "श्याद्व्यध—" इति लिहेर्णः ॥ उग्रैः क्रूरैः दुन्वन्तीति दावैः दवानलैः गिरिर्यथा गिरिरिव दह्ये । दहेः कर्मणि लटि मिप् । येनोपायेनाहं विगतज्वरः स्यां सः नयतीति नायः उपायः ॥ "दुन्योरनुपसर्गे" इति णः ॥ को नु न कोऽपीत्यर्थः । बतेति खेदे ॥

समाविष्टं ग्रहेणेव ग्राहेणेवा[1]त्तमर्णवे ।
दृष्ट्वा गृहान्स्मरस्येव वनान्तान्मम मानसम् ॥ ८४ ॥

८४. समिति ॥ मम मानसं वनान्तान्वनप्रदेशान् स्मरस्य गृह्णन्तीति गृहान् गेहानिव तथोद्दीपकानित्यर्थः ॥ "गेहे कः" इति कप्रत्ययः ॥ दृष्ट्वा ग्रहेण कुजादिक्रूरखेटेन समाविष्टमाक्रान्तमिव अर्णवे ग्राहेण नक्रेण आत्तं गृहीतमिव भवतीति शेषः ॥ "विभाषा ग्रहः" इति व्यवस्थितविभाषया जलचरे कर्त्तरि णः ज्योतिषि पचाद्यच् ॥

वाताहति[2]चलच्छाखा नर्त्तका इव शाखिनः ।
दुःसहा ही[3] परिक्षिप्ताः क्वणद्भिरलिगाथकैः ॥ ८५ ॥

८५. वातेति ॥ वातेनाहताः अत एव चलन्त्यः शाखाः लताः बाहवश्च येषां ते । 'शाखा वेदप्रभेदेषु बाहुपार्श्वद्रुमाङ्गयोः' इति यादवः । क्वणद्भिर्गुञ्जद्भिरलिभिरेव गाथकैर्गायकैः ॥ "गस्थकन्" इति गायतेः शिल्पिनि थकन् प्रत्ययः ॥ परिक्षिप्ताः परिवृताः शाखिनो वृक्षाः नृत्यन्तीति नर्त्तकाः लासका इव ॥ "शिल्पिनि ष्वुन्" ॥ हा कष्टम् । दुःसहा असह्याः । सहेः खल् ॥

एकहायनशा[4]रङ्गती रघुकुलोत्तमौ ।
लवं[5]कौ शत्रुशक्तीनामृष्य[6]मूकमगच्छताम् ॥ ८६ ॥

१ ग्राहेणैवा° T4.
२ वाताहत E3, T4, T., G., Com.
३ हा E3, T., G., Com.
४ सारङ्ग N., B., E3, T., G., Com.
५ लावकौ D.
६ °मृश्यमूक° T3, T4, T., G., Com.

८६. एकेति ॥ जिहीते भावानिति हायनः संवत्सरः ॥ "हश्च व्रीहिकालयोः" इति जहातेर्जिहीतेश्च तन्त्रेणोपादानाद्यथासंख्यं व्रीहिकालयोर्ल्युट्प्रत्यये युगागमः । एकहायनस्य प्रथमवयसः सारङ्गस्य गजस्येव गतिर्ययोस्तौ । 'सारंगश्चातके भृङ्गे कुरङ्गे च मतङ्गजे' इति विश्वः ॥ शत्रुशक्तीनां लवकौ साधुच्छेदनौ ॥ "प्रुसृल्वः समभिहारे वुन्" इति लुनातेः समभिहारे लक्षणया साधुकारित्वे वुन्प्रत्ययः । रघुकुलोत्तमौ रामलक्ष्मणौ ऋश्यमूकमगच्छतां प्राप्तौ ॥

तौ वालिप्रणिधी मत्वा सुग्रीवोऽचिन्तयत्कपिः ।
बन्धुना विगृहीतोऽहं भूयासं जीवकः कथम् ॥ ८७ ॥

८७. ताविति ॥ अथ सुग्रीवः कपिस्तौ राघवौ वालिनः प्रणिधी चारौ मत्वा बन्धुना भ्रात्रा विगृहीतः एवं प्रच्छन्नं पीडितः सन् अहं कथं जीवको जीव्यासमित्यर्थः ॥ "आशिषि च" इति धातुमात्रादाशीरर्थे वुन्प्रत्ययः ॥ भूयासमिति तस्यैव स्फुटार्थमनुवादः । इत्यचिन्तयत् ॥

स शत्रुलावौ मन्वानो राघवौ मलयं गिरिम् ।
जगाम संपरीवारो व्योममायमिवोत्थितम् ॥ ८८ ॥

८८. अथ सोपपदाधिकारः ॥ स इति ॥ स सुग्रीवः राघवौ शत्रून् लुनीत इति शत्रुलावौ शत्रुघातिनौ ॥ "कर्मण्यण्" ॥ मन्वानो निश्चिन्वन् सपरीवारो हनूमदादिसहितः । कपीनाममनुष्यत्वात् "उपसर्गस्य घञ्यमनुष्ये बहुलम्" इति दीर्घः । व्योम मिमीत इति व्योममायः ॥ "ह्वावामश्च" इति माङः कर्मण्यणि युक् ॥ तमिवोत्थितं नभः परिच्छेत्तुमिवोच्छ्रितमित्यर्थः । मलयं गिरिं जगाम । तत्पादमृष्यमूकं विहाय तमेवारूढ इत्यर्थः ॥

शर्मदं मारुतिं दूतं विषमस्थः कपिद्विपम् ।
शोकापनुदमभ्यग्रं मायुङ्क्त कपिकुञ्जरः ॥ ८९ ॥

---

१ मारुतं E₂.
२ कपिद्विपः T₂.
३ मायुक्त D.
४ कपिकुञ्जरम् T₂.

८९. शर्मदमिति ॥ विषमे तिष्ठतीति विषमस्थ आपन्नः ॥ "सुपि स्थः" इति कप्रत्ययः ॥ कपिः कुञ्जरः इव कपिकुञ्जरः सुग्रीवः । उपमितसमासः । शर्म सुखं ददातीति शर्मदं हितकारिणमित्यर्थः । अन्यथा सुखाहरणवाचिना शोकापनुदशब्देन पौनरुक्त्यापत्तेः ॥ "आतोऽनुपसर्गे कः" ॥ अत एव शोकमपनुदतीति शोकापनुदं सुखाहर्त्तारमित्यर्थः ॥ "तुन्दशोकयोः परिमृजापनुदोः" इत्यत्र "आलस्यसुखाहरणयोरिति वक्तव्यम्" इत्यर्थविशेषे कविधानात् । अव्यग्रं विमृश्यकारिणमित्यर्थः कपिद्विपं कपिश्रेष्ठम् । गम्भीरस्वभावमित्यर्थः । द्वाभ्यां पीबतीत्यर्थे "सुपि" इति योगविभागात्कः । मारुतस्यापत्यं पुमांसं मारुतिं हनूमन्तम् ॥ "अत इञ्" ॥ द्रुतं प्रायुङ्क्त । इदानीमियमेव नीतिरिति निश्चित्य संधित्सुः प्रेषितवानित्यर्थः ॥

विश्वासप्रदवेशोऽसौ पथिप्रज्ञः समाहितः ।
चित्तसंख्यो जिगीषूणामुत्पपात नभस्तलम् ॥ ९० ॥

९०. विश्वासेति ॥ विश्वासं प्रददातीति विश्वासप्रदो वेषो यस्य सः भिक्षुवेषधारीत्यर्थः । रामायणे तथैवोक्तेः । पन्थानं प्रजानातीति पथिप्रज्ञः पथि कुशल इत्यर्थः ॥ "प्रे दाज्ञः" इति ददातेर्जानातेश्च प्रोपसृष्टात्कर्मोपपदात्कः ॥ समाहितोऽप्रमत्तः जिगीषूणां चित्तानि संचष्टे संख्यातीति वा चित्तसंख्यः चित्तज्ञः ॥ "समि ख्यः" इति संपूर्वात्ख्यातेश्च क्षिङादेशाच्च कर्मोपपदात्कः ॥ असौ मारुतिः नभस्तलमुत्पपात ॥

सुरापैरिव घूर्णद्भिः शाखिभिः पवनाहतैः ।
ऋष्यमूकमगाद्भृङ्गैः प्रगीतं सामगैरिव ॥ ९१ ॥

९१. सुरापैरिति ॥ पवनेनाहतैराकम्पितैरत एव सुरां पिबन्तीति सुरापाः मद्यपास्तैरिव घूर्णद्भिस्तद्वद्भ्रमद्भिः शाखिभिर्वृक्षैरुपलक्षितम् । किं च भृङ्गैः सामानि गायन्तीति सामगास्तैरिव प्रगीतमुपगीतमृश्य-

१ वेषो N., D., T., Com. G., E3. | २ ऋश्यमूक T., G., Com.

मूकमगात् गतः॥ "गापोष्टक्" इति गायतेः पिबतेश्च टक्॥ सुरापै-रित्यत्र "सुराशीध्वोः पिबतेरिति वक्तव्यम्" इति धातूपपदनियमः॥

तं मनोहरमागम्य गिरिं वर्महरौ कपिः।
वीरौ सुखाहरोऽवोचद्भिक्षुर्भिक्षार्हविग्रहः॥ ९२॥

९२. तमिति॥ भिक्षुः परिव्राड्वेषधारी। 'भिक्षुः परिव्राट् कर्मन्दी' इत्यमरः। तत्रापि भिक्षामर्हतीति भिक्षार्हो विग्रहो यस्य सः भिक्षाकालोचितवेष इत्यर्थः॥ "अर्हः" इत्यर्हतेः कर्मोपपदादच्प्रत्ययः॥ कपिर्हनूमान्। मनो हरतीति मनोहरम्॥ "हरतेरनुद्यमनेऽच्"॥ तं गिरिमागम्य प्राप्य वर्म हरत इति वर्महरौ कवचधारणवयस्कौ॥ "वयसि च" इत्यच्॥ वीरौ राघवौ। सुखमाहर्तुं शीलमस्यास्तीति सुखाहरः आनन्दकरः सन्॥ "आङि ताच्छील्ये" इत्यच्॥ अवोचत्॥

बलिनावमुमद्रीन्द्रं युवां स्तम्बेरमाविव।
आचक्षाथामिथः कस्माच्छङ्करेणापि दुर्गमम्॥ ९३॥

९३. बलिनाविति॥ हे वीरौ स्तम्बे रमेते स्तम्बेरमौ हस्तिनाविव॥ "स्तम्बकर्णयो रमिजपोः" इत्यत्र "हस्तिसूचकयोरिति वक्तव्यम्" इति हस्तिन्यच्प्रत्ययः॥ बलिनौ बलाढ्यौ युवां शङ्करेणेश्वरेणापि॥ "शमिधातोः संज्ञायाम्" इत्यच्॥ दुर्गममिममुमद्रीन्द्रमृश्यमूकं कस्मात्कारणादिथः प्राप्नुथः। इणो वर्त्तमानसामीप्ये भूते लटि थस्। आचक्षाथां कथयतम्। चक्षिङो लोट् आथाम्॥

व्याप्तं गुहाशयैः क्रूरैः क्रव्याद्भिः सनिशाचरैः।
तुङ्गशैलैतरुच्छन्नं मानुषाणामगोचरम्॥ ९४॥

९४. व्याप्तमिति॥ पुनर्गुहासु शेरत इति गुहाशयैः॥ "अधिकरणे शेतेः" इत्यच्प्रत्ययः॥ क्रूरैर्हिंस्रैर्निशासु चरन्तीति निशाचराः॥ "चरेष्टः" इति टः॥ सह तैः सनिशाचरैः क्रव्यमदन्तीति क्रव्याद्भिः राममांसभ-

१ °मागत्य N., C., T., B., D., c. | २ शृङ्ग T., G., Com.

ऋक्षैः सिंहव्याघ्रादिभिः व्याप्तम् ॥ "क्वौ च" इत्यत्रेरणग्रहणेन चित्प्रत्ययः ॥ तुङ्गशृङ्गः उच्चशिखरः स चासौ तमश्छन्नश्च तमत एव मानुषाणामगोचरममुमद्रीन्द्रमिति पूर्वेण संबन्धः ॥

अथ खशादिप्रत्ययाधिकारः ।

सत्त्वमेजयसिंहाढ्यान् स्तनन्धयसमत्विषौ ।
कथं नाडिन्धमान्मार्गानागतौ विषमोपलान् ॥ ९५ ॥

९५. सत्वमेजयेति ॥ सत्त्वान् प्राणिनः एजयन्ति कम्पयन्तीति सत्त्वमेजयाः सर्वप्राणिभीषणाः ॥ "एजेः खश्" ॥ "अरुर्द्विषदजन्तस्य मुम्" इति मुमागमः ॥ तैः सिंहैराढ्यान् पूर्णान् विषमोपलान् निम्नोन्नतपाषाणान् अत एव नाडीः सिराः धमन्त्युपलोत्पीडनादापूरयन्तीति नाडिन्धमान् । 'नाडी तु धमनिः सिरा' इत्यमरः ॥ "नाडीमुष्ट्योश्च" इति खश्प्रत्यये मुमागमः ॥ "खित्यनव्ययस्य" इति ह्रस्वः ॥ मार्गान् । स्तनं धयतीति स्तनन्धयो बालः ॥ "नासिकास्तनयोर्ध्माधेटोः" इति धेटः खश्ययादेशः ॥ पूर्ववन्मुमागमः । तत्समत्विषौ तद्वत्कोमलाङ्गावित्यर्थः । युवां कथमागतौ प्राप्तौ ॥

उत्तीर्णौ वा कथं भीमाः सरितः कूलमुद्वहाः ।
आसादितौ कथं ब्रूतं न गजैः कूलमुद्रुजैः ॥ ९६ ॥

९६. उत्तीर्णाविति ॥ किं च कूलान्युद्वहन्त्युत्क्रम्य वहन्तीति कूलमुद्वहाः अत एव भीमाः भीषणाः सरितो नदीः कथमुत्तीर्णौ तीर्णवन्तौ । मारुतिः सागरं तीर्ण इतिवत्कर्त्तरि क्तः । कूलान्युद्रुजन्तीति कूलमुद्रुजाः कूलभञ्जकाः ॥ "उदि कूले रुजिवहोः" इत्युभयत्रापि खशि मुमागमः ॥ तैर्गजैः कथं नासादितौ नास्कन्दितौ ब्रूतम् ॥

रामोऽवोचद्धनूमन्तमावामभ्रंलिहं गिरिम्[1] ।
ऐव विद्वन्पितुः कामात्पान्तावल्पम्पचान्मुनीन् ॥ ९७ ॥

---

1 रामोऽवदद्ध° T3, Com. E3, reads the verse thus:— ऐव विद्वन्पितुः &c. रामोऽवोचद्धन् &c.

९७. राम इति ॥ अथ रामः हनू कपोलपार्श्वे । 'गण्डौ कपोलौ तत्परा हनुः' इत्यमरः । तद्वन्तं हनूमन्तम् । नित्यार्थे मतुप् । भग्नहनुरयमिति प्रसिद्धः ॥ "अन्येषामपि दृश्यते" इति दृशिग्रहणसामर्थ्यात्पाक्षिको दीर्घः ॥ अवदत् । किमिति । हे विद्वन् वेषानुरूपमामन्त्रितम् । आवां पितुः कामात् काममभिप्रायमनुसृत्येत्यर्थः ॥ ल्यब्लोपे पञ्चमी । अल्पं पचन्तीत्यल्पम्पचान् मितम्पचानल्पसंतुष्टानित्यर्थः ॥ "मितनखे च" इति मितशब्दस्यार्थपरत्वादनुक्तसमुच्चयार्थचकाराद्वा अल्पशब्दोपपदात्पचेः खशित्याहुः । मुनीन्पान्तौ रक्षन्तौ सन्तौ । पातेर्लटः शत्रादेशः । अभ्रं लेढीत्यभ्रंलिहमत्युन्नतम् ॥ "वहाभ्रे लिहः" इति खशि मुम् ॥ गिरिमृश्यमूकमैव आगतौ । आङ्पूर्वादिणो लङि वसि सलोपः । आड्वृद्धिः ॥

अमितम्पचमीशानं सर्वभोगीणमुत्तमम् ।
आवयोः पितरं विद्धि ख्यातं दशरथं भुवि ॥ ९८ ॥

९८. अथ कस्ते पिता तमाह अमितम्पचमिति ॥ मितं पचतीति मितम्पचः ॥ "मितनखे च" इति खश् ॥ नञ्समासे अमितम्पचं बहुप्रदमित्यर्थः । ईशानमीशितारं न त्वन्येनेश्यमानम् । सर्वभोगाय हितं सर्वभोगीणं महाभोगिनमित्यर्थः ॥ "आत्मन्विश्वजनभोगोत्तरपदात्खः" ॥ णत्वम् ॥ उत्तममुत्तमपुरुषं भुवि ख्यातं दशरथमावयोः पितरं विद्धि जानीहि ॥ "हुझल्भ्यो हेर्धिः" ॥

छलेन दयितारण्याद्रक्षसारुन्तुदेन नः ।
असूर्यम्पश्यया मूर्खा हृता तां मृगयावहे ॥ ९९ ॥

९९. अथर्श्यमूकप्राप्तौ कारणमाह छलेनेति ॥ अरुः तुदतीत्यरुन्तुदेन मर्मभेदिना ॥ "विध्वरुषोस्तुदः" इति खश् ॥ "अरुर्द्विषत्—" इत्यादिना मुमागमे संयोगान्तलोपः ॥ रक्षसा रावणेन सूर्यं न पश्यतीत्यसूर्यपश्या किमुतान्यमित्यतिगोप्येत्यर्थः । नञः सूर्यसंबन्धे वैरस्यादसमर्थस-

१ सर्वभोगीन° B., Es, c. | २ हृतां Es.

मासेऽपि हशिनैवेष्यते ॥ "असूर्यललाटयोर्दृशितपोः" इति खशि मुमागमः ॥ पाघ्रादिना दृशेः पश्यादेशः । तया सूर्या उपलक्षिता नोऽस्माकं दयिता छलेन मायया मृगच्छद्मना अरण्याद्धृता । तां मृगयावहे अन्विष्यावहे । मृग अन्वेषणे । स्वार्थण्यन्तः ॥

प्रत्यूचे मारुती राममस्ति वालीति वानरः ।
शमयेदपि संग्रामे यो ललाटन्तपं रविम् ॥ १०० ॥

१००. प्रतीति ॥ अथ मारुतिः हनूमान् रामं प्रत्यूचे प्रत्युवाच । किमिति । नाम्ना वालीति प्रसिद्धो वानरोऽस्ति । यो वालिः संग्रामे रणे ललाटं तपतीति ललाटन्तपः सर्वोत्तरः ॥ "असूर्यललाटयोः—" इत्यादिना खशि मुम् । तं रविमपि शमयेदवसादयेत् । शमयितुं शक्नोतीत्यर्थः ॥ "शकि लिङ् च" इति शक्यर्थे लिङ् ॥

उग्रम्पश्येन सुग्रीवस्तेन भ्रात्रा निराकृतः ।
तस्य मित्रीयतो दूतः संप्राप्तोऽस्मि वशंवदः ॥ १०१ ॥

१०१. उग्रम्पश्येति ॥ उग्रं पश्यतीत्युग्रम्पश्यः पापदर्शी ॥ "उग्रम्पश्य—" इत्यादिना निपातनादण्बाधेन खशि मुम् पश्यादेशश्च ॥ तेन भ्रात्रा तेन वालिना सुग्रीवो निराकृतः हृतदारो निरस्त इत्यर्थः । मित्रमात्मन इच्छतो मित्रीयतः त्वया मैत्रीमिच्छत इत्यर्थः ॥ "सुप आत्मनः क्यच्" ॥ ततो लटः शत्रादेशः । तस्य सुग्रीवस्य वशं वदतीति वशंवदोऽनुकूलचारी ॥ "प्रियवशे वदः खच्" ॥ एवंभूतः संप्राप्तोऽस्मि ॥

प्रियंवदोऽपि नैवाहं ब्रुवे मिथ्या परन्तप ।
सख्या तेन दशग्रीवं निहन्तासि द्विषन्तपम् ॥ १०२ ॥

१०२. प्रियवंद इति ॥ × × × × × × हे राम द्विषतः परांस्तापयतीति द्विषन्तपं महावीरमपीत्यर्थः । पूर्ववत्खचि मुमागमे संयोगान्तलोपः । दशग्रीवं निहन्तासि हनिष्यसि । निपूर्वाद्धन्तेर्लुटि सिप् ॥ "जासिनिप्रहण—" इत्यत्र संघातविगृहीतविपर्यस्तग्रहणेऽपि शेषत्वविवक्षायामेव षष्ठीविधानादिह तदविवक्षायां कर्मणि द्वितीयैव ॥

वाचंयमोऽहमनृते सत्यमेतद्ब्रवीमि ते ।
एहि सर्वंसहं मित्रं सुग्रीवं कुरु वानरम् ॥ १०३ ॥

१०३. वाचंयम इति ॥ अहमनृते विषये वाचं यच्छतीति वाचंयमो मौनव्रती ॥ "वाचि यमो व्रते" इति खच् ॥ "वाचंयमपुरन्दरौ च" इति निपातनान्मुमागमः ॥ सत्यमेव ते तुभ्यं ब्रवीमि । एह्यागच्छ । सर्वं सहत इति सर्वंसहं सर्वकार्यक्षमम् ॥ "पूःसर्वयोर्दारिसहोः" इति खचि मुम् ॥ सुग्रीवं नाम वानरं मित्रं कुरु । यतस्ते हस्तस्था कार्यसिद्धिरिति भावः ॥

सर्वंकषयशःशाखं रामकल्पतरुं[1] कपिः ।
आदायाभ्रंकषं प्रायान्मलयं फलशालिनम् ॥ १०४ ॥

१०४. सर्वंकषेति ॥ ततः कपिः हनूमान् सर्वं कषन्तीति सर्वंकषाणि सर्वव्यापीनि यशांस्येव शाखा यस्य तं राममेव कल्पतरुमादाय गृहीत्वा पृष्ठमारोप्येत्यर्थः । अभ्रं कषतीत्यभ्रंकषम् ॥ "सर्वकूल—" इत्यादिनोभयत्रापि खचि मुम् ॥ फलेन चूतादिना कार्यसिद्ध्या च शालत इति फलशालिनं मलयं मलयाद्रिं प्रायात् प्रयातः । अत्र यशः-शाखं रामकल्पतरुमिति सावयवरूपकम् ॥

मेघङ्करमिवायान्तमृतुं रामं क्रमान्वितः ।
दृष्ट्वा मेने न सुग्रीवो वालिभानुं भयङ्करम् ॥ १०५ ॥

१०५. मेघङ्करमिति ॥ क्रमान्वितो वालिभानुसंतापात्क्रान्तः सुग्रीवः मेघान् करोतीति मेघङ्करम् ॥ "मेघर्तिभयेषु कृञः" इति खचि मुम् ॥ एतेन भयङ्करो व्याख्यातः । तमृतुं वर्षर्तुमिवायान्तं रामं दृष्ट्वा । वालि-भानुरिवेत्युपमितसमासः । ऋतुमिवेति लिङ्गात् । तं भयं करोतीति भयङ्करं न मेने । वालिभयं मुमोचेत्यर्थः ॥

उपाम्यकुरुतां सख्यमन्योन्यस्य प्रियङ्करौ[3] ।
क्षेमङ्कराणि कार्याणि पर्यालोचयतां[2] ततः ॥ १०६ ॥

---

१ रामं कल्प° T2, B.
२ मत्यालोचयतां T2, E2, D.
३ °मुभौ B.

१०६. उपाग्नीति ॥ अन्योन्यस्य प्रियं कुरुतः इति प्रियङ्करौ परस्परोपकारकौ सन्तौ तौ रामसुग्रीवौ अग्नेः समीपे उपाग्नि । सामीप्येऽव्ययीभावः । सख्यं मैत्रीम् ॥ "सख्युर्यः" अकुरुताम् । अग्निसाक्षिकां मैत्रीं चक्रतुरित्यर्थः । ततः सख्यानन्तरं क्षेमं कुर्वन्तीति क्षेमङ्कराणि ॥ "क्षेमप्रियमद्रेऽण् च" इति चकारादुभयत्रापि खचि मुम् ॥ कार्याण्यनन्तरकर्त्तव्यानि पर्यालोचयतां पर्यालोचितवन्तौ । लुचेश्चौरादिकात्कर्तरि लङि तसस्तामादेशः ॥

आशितम्भवमुत्कुष्टं वल्गितं शयितं स्थितम् ।
बहुमन्यत काकुत्स्थः कपीनां स्वेच्छया कृतम् ॥ १०७ ॥

१०७. आशितम्भवमिति ॥ कपीनां कपिसंबन्धि स्वेच्छया कृतम् । आशित इत्याङ्पूर्वादश्नातेरविवक्षिते कर्मणि कर्त्तरि क्तः । आशितस्य भावः आशितम्भवः ॥ "आशिते भुवः करणभावयोः" इति भावे खचि मुमागमः ॥ तमाशितम्भवमाशितमशनं भोजनमिति यावत् । उत्कृष्टमुच्चैः क्रोशनं क्ष्वेडितमित्यर्थः । वल्गितं वल्गनं शयितं शयनं स्थितं स्थितिम् । सर्वत्र भावे क्तः । दृष्ट्वा काकुत्स्थो रामो बहुमन्यत । चिरात्स्वप्रसादलब्धं तेषां स्वच्छन्दचारं दृष्ट्वा सन्तुष्ट इत्यर्थः ॥

ततो बलिन्दमप्रख्यं कपिर्विश्वम्भराधिपम् ।
सुग्रीवः प्राब्रवीद्रामं वालिनो युधि विक्रमम् ॥ १०८ ॥

१०८. तत इति ॥ ततः कपिचेष्टादर्शनानन्तरं कपिः सुग्रीवः बलिं दमयतीति बलिन्दमो बलिध्वंसो विष्णुः तद्वत्प्रख्याति प्रकाशत इति तत्प्रख्यम् ॥ "आतश्चोपसर्गे" इति कः ॥ विश्वं बिभर्त्तीति विश्वम्भरा भूः । उभयत्रापि "संज्ञायां भृतृवृजि—" इत्यादिना खच् । तस्या अधिकं पातीत्यधिपः । पूर्ववत्कः । रामं वालिनो युधि विक्रमं प्राब्रवीत् रामाय प्रोवाचेत्यर्थः । अकथितकर्मत्वविवक्षायां द्वितीया ॥

---

१ वलितं Es.
२ स्वेछया D.
३ बुद्धिविक्रमम् Tr.

वसुन्धरायां कृत्स्नायां नास्ति वालिसमो बली ।
हृदयङ्गममेतत्त्वां[1] ब्रवीमि न पराभवम् ॥ १०९ ॥

१०९. वसुन्धरायामिति ॥ कृत्स्नायां वसूनि धारयतीति वसुन्धरा भूः । पूर्ववत्खचि "खचि ह्रस्वः"। तस्यां वालिसमो बली बलाढ्यो नास्ति । हृदयं गच्छतीति हृदयङ्गमं हृद्गतम् ॥ "गमश्च" इति संज्ञायां खच् ॥ हृद्गतस्येयं संज्ञेति मन्यते । एतद्वालिबलं त्वां ब्रवीमि तुभ्यं ब्रवीमीत्यर्थः । पूर्ववद्द्विकर्मकत्वम् । पराभवं न ब्रवीमि । तदुत्कर्षेण न ते पराभवं ब्रवीमि । तव सर्वोत्कृष्टत्वात् । किन्तु हृद्गतं वाच्यमित्युच्यत इत्यर्थः ॥

इति खशाधिकारः ॥

दूरगैरन्तगैर्बाणैर्भवानत्यन्तगः[2] श्रियः ।
अपि संक्रन्दनस्य स्यात् क्रुद्धः किमुत वालिनः ॥ ११० ॥

११०. रामोत्कर्षमेवाह दूरगैरिति ॥ हे राम क्रुद्धो भवान् दूरगैर्दूरगामिभिः अन्तगैर्लक्ष्यपातिभिः अमोघैरित्यर्थः बाणैः साधनैरत्यन्तगा अतिभूमिं गता श्रीर्यस्य ॥ "अन्तात्यन्त—" इत्यादिना सर्वत्र गमेर्डः ॥ तस्य संक्रन्दनस्य इन्द्रस्यापि । नन्द्यादित्वाल्ल्युः। स्यात् प्रत्यर्थीभवितुं शक्नुयादित्यर्थः ॥ "शकि लिङ् च" इति शक्त्यर्थे लिङ् । शेषे प्रथमः । वालिनः किमुत तज्जस्य कपेरिति भावः ॥

वरेणं[3] तु मुनेर्वाली सञ्जातो दस्युहो रणे ।
अवार्यप्रसरः प्रातरुद्यन्निव तमोपहः ॥ १११ ॥

१११. तथापि वालिबलं विचिन्त्य शङ्कते मे हृदयमित्याह श्लोकद्वयेन वरेणेत्यादिना ॥ असि त्वं महावीरः किंतु वाली रणे दस्युहः दस्यून् शत्रून् वध्यात् । 'दस्युशात्रवशात्रवः' इत्यमरः ॥ "आशिषि हनः" इत्याशीरर्थे हन्तेर्डप्रत्ययः ॥ इति मुनेर्ब्रह्मणो वरेणानुग्रहेण प्रातर्दिनादौ

१ °मेतत्त्वा N., C., T1, T2, T3, T4.
२ °त्यन्त गश्रियः Com.
३ वरेणात्र T2.

उद्यन्नुदयमानः । उत्पूर्वादिणो लटः शत्रादेशः । तमांस्यपहन्तीति तमोपहः सूर्यः ॥ "अपेः क्लेशतमसोः" इति हन्तेरपपूर्वात् डप्रत्ययः ॥ स इवावार्यप्रसरो दुर्वारगतिः सञ्जातः ॥

अतिप्रियत्वान्न हि मे कातरं प्रतिपद्यते ।
चेतो वालिवधं राम क्लेशापहमुपस्थितम् ॥ ११२ ॥

११२. ततः किमत आह अतिप्रियत्वादिति ॥ हे राम क्लेशानपहन्तीति क्लेशापहं सर्वदुःखोच्छेदकम् । पूर्ववत् डः । उपस्थितं त्वत्सामर्थ्यादासन्नं वालिवधमतिप्रियत्वात् वालिवधस्येप्सिततमत्वात् कातरं व्यग्रमत्यौत्सुक्यात्त्वरमाणं मे चेतो न प्रतिपद्यते न प्रत्येति । वालिबलानुभवितृत्वान्न विश्वसिति हीत्यर्थः ॥

इति डाधिकारः ॥

शीर्षघातिनमायातमरीणां[१] त्वां[२] विलोकयन् ।
पतिघ्नं[३]लक्षणोपेतां मन्येऽहं वालिनः[४] श्रियम्[५] ॥ ११३ ॥

११३. तर्हि माभून्नेत्याह शीर्षेति ॥ हे राम अहं रिपूणां शीर्षाणि हन्तीति शीर्षघातिनं शीर्षच्छेदिनम् ॥ "कुमारशीर्षयोर्णिनिः" इति हन्तेर्णिनिप्रत्ययः ॥ आयान्तं त्वां विलोकयन् वालिनः श्रियं पत्नीं पतिं हन्तीति पतिघ्नम् ॥ "लक्षणे जायापत्योष्टक्" इति हन्तेष्टक् ॥ "गमहन—" इत्यादिना उपधालोपः ॥ "हो हन्तेः—" इति कुत्वम् ॥ तेन लक्षणेन पाणिरेखादिना उपेतां मन्ये । वालिनं हतं मन्ये इत्यर्थः । उभयबलपर्यालोचनया मे मन उभयतो डोलायते इति भावः ॥

शत्रुघ्नान् युधि हस्तिघ्नो गिरीन्क्षिप्यन्नकृत्रिमान् ।
शिल्पिभिः पाणिघैः[६] क्रुद्धस्त्वया जय्योऽभ्युपायवान्[७] ॥ ११४ ॥

---

१ °मायान्त° D., T3, T4, Com.
२ °यातं रिपूणां त्वा T2, T3, T4, Com. reads रिपूणां त्वां.
३ पतिघ्नी T1, T3, N., C., B., E2, E3.
४ वालिनि श्रियम् T3.
५ श्रियम् T., G., Com.
६ पाणिघ्नैः Com.
७ जय्यो ह्युपायवान् Com. जय्योऽभ्युपायवान् noticed by c.

११४. पुनःश्लोकत्रयेण वालिबलमेव प्रकटयन्नाह शत्रुघ्नानिति ॥ युधि हस्तिनो हन्तुं शक्तो हस्तिघ्नः ॥ "शक्तौ हस्तिकपाटयोः" इति टक् ॥ कुत्वोपधालोपौ । शत्रून् घ्नन्तीति शत्रुघ्नान् ॥ "अमनुष्यकर्तृके च" इति टकि शेषं पूर्ववत् । अकृत्रिमानमानुषनिर्मितान् गिरीन् पाणीन्घ्नन्तीति पाणिघ्नैः पाणिवादकैः शिल्पिभिस्तद्विदैः सह । उत्साहार्थं पाणिवाद्यं कुर्वद्भिः सहेत्यर्थः । 'वृद्धो यूना' इतिवत् सहार्थे तृतीया ॥ "पाणिघताडघौ शिल्पिनि" इति निपातनात् टकि टिलोपकुत्वे । क्षिप्यन् क्षिपन् । क्षिपेर्दैवादिकात् लटः शत्रादेशः । उपायवान् बहूपायसंपन्नः । भूम्नि मतुप् । क्रुद्धो वाली त्वया जय्यो हि जेतुं शक्य इति काकुः ॥ "क्षय्यजय्यौ शक्यार्थे" इति निपातनात्साधुः ॥

आढ्यङ्करणविक्रान्तो महिषस्य सुरद्विषः ।
प्रियङ्करणमिन्द्रस्य दुष्करं कृतवान्वधम् ॥ ११५ ॥

११५. आढ्यङ्करणेति ॥ किं च अनाढ्य आढ्यः क्रियतेऽनेनेत्याढ्यङ्करणमाख्यातिकरं विक्रान्तं विक्रमो यस्य स वाली इन्द्रस्य अप्रियं प्रियं क्रियतेऽनेनेति प्रियङ्करणम् ॥ "आढ्यसुभग—" इत्यादिनोभयत्र ख्युन्प्रत्ययः ॥ दुष्करमशक्यं महिषस्य महिषरूपस्य सुरद्विषोऽसुरस्य दुन्दुभिनामकस्य वधं कृतवान् ॥

प्रियम्भावुकतां यातस्तं क्षिपन् योजनं मृतम् ।
स्वर्गे प्रियम्भविष्णुश्च कृत्स्नं शक्तोऽप्यबाधयन् ॥ ११६ ॥

११६. प्रियम्भावुकतामिति ॥ किं च मृतं तं महिषं योजनं योजनदूरं क्षिपन् किरन् अप्रियः प्रियो भवन् प्रियम्भावुकः तस्य भावस्तत्तां यातः । किं च शक्तोऽपि कृत्स्नमबाधयन् किञ्चिदप्यपीडयन् । बाधेश्चौरादिकाल्लटः शत्रादेशः । स्वर्गे अप्रियः प्रियो भवन् प्रियम्भविष्णुः प्रियो जात इत्यर्थः ॥ "आढ्यसुभग—" इत्यनुवृत्तौ "कर्त्तरि भुवः खिष्णुच् खुकञौ" इति भवतेः कर्त्रर्थे यथायोगमुभौ प्रत्ययौ ॥

जिज्ञासोः शक्तिमस्त्राणां रामो न्यूनधियः कपेः।
अभिनत्प्रतिपत्त्यर्थं सप्त व्योमस्पृशस्तरून् ॥ ११७ ॥

११७. जिज्ञासोरिति ॥ अथ रामोऽस्त्राणां शक्तिं जिज्ञासोर्ज्ञातुमिच्छोरत एव न्यूनधियोऽल्पबुद्धेः। स्थाने अविश्वासादिति भावः। कपेः सुग्रीवस्य प्रतिपत्त्यर्थं प्रत्ययार्थं व्योमस्पृशोऽभ्रङ्कषान् सप्त तरूनभिनद्व्यदारयत्। भिदेर्लङ्। 'बिभेद च पुनः सालान्सप्तैकेन महेषुणा' इति दर्शनात् ॥

ततो वालिपशौ वध्ये रामर्त्विग्जितसाध्वसः।
अभ्यर्थभून्निलयं[1] भ्रातुः सुग्रीवो निनदन् दधृक् ॥ ११८ ॥

११८. तत इति ॥ ततस्तरुभेदनानन्तरं वालिन्येव पशौ वध्ये आलभ्ये सति। राम एव ऋतुमृतावृतुप्रयुक्तो वा यजतीति ऋत्विग्याजको यस्य स रामर्त्विक्। अत एव जितसाध्वसो निर्भीकः धृष्णोतीति दधृक् धृष्टश्च ॥ "ऋत्विग्दधृक्—" इत्यादिना द्वावपि क्विन्प्रत्ययान्तौ ॥ निपातनादेव दधृगिति द्विर्वचनम् ॥ "क्विन्प्रत्ययस्य कुः" इति कुत्वम् ॥ सुग्रीवो यजमान इति भावः। निनदन् सिंहनादं कुर्वन्। यजमानपाठश्च गम्यते। भ्रातुर्वालिनो निलयमालयमभ्ययादभियातः। पशुमानेतुमित्यर्थः। अभ्यभूदिति पाठेऽप्यभियानमेवाभिभवः ॥

गुहाया निरगाद्वाली सिंहो मृगमिव द्युवन्।
भ्रातरं युङ्भियः संख्ये[2] घोषेणापूरयन्दिशः ॥ ११९ ॥

११९. गुहाया इति ॥ संख्ये युद्धे भियो भयस्य युङ् योक्ता शत्रुभीषण इत्यर्थः। कर्मणि षष्ठी ॥ "ऋत्विक्—" इत्यादिना युजेः क्विन् ॥ "युजेरसमासे" इति नुमि संयोगान्तलोपः। कुत्वे नकारस्य ङकारः। वाली सिंहो मृगमिव भ्रातरं सुग्रीवं द्युवन्नभिगमिष्यन्। द्यु अभिगमने इति धातोर्वर्त्तमानसामीप्ये लटि शपो लुक्। लटः शतृवङादेशः।

---

१ अभ्ययाभि° T., G., Com. | २ भियो युङ् भ्रातरं T2, T3, T4.

घोषेण सिंहनादेन दिशः। "ऋत्विक्—" इत्यादिना क्विन्नन्तो निपातः॥ आपूरयन् गुहाया निरगान्निर्गतः॥

व्यायच्छमानयोर्मूढो[1] भेदे सदृशयोस्तयोः।
बाणमुद्यतमायंसीदिक्ष्वाकुकुलनन्दनः॥ १२०॥

१२०. व्यायच्छमानयोरिति॥ इक्ष्वाकुकुलनन्दनो रामः व्यायच्छमानयोर्व्याप्रियमाणयोः युध्यमानयोरित्यर्थः॥ "आङो यमहनः" इति यमेराङ्पूर्वादकर्मकत्वादात्मनेपदम्। सदृशयोः समानयोः समरूपयोः॥ "त्यदादिषु—" इत्यत्र समानान्ययोरुपसंख्यानात्समानोपपदाद्दृशेः कञ्प्रत्ययः॥ "दृग्दृशवतुषु" इति समानस्य सभावः। तयोर्वालिसुग्रीवयोर्भेदे मूढोऽयमसाविति विवेक्तुमशक्तः सन्नित्यर्थः। उद्यतं तूणादुद्धृतं बाणमायंसीत् उपसंहृतवान्। यमेराङ्पूर्वाल्लुङि सगिडागमौ॥ "नेटि" इति प्रतिषेधान्न हलन्तलक्षणा वृद्धिः। अकर्त्रभिप्रायत्वात् "समुदाङ्भ्यो यमोऽग्रन्थे" इति नात्मनेपदम्। सकर्मकत्वात् "आङो यमहनः" इति न तङ्॥

ऋश्यमूकमगात्[2] क्लान्तः कपिर्मृगसदृग्[3] द्रुतम्।
किष्किन्धाद्रिसदा[4]ऽत्यर्थं निष्पिष्टः कोष्णमुच्छ्वसन्॥ १२१॥

१२१. ऋश्यमूकमिति॥ कपिः सुग्रीवः किं किं दधातीति किष्किन्धा गुहा॥ "आतोऽनुपसर्गे कः"॥ स्त्रीत्वाट्टाप्। पारस्करादित्वात्सुडादिनिपातः। तस्या अद्रिः तत्र सीदति इति तत्सदा तद्वासिना वालिना॥ "सत्सूद्विष—" इति क्विप्॥ अत्यर्थं निष्पिष्टो निष्पीडितः अत एव क्लान्तः श्रान्तः अत एव कोष्णमीषदुष्णं यथा तथा॥ "कवं चोष्णे" इति कोः कादेशः॥ उच्छ्वसन् मृगेण सदृक् सदृशं यथा तथा। पूर्वोपसंख्यानादेव समानोपपदाद्दृशेः क्विन्। शेषं सर्वं पूर्ववत्। द्रुतं क्षिप्रमृश्यमूकमगात्॥

१ वावद्यमानयो॰ D. | ३ गतः D.
२ ऋश्यमूक॰ T., G., Com. | ४ ॰न्धाद्रि॰ C.

कृत्वा वालिद्रुहं रामो मालया सविशेषणम् ।
अङ्गदस्वं पुनर्हन्तुं कपिनाह्वाययद्रणे ॥ १२२ ॥

१२२. कृत्वेति ॥ अथ रामो वालिने द्रुह्यतीति वालिद्रुहं वालिविरोधिनं सुग्रीवम् ॥ "सत्सूद्विष—" इत्यादिना क्विप् ॥ मालया लतानिर्मितया सविशेषणं सचिह्नं कृत्वा । अङ्गदं सूत इत्यङ्गदसूः अङ्गदजनकः । तेनैव क्विप् । तमङ्गदस्वं वालिनम् ॥ "ओः सुपि" इति यणादेशः ॥ हन्तुं कपिना सुग्रीवेण पुनराह्वाययत् सस्पर्धमाह्वाययामास । ह्वयतेराङ्पूर्वाण्ण्यन्ताल्लुङि "शाच्छासाह्वा—" इत्यादिना युक् । अकर्त्रभिप्रायत्वात् "णिचश्च" इति नात्मनेपदम् ॥

तयोर्वानरसेनान्योः संप्रहारे तनुच्छिदम् ।
वालिनो दूरभाग्रामो बाणं प्राणादमसृजत् ॥ १२३ ॥

१२३. तयोरिति ॥ वानरसेनान्योर्वानरपरिवृढयोः । नयतेः "सत्—" आदिना क्विप् ॥ "एरनेकाचः—" इति यणादेशः ॥ तयोर्वालिसुग्रीवयोः संप्रहारे संयुगे सति । 'संप्रहाराभिसंपातकलिसंस्फोटसंयुगाः' इत्यमरः । रामो दूरभाग्दूरगत एव सन् ॥ "भजो ण्विः" ॥ वालिनस्तनुच्छिदं शरीरच्छेदिनम् । "सत्—" आदिनैव क्विप् । प्राणानत्तीति प्राणादं प्राणहारिणम् ॥ "अदोऽनन्ने" इति विट् ॥ बाणमत्यजत् मुमोच ॥

अथ बाणेन जविना तेन विद्धो महाकपिः ।
क्रव्यात्रासकरं नादं कुर्वन्कामदुघोऽर्थिनाम् ॥ १२४ ॥

अग्रेगावा च शूराणामभिभूः सर्वविद्विषाम् ।
शंस्थरूपः स्थिरप्रज्ञः पपात सहसा भुवि ॥ १२५ ॥

१२४–१२५. अथ युग्मेन वालिपातमाह अथ बाणेनेति अग्रेगावेति च ॥ अथ बाणमोक्षानन्तरमर्थिनां कामान् दोग्धीति कामदुघः ॥ "दुहः कब्घश्च"

---

Verses 124 and 125 are found only in T₂, T₃, T₄, and T., G., and Com.

१ कुर्वंन्नादं T₂, T₃, T₄.

इति कपि घकारश्चान्तादेशः । शूराणामग्रे गच्छतीत्यग्रेगावा अग्रगामी ॥ "अन्येभ्योऽपि दृश्यन्ते" इति गमेर्वनिप् ॥ "विड्वनोरनुनासिकस्याऽऽत्" इत्यात्वम् ॥ सर्वविद्विषाम् । कर्मणि षष्ठी । अभिभवतीत्यभिभूरभिभविता ॥ "क्विप् च" इति भवतेः क्विप् ॥ शमि सुखे तिष्ठतीति शंस्थः सुखैकवृत्तिः ॥ "स्थः क च" इति तिष्ठतेः कप्रत्ययः । तद्रूपं स्वरूपं यस्य सः शंस्थरूपः सुखपरायण इत्यर्थः । स्थिरप्रज्ञः स महाकपिः वाली जविना वेगवता तेन बाणेन विद्धः सन् क्रव्यमदन्तीति क्रव्यादो मांसभक्षकाः गृध्रगोमायुप्रभृतयः ॥ "क्रव्ये च" इति विट्प्रत्ययः ॥ तेषां त्रासकं भयकरं यथा तथा नादं कुर्वन् उच्चैः क्रोशन् सहसा भुवि पपात ॥

वालिनं पतितं दृष्ट्वा वानरा रिपुघातिनम् ।
बान्धवक्रोशिनो[१] भेजुरनाथाः ककुभो दश ॥ १२६ ॥

१२६. वालिनमिति ॥ रिपून्हन्तीति रिपुघातिनम् ॥ "सुप्यजातौ—" इति ताच्छील्ये णिनिः । पतितं वालिनं दृष्ट्वा । वानरास्तदुपजीविनः कपयः बन्धव एव बान्धवाः पुत्रकलत्रादयः त इव क्रोशन्तीति बान्धवक्रोशिनः तद्वद्विलपन्तः ॥ "कर्त्तर्युपमाने" इति णिनिः ॥ अनाथाः सन्तो दश ककुभो दिशो भेजुरपलायन्तेत्यर्थः ।

धिग्दाशरथिमित्यूचुर्मुनयो वनवर्तिनः ।
उपेयुर्मधुपायिन्यः क्रोशन्त्यस्तं कपिस्त्रियः ॥ १२७ ॥

१२७. धिगिति ॥ वने वर्त्तन्ते शास्त्रतो नियमादिति वनवर्त्तिनः ॥ "व्रते" इति णिनिः ॥ मुनयः तत्रत्याः वानप्रस्थाः । दाशरथिं रामं धिगित्यूचुः । निरपराधवधात्करुणया निनिन्दुरित्यर्थः । मधु पिबन्त्यभीक्ष्णमिति मधुपायिन्यो नित्यभोगिन्यः दुःखलेशानभिज्ञा इत्यर्थः ॥ "बहुलमाभीक्ष्ण्ये" इत्याभीक्ष्ण्ये णिनिः ॥ कपिस्त्रियो वाल्यवरोधाङ्गनाः क्रोशन्त्यो विलपन्त्यस्तं वालिनमुपेयुः उपसेदुरित्यर्थः ॥

---

१ बान्धवाक्रोशिनो N., C., T., B., E2, E3. | बान्धवाः क्रोशिनो c.

रामपुच्चैरुपालब्ध शूरमानी कपिप्रभुः ।
व्रणवेदनया ग्लायन् साधुम्मन्यमसाधुवत् ॥ १२८ ॥

१२८. राममिति ॥ शूरमात्मानं मन्यत इति शूरमानी ॥ "आत्ममाने खश्च" इति चकारान्मन्यतेर्णिनिः ॥ कपिप्रभुः वाली व्रणवेदनया प्रहारव्यथया ग्लायन् क्षीणः सन् साधुमात्मानं मन्यत इति साधुम्मन्यम् । तेनैव खशि दिवादित्वाच्छ्यन् । राममसाधुना तुल्यमसाधुवत् ॥ "तेन तुल्यम्—" इति वतिः । उच्चैस्तारमुपालब्ध निःशङ्कमशपत् । लभेरनिटो लुङि "झलो झलि" इति सलोपे धत्वजश्त्वे ॥

मृषासि त्वं हविर्याजी राघव छद्मतापसः ।
अन्यव्यासक्तघातित्वाद्ब्रह्मघ्नां पापसम्मितः ॥ १२९ ॥

१२९. अत्राष्टाभिरुपालम्भमाचष्टे मृषेत्यादिभिः ॥ हे राघव त्वं छद्मतापसः कपटतापसः किं च मृषा मिथ्यैव हविषा इष्टवान् हविर्याजी दाम्भिकः इत्यर्थः ॥ "करणे यजः" इति भूते णिनिः ॥ किं चान्येन योध्रा व्यासक्तं हतवानन्यव्यासक्तघाती ॥ "कर्मणि हनः" इति भूते णिनिः ॥ तत्त्वात् ब्रह्माणं हतवतां ब्रह्मघ्नाम् ॥ "ब्रह्मभ्रूणवृत्रेषु क्विप्" ॥ पापेन संमितः सङ्गतः । न परेण समायुक्तमिति निषिद्धवधाचरणात् त्वं ब्रह्महत्यापापभागसीत्यर्थः ॥

पापकृत्सुकृतां मध्ये राज्ञः पुण्यकृतः सुतः ।
मामपापं दुराचार किं निहत्याभिधास्यसि ॥ १३० ॥

१३०. पापकृदिति ॥ हे राम दुराचार पुण्यकृतः पुण्यं कृतवतो राज्ञो दशरथस्य सुतस्तथापि पापकृत् पापं कृतवांस्त्वमपापमनपराधं मां निहत्य सुकृतां साधुकारिणां मध्ये ॥ "सुकर्मपापमन्त्रपुण्येषु कृञः" इति सर्वत्र भूते क्विप् ॥ किमभिधास्यसि । अकार्यकारिणः सभामध्ये वक्तुं जिह्वा कथं प्रवर्त्तेतेत्यर्थः ॥

---

१ विहत्या° E₂.

अग्निचित्सोमसुद्राजा रथचक्रचिदादिषु ।
अनलेष्विष्टवान् कस्मान्न त्वयापेक्षितः पिता ॥ १३१ ॥

१३१. अग्निचिदिति ॥ हे राम अग्निं चितवानग्निचित् अग्न्यर्थमिष्टकाचयनं कृतवानित्यर्थः ॥ "अग्नौ चेः" इति क्विप् ॥ सोमं सुतवान् सोमसुत् सोमयाजीत्यर्थः ॥ "सोमे सुञः" इति क्विप् ॥ रथचक्रमिव चीयत इति रथचक्रचित् रथचक्रविधोऽग्न्यर्थ इष्टकाचय इत्यर्थः ॥ "कर्मण्यग्न्याख्यायाम्" इति धातूपपदप्रत्ययसमुदायेनाग्न्याख्यायां रूढ्याग्न्याधारेष्टकाचयनविशेषाख्यायां चिनोतेः क्विप् ॥ स आदिर्येषां तेषु श्येनकङ्कचिदादिष्वनलेष्वनलाधारेष्टकचितावेदिष्विष्टवान् कृतयागः । यजेः क्तवतुप्रत्ययः । पिता ते जनको राजा दशरथः परमधार्मिकः कस्मात्त्वया नापेक्षितो न विचारितः । तादृशस्य पितुरयशस्करोऽसीत्यर्थः ॥

मांसविक्रयिणः कर्म व्याधस्यापि विगर्हितम् ।
मां घ्नता भवताकारि निःशङ्कं पापदृश्वना ॥ १३२ ॥

१३२. मांसेति ॥ पापं दृष्टवान् तेन पापदृश्वना निरन्तरपापचिन्तकेनेत्यर्थः ॥ "दृशेः क्वनिप्" ॥ अत एव मां निःशङ्कं घ्नता अनपराधवधं भीवर्जं मारयता भवता मांसं विक्रीतवान् मांसविक्रियानिकृष्टकर्मकारीत्यर्थः ॥ "कर्मणीनि विक्रियः" इति क्रीणातेः कुत्सायामिनिप्रत्ययः । तस्य व्याधस्य मृगवधाजीविनोऽपि विगर्हितं जुगुप्सितं कर्म अकारि कृतम् । करोतेः कर्मणि लुङि चिणि वृद्धिः ॥

बुद्धिपूर्वं ध्रुवन्न त्वां राजकृत्वा पिता खलम् ।
सहयुध्वानमन्येन योऽहिनो मामनागसम् ॥ १३३ ॥

---

१ अनले सदृवान् T2.
२ कस्मात्त्वयानापे° D., c., E3.
३ त्वयावेष्टितोऽनलः T3, T4,
४ °विक्रयिणस्तस्य T2, T4.
५ ध्रुवन् T., G., Com.
खलं न त्वां D.
६ त्वां D., E1, T., G., Com.
७ ध्रुवन् D.

१३३. बुद्धीति ॥ हे राम पिता दशरथस्त्वां खलं ध्रुवन् जानन् । ध्रु गताविति धातोस्तौदादिकाच्छतर्युवङादेशः । गत्यर्थत्वात् ज्ञानार्थत्वम् । बुद्धिपूर्वमेव राजकृत्वा राजानं कृतवान्नाभूत् राजानं न कृतवानित्यर्थः ॥ "राजनि युधि कृञः" इति कृञः क्वनिप् । ध्रुवमिति पाठे त्वां राजकृत्वेति योजनायां कृद्योगषष्ठ्यां त्वामिति द्वितीया न स्यात् । खलत्वे हेतुमाह । यस्त्वमन्येन योधान्तरेण सहयुध्वानं सह युद्धवन्तम् ॥ "सहे च" इति युधेः क्वनिप् । अत एवानागसं तवानपराधिनं मामहिनः हिंसितवान् । हिनस्तेर्लङि सिपि श्नमि नलोपः । हल्ङ्यादिलोपे "सिपि धातो रुर्वा" इति धातुसकारस्य रुत्वविसर्गौ ॥

पञ्च पञ्चनखा भक्ष्या ये प्रोक्ताः कृतजैर्द्विजैः ।
कौशल्याज शशादीनां तेषां नैकोऽप्यहं कपिः ॥ १३४ ॥

१३४. अथ मांसलोभान्मामवधीस्तदपि न योग्यमित्याह पञ्चेति ॥ कृते कृतयुगे जातैः कृतजैः ॥ "सप्तम्यां जनेर्डः" ॥ द्विर्जातैर्द्विजैर्महर्षिभिः ॥ "अन्येष्वपि दृश्यते" इति डः ॥ ये पञ्च पञ्चनखाः भक्ष्याः प्रोक्ताः । 'शशकः शल्यको गोधा खड्गी कूर्मश्च पञ्चमः' इति भक्ष्यत्वेनोक्ताः । हे कौसल्यायाः जात कौसल्याज राम ॥ "पञ्चम्यामजातौ" इति डः ॥ तेषां शशादीनां कपिरहमेकोऽन्यतमोऽपि न प्रत्युत निषिद्ध एवेत्यर्थः ॥

कथं दुष्ठुः[1] स्वयं धर्मे प्रजास्त्वं पालयिष्यसि ।
आत्मानुजस्य जिह्रेषि सौमित्रेस्त्वं कथं न वा ॥ १३५ ॥

१३५. कथमिति ॥ स्वयं धर्मे दुष्ठु तिष्ठतीति दुःस्थः अप्रतिष्ठितः ॥ "आतश्चोपसर्गे" इति कर्त्तरि कप्रत्ययः । त्वं प्रजाः जनान् ॥ 'प्रजा स्यात्सन्ततौ जने' इत्यमरः ॥ "उपसर्गे च संज्ञायाम्" इति जनेर्डः ॥ कथं पालयिष्यसि । स्वयमधार्मिकः स्वप्रतिबन्ध्यैवोच्छृङ्खलवृत्तीः प्रजाः कथं नियन्तुं शक्नुयादित्यर्थः । किं चात्मानमनुजातः आत्मानुजः ॥ "अनौ कर्मणि" इति डः ॥ तस्य सौमित्रेर्लक्ष्मणस्य

१ दुष्ठः c., E₂, E₃. दुःस्थः T. Com.

27

वा कथं न जिह्रेषि लक्ष्मणात्कथं न लज्जस इत्यर्थः । संबन्धसामान्ये षष्ठी ॥

मन्ये किञ्जमहं घ्नन्तं त्वामक्षत्रियजे रणे ।
लक्ष्मणाधिज दुर्वृत्तं[1] प्रयुक्तमनुजेन नः ॥ १३६ ॥

१३६. "अन्येष्वपि दृश्यते" इत्यस्योदाहरणान्याह मन्य इति ॥ तत्रापिशब्दस्य सर्वोपाधिव्यभिचारार्थत्वात् तथैव प्रयुङ्क्ते। अधिजातोऽधिजः अग्रज इत्यर्थः ॥ "उपसर्गे च संज्ञायाम्" इत्यस्य व्यभिचारः प्रजेतिवदसंज्ञत्वात् । हे लक्ष्मणाधिज नोऽस्माकमनुजातेनानुजेन सुग्रीवेण ॥ "अनौ कर्मणि" इत्युक्तं तस्य व्यभिचारः सोमविक्रयीत्यादिवत् कर्माश्रवणात्। प्रयुक्तं प्रेरितं दुर्वृत्तं दुराचारम्। तदेवाह। क्षत्रियाज्जातं क्षत्रियजम्॥ "पञ्चम्यामजातौ" इत्यस्य व्यभिचारः। क्षत्रियशब्दस्य जातिवाचित्वात् अक्षत्रियजे क्षत्रियजप्रतियोगिके रणे घ्नन्तमनपराधिनि मयि वानरे प्रच्छन्नप्रहारिणं त्वामहं किञ्जं कुतोऽपि जातं मन्ये न तु दशरथजमित्यर्थः॥ "सप्तम्यां जनेर्डः" इत्युक्तस्य सप्तमीव्यभिचारः॥

## अथानुपपदाधिकारः।

प्रत्यूचे वालिनं रामो नाकृतं कृतवानहम्।
यज्वभिः सुत्वभिः पूर्वैर्जरद्भिश्च कपीश्वर॥ १३७ ॥

१३७. प्रत्यूच इति ॥ रामो वालिनं प्रत्यूचे। किमिति । हे कपीश्वर पूर्वैः पुरातनैर्यज्वभिः विधिवदिष्टवद्भिः सुत्वभिः सोमं सुतवद्भिः ॥ "सुयजोर्ङ्वनिप्"॥ जरद्भिर्वृद्धैः। 'प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि' इत्यमरः ॥ "जीर्यतेरतृन्" ॥ अकृतमहं न कृतवान् अपि तु तत्कृतमेवाकार्षमित्यर्थः ॥ "निष्ठा" इति क्तक्तवतू ॥

ते हि जालैर्गले पाशैस्तिरश्चामुपसेदुषाम्।
ऊषुषां परदारैश्च सार्धं निधनमैषिषुः॥ १३८ ॥

---

१ दुर्वृत्तं D., c., E3, Com.

१३८. किं तैः कृतं तदाह ॥ ते हीति ॥ ते वृद्धाः मन्वादयः उपसेदुषामुपसन्नानामुपसद्योपद्रवकारिणामित्यर्थः । तिरश्चां भवादृशां परदारैः परस्त्रीभिः सार्धमूषुषां सहोषितवतां च भवादृशामेव ॥ "भाषायां सदवसश्रुवः" इत्युभयत्रापि क्वसुः ॥ यजादित्वाद्वसेः संप्रसारणम् । जालैर्वागुराभिर्गले कण्ठे पाशैर्बन्धविशेषैश्च निधनं वधमैषिषुः अमंसतेत्यर्थः । इषेर्लुङि च्लेरुसादेशः । वृद्धानामपि परोपद्रवकारिणस्तिर्यञ्चोऽपि दण्ड्या एवेत्यर्थः ॥

अहं तु शुश्रुवान् भ्रात्रा स्त्रियं भुक्तां कनीयसा ।
उपेयिवाननूचानैर्निन्दितस्त्वं लतामृग ॥ १३९ ॥

१३९. अस्तु मया किमपराद्धमत आह अहं त्विति ॥ हे लतामृग शाखामृग अहं तु कनीयसा भ्रात्रा भुक्तां स्त्रियं तत्कलत्रमित्यर्थः उपेयिवान् संजग्मिवानिति शुश्रुवानश्रौषम् ॥ "भाषायाम्—" इत्यादिना क्वसुः ॥ तस्मात्त्वमनूचानैर्वेदवृद्धैः निन्दितस्तस्मात्पारदारिकस्त्वमाततायित्वाद्वध्य एवेत्यर्थः । 'अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यः' इत्यमरः ॥ "उपेयिवाननाश्वाननूचानश्च" इतीण्वचिभ्यां क्वसुकानन्तौ निपातितौ ॥

अन्वनैषीत्ततो वाली त्रपावानिव राघवम् ।
न्यक्षिपच्चाङ्गदं यत्नात्काकुत्स्थे तनयं प्रियम् ॥ १४० ॥

१४०. भूतार्थे कृदन्तानुदाहृत्य सूत्रक्रमेण तिङन्तानुदाहरति ॥ अन्विति ॥ ततो रामवाक्यानन्तरं वाली त्रपावानिव किञ्चिल्लज्जितः सन्नित्यर्थः राघवमन्वनैषीत् भक्तोऽयं जनः क्षम्यतामित्यनुनीतवानित्यर्थः । नयतेः "लुङ्" इति भूते लुङि च्लेः सिचीट् ॥ प्रियं तनयमङ्गदं यत्नादभिनिवेशात्काकुत्स्थे रामे न्यक्षिपत् रक्ष्योऽयमिति हस्ते न्यस्तवानित्यर्थः । अनद्यतनभूते लङ् ॥

---

१ च E₃.

म्रियमाणः स सुग्रीवं मोचे सद्भावमागतः।
संभविष्याव एकस्यामभिजानासि मातरि ॥ १४१ ॥

१४१. म्रियमाण इति ॥ स वाली म्रियमाणः प्राणांस्त्यजन् सद्भावं साधुभावं सौजन्यमागतः सन् सुग्रीवमूचे किमिति। हे वत्स एकस्यां मातरि संभविष्यावः संभूतावित्यर्थः। अभिजानासि स्मरसि ॥ "अभिज्ञावचने लृट्" इत्यभिज्ञावचन उपपदे भूतानद्यतने लृट्। अभिजानासीत्येतदभिज्ञावचनम्। अभिज्ञा स्मृतिः ॥

अवसाव नगेन्द्रेषु यत्पास्यावो मधूनि च।
अभिजानीहि तत्सर्वं बन्धूनां समयो ह्ययम् ॥ १४२ ॥

१४२. अवसावेति ॥ वत्साभिजानासि यन्नगेन्द्रेष्ववसाव उषितवन्तौ। अत्र वासमात्रप्रत्यभिज्ञावचनमुपपदम्। तस्य यच्छब्दयोगात् "न यदि" इति लृण्निषेधाल्लङेव। अथ मधूनि च यत्पास्यावः। चकारो वानुकर्षार्थः तथा च नगेन्द्रेषु यद्वत्स्यावः तत्र मधूनि च पास्यावः तत्सर्वमभिजानासीति योज्यम् ॥ "विभाषा साकाङ्क्षे" इतिपक्षे यच्छब्दसहिते साकाङ्क्षे प्रत्यभिज्ञावचने उपपदे विकल्पाद्भते लृट्। एवं यदवसाव अपिबाव चेति लङि च द्रष्टव्यम्। केवलपक्षेऽपि यच्छब्दवर्जमेत एवोदाहरणे। आकाङ्क्षा चात्र प्रयोक्तुर्लक्ष्यलक्षणयोः संबन्धविवक्षा। वासेन पानं लक्ष्यते। किं च बन्धूनामयं समयो हि। आपदि बन्धुभिः स्थातव्यमित्यर्थः ॥

दैवं न विदधे नूनं युगपत्सुखमावयोः।
शश्वद्बभूव तदुःस्थं यतो नौ इति हाकरोत् ॥ १४३ ॥

१४३. न चेदं श्मशानवैराग्यमिति मन्तव्यं दैवस्य दुरतिक्रमत्वादित्याह दैवमिति ॥ नूनमवश्यं दैवमेवावयोः युगपत्सुखं सहोपभोगसुखं न विदधे ॥

---

१ अभिजानासि.
२ दुस्थं Com. दुःखं noticed by c.
३ नाविति.

"परोक्षे लिट्" ॥ तथाहि तद्दैवं शश्वत् सदा दुस्थं प्रतिकूलं बभूव अभवत् ॥ "हशश्वतोर्लङ् च" इति चकाराच्छश्वच्छब्द उपपदे भूतानद्यतनपरोक्षे लिट् ॥ यतो यस्मान्नावावामिति ह्यकरोत् एवंप्रयुक्तौ चकार ह । तेनैव हशब्द उपपदे तस्मिन्नेव अर्थे लङ् ॥

दद‍ौ स दयितां भ्रात्रे मालां चाग्र्यां हिरण्मयीम् ।
राज्यं संदिश्य भोगांश्च[1] ममार व्रणपीडितः ॥ १४४ ॥

१४४. ददाविति ॥ स वाली भ्रात्रे सुग्रीवाय दयितां तत्कान्तां तथाग्र्यां श्रेष्ठां हिरण्मयीं मालां हेमाब्जमालां च ददौ । "परोक्षे लिट्" । राज्यं भृत्यांश्च संदिश्य साधु पालयेत्युपदिश्य व्रणपीडितः प्रहारव्यथितो ममार ॥

तस्यै[2] निर्वर्त्य कर्त्तव्यं सुग्रीवो राघवाज्ञया ।
किष्किन्धाद्रिगुहां गन्तुं मनः प्रणिदधे द्रुतम् ॥ १४५ ॥

१४५. अस्येति ॥ सुग्रीवोऽस्य वालिनः कर्त्तव्यमौर्ध्वदैहिकं निर्वर्त्य राघवाज्ञया वर्षापगमे आगच्छ इति राघवाज्ञया रामादेशाद्द्रुतं किष्किन्धाख्यामद्रिगुहां गन्तुं मनः प्रणिदधे गन्तुमैच्छदित्यर्थः ॥

नामग्राहं कपिभिरशनैः स्तूयमानः समन्ता-
दन्वग्भावं रघुवृषभयोर्वानरेन्द्रो विराजन् ।
अभ्यर्णेऽम्भःपतनसमये पैर्णलीभूतसानुं[3]
किष्किन्धाद्रिं न्यविशत मधुक्षीवगुंञ्जाद्द्रिरेफम्[4] ॥ १४६ ॥

१४६. नामेति ॥ वानरेन्द्रः सुग्रीवः समन्तात् कपिभिः हनूमदादिभिः नामग्राहं नाम गृहीत्वा ॥ "नाम्न्यादिशिग्रहोः" इति णमुल्प्रत्ययः ॥ अशनैरमन्दं स्तूयमानः प्रशस्यमानः । स्तौतेः कर्मणि लटि "लक्षणहेत्वोः क्रियायाः" इति शानच् ॥ रघुवृषभयो रामलक्ष्मणयोरन्वग्भाव-

१ भृत्यांश्च D., T., G., Com.
२ अस्य Com., तस्यापि कृत्वा D.
३ वर्णली° T., G., Com.
पल्वली° noticed by c.
४ कूजद्द्वि° T., G., Com.

मन्वग्भूत्वा अनुकूलीभूयेत्यर्थः ॥ "अन्वच्यानुलोम्ये" इति भवतेः णमुल्प्रत्ययः ॥ अत एव विराजन् दीप्यमानः । लक्षणे शत्रादेशः । अम्भःपतनसमये वर्षाकाले अभ्यर्णे आसन्ने सति वर्णलाः वर्णवन्तः ॥ "सिध्मादिभ्यश्च" इति मत्वर्थे लच् ॥ ततश्चित्रः । वर्णलीभूताः सानवो यस्य तं मधुक्षीबाः मकरन्दमत्ताः कूजन्तो गुञ्जन्तः द्विरेफाः यस्य तं किष्किन्धाद्रिं तदाश्रयमद्रिं न्यविशत प्राविशत् प्रविष्टः । निपूर्वाद्विशेर्लङि "नेर्विशः" इति तङ् । मन्दाक्रान्ता वृत्तमेतत् ॥

इति भट्टिकाव्येऽधिकारकाण्डे वालिवधो नाम
षष्ठः सर्गः ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरि-
विरचिते भट्टिकाव्यव्याख्याने सर्वपथीनाख्याने षष्ठः सर्गः ॥

---

॥ श्रीः ॥

## अथ सप्तमः सर्गः ।

ततः कर्ता वनाकम्पं ववौ वर्षाप्रभञ्जनः ।
नभः पूरयितारश्च समुन्नेमुः पयोधराः ॥ १ ॥

१. अथ "आक्केस्तच्छील—" इत्युक्तताच्छीलिकादिप्रत्ययाधिकारः । तत इति ॥ ततः सुग्रीवप्रस्थानानन्तरं वनानामाकम्पमीषत्कम्पं कर्ता तत्साधुकारी । तृन् ॥ "आक्केः—" इत्यादिना तृन् प्रत्ययः ॥ "न लोक—" इत्यादिना षष्ठीप्रतिषेधः ॥ वर्षाप्रभञ्जनः प्रावृण्मारुतो ववौ वाति स्म । वा गतिगन्धनयोः । लिट् । तथा नभोऽन्तरिक्षं पूरयितारस्तद्व्यापिन इत्यर्थः । पूर्ववत्प्रक्रियार्थौ । पयोधरा मेघास्समुन्नेमुरुद्बभूवुः । विरहिदुःसहाः प्रावृड्धर्माः प्रवृत्ता इत्यर्थः ॥

तर्पणं प्रजनिष्णूनां शस्यानाममलं पयः ।
रोचिष्णवः सविस्फूर्जा मुमुचुर्भिन्नवद्घनाः ॥ २ ॥

२. तर्पणमिति ॥ रोचिष्णवो दीप्ताः सविस्फूर्जाः सनिर्घोषा गर्जन्तो घनाः मेघाः भिन्नैर्विदीर्णैः तुल्यं भिन्नवत् ॥ "तेन तुल्यम्—" इत्यादिना वतिप्रत्ययः ॥ प्रजनिष्णूनां प्रादुर्भावुकानां सस्यानाम् । कृद्योगात्कर्मणि षष्ठी । तर्पणं तृप्तिकरणम् । करणे ल्युट् । अमलं पयो जलं मुमुचुर्ववृषुरित्यर्थः । सर्वत्र "अलंकृञ्—" इत्यादिना इष्णुच् प्रत्ययः ॥

निराकरिष्णवो भानुं दिवं वर्त्तिष्णवोऽभितः ।
अलङ्करिष्णवो भान्तस्तडित्वन्तश्चरिष्णवः ॥ ३ ॥

३. घनानेव विशिनष्टि । निरिति । भानुं निराकरिष्णवस्तिरस्कर्तारः ॥ "न लोक—" इत्यादिना षष्ठीप्रतिषेधः ॥ दिवमभितः समन्ताद्वर्त्तिष्णवः स्थायुकाः ॥ "अभितःपरितः—" इत्यादिना द्वितीया ॥ तडित्वन्तो

---

१ वर्षप्रभञ्जनः T₂.
२ सस्याना° B., E₂, T., G., Com.
३ अलङ्करिष्णुवद्भान्त° T., G., Com.

विद्युत्वन्तः॥ "झयः" इति मतोर्वत्वम्॥ तद्वियोगादेवालङ्करिष्णुवत् आत्मानं दिशो वा अलंकर्त्तार इव भान्तः दीप्यमानाः। भातेः शत्रन्तः। चरिष्णवो भ्रमणशीलाः। सर्वत्र पूर्ववदिष्णुच्॥

तान्विलोक्यासहिष्णुः सन् विललापोन्मदिष्णुवत्।
वसन् माल्यवति ग्लास्नू रामो जिष्णुरधृष्णुवत्॥ ४॥

४. तानिति॥ माल्यवति पर्वते वसन् रामः तान् घनान् विलोक्यासहिष्णुवदुन्मादशीलवत्। उभयत्रापि पूर्ववदिष्णुच्। किं च जिष्णुर्जयशीलोऽपि ग्लास्नुः ग्लानिं गतः। "ग्लाजिस्थश्च ग्स्नुः" इति ग्स्नुः॥ अधृष्णुवदधीरवत्॥ "त्रसिगृधिधृषिक्षिपेः क्नुः" इति क्नुः॥ विललाप परिदेवितवान्॥

भ्रमी कदम्बसंभिन्नः पवनः शमिनामपि।
क्लमित्वं कुरुतेऽत्यर्थं मेघशीकरशीतलः॥ ५॥

५. विलापप्रकारमेव प्रपञ्चेनाह भ्रमीति॥ भ्रमी भ्रमणशीलः न तु धावतीति मान्द्योक्तिः। कदम्बसंभिन्नः सुरभिरित्यर्थः। मेघशीकरशीतलः पवनः शमिनां शान्तिशीलानां विरक्तानामपीत्यर्थः। अत्यर्थं क्लमित्वं क्लमशीलत्वं कुरुते। किमुत विरहिणामित्यर्थः॥ "शमित्यष्टाभ्यः—" इत्यादिना भ्रमिशमिक्लमिभ्यो घिनुण्प्रत्ययः॥ "नोदात्तोपदेशस्य—" इत्यादिना निषेधान्नोपधावृद्धिः॥

संज्वारिणेव मनसा ध्वान्तमायासिना मया।
द्रोहि खद्योतसंपर्कि नयनामोषि दुःसहम्॥ ६॥

६. अथ श्लोकपञ्चकेन "संपृच—" आदिसूत्रोक्तघिनुणन्तानुदाहरति। संज्वारिणेति॥ संज्वारिणा संज्वरशीलेन ज्वररोगिणेत्यर्थः। मया कर्त्रा आयासिना यातायातप्रयासशीलेन मनसा करणेन। द्रुह्यतीति द्रोही जिघांसुः खद्योतैर्ज्योतिकीटैः। 'खद्योतो ज्योतिरिङ्गणः' इत्यमरः। संपर्कि संसर्गि। नयनयोरामोषि संहारि ध्वान्तं मेघान्धकारं दुःसहमसह्यम्॥

---

१ स विललापो° D.

कुर्वन्ति परिसारिण्यो विद्युतः परिदेविनम् ।
अभ्याघातिभिरामिश्राश्चातकैः परिराटिभिः ॥ ७ ॥

७. कुर्वन्तीति ॥ परिसारिण्यः परिनृत्वर्यः अभ्याघातिभिरभिघातकैः परिराटिभिः परिक्रन्दनशीलैः । रट शब्दे । चातकैस्तोककैः । 'अथ सारङ्गस्तोककश्चातकः समाः' इत्यमरः । आमिश्राः मिलिताः विद्युतः परिदेविनं विलापिनम् । देविरियं भौवादिकः । कुर्वन्ति मामिति शेषः । 'विलापः परिदेवनम्' इत्यमरः ॥

संसर्गी परिदाहीव शीतोऽप्याभाति शीकरः ।
सोढुमाक्रीडिनोऽशक्याः शिखिनः परिवादिनः ॥ ८ ॥

८. संसर्गीति ॥ संसर्गी संसर्जनशीलः शीकरो वर्षाम्बुकणः शीतोऽपि परिदाही परिदग्धेवाभाति तथा भासते । किं चाक्रीडिनः आक्रीडनशीलाः नर्त्तितारः परिवादिनः परिवादनशीलाः कूजन्त इत्यर्थः । शिखिनः शिखण्डिनः सोढुमशक्याः । सर्वदा सर्वेऽपि मां मारयिष्यन्तीत्यर्थः ॥

एता दैवानुरोधिन्यो द्वेषिण्य इव रागिणम् ।
पीडयन्ति जनं धाराः पतन्त्योऽनपचारिणम् ॥ ९ ॥

९. एता इति ॥ दैवस्यानुरोधिन्योऽनुवर्त्तनशीलाः तद्वत्प्रतिकूलवर्त्तिन्य इत्यर्थः । पतन्त्य एता धारा वर्षधाराः द्वेषिण्यो द्वेषणशीलाः वैरिण्य इव अनपचारिणमतच्छीलमनपराधिनमित्यर्थः रागिणं रागशीलजनं कामिजनम् । संपृचादिसूत्रे रजेति निपातनादेव रञ्जेरनुनासिकलोपः । पीडयन्ति बाधन्ते ॥

कुर्याद्योगिनमप्येष स्फूर्जावान् परिमोहिणम् ।
त्यागिनं सुखदुःखस्य परिक्षेप्यम्भसामृतुः ॥ १० ॥

---

१ अभिघातिभि° D.
अभ्रुभ्याघातिभिर्मिश्राः $T_2$.
२ परिदाही च भाति शीतोऽपि शीकरः D.
३ °प्यायाति B.
४ ऽनपकारिणम् C., N., c. c. notices °ऽनपचारिणम् also.
५ परिमोहिनम् C., N., $T_1$, $T_2$, $T_3$, $E_3$.

१०. कुर्यादिति ॥ स्फूर्जावान् गर्जावान् । भिदाद्यङन्तान्मतुप् । पयोऽम्भसां परिक्षेपी तच्छीलो मोक्ता ऋतुर्वर्षर्तुः सुखदुःखस्य सुखदुःखयोः ॥ "विप्रतिषिद्धं चानधिकरणवाचि" इति विकल्पादेकवद्भावः । त्यागिनं त्यागशीलं निःस्पृहमित्यर्थः । योगी योगशीलः तमपि परिमोहिणं तच्छीलं कुर्यात् किमुतान्यमितिभावः । परिमोहिणमित्यत्र "कृत्यचः" इतीनि नकारस्य णत्वम् । 'अनमानानीयरनीन्निष्ठादेशाः प्रयोजनम्' इति वचनात् ॥

विकत्थी याचते प्रत्तमविश्रम्भी[1] मुहुर्जलम्[2] ।
पर्जन्यश्चातकः पक्षी निकृन्तन्निव मानसम् ॥ ११ ॥

११. विकत्थीति ॥ विकत्थी विकत्थनशीलः पर्जन्यादन्यं न याचत इत्यात्मश्लाघाशील इत्यर्थः । अत एव मानसं निकृन्तन्निव छिन्दन्निव तथोद्वेगकारीत्यर्थः । चातकः पर्जन्यं पर्णे पत्रे प्रत्तं दत्तं न तु भूमिपतितं तस्य चातकानां विषप्रायत्वादिति भावः । जलं मुहुर्विस्रम्भी न भवतीत्यविस्रम्भी मानित्वात्सङ्कुचन्नेव याचते । "वौ कषलसकत्थस्रम्भः" इत्युभयत्रापि घिनुण्प्रत्ययः ॥

प्रलापिनो भविष्यन्ति कदा न्वेते[4]ऽपलाषिणः ।
प्रमाथिनो वियुक्तानां हिंसकाः पापदर्दुराः ॥ १२ ॥

१२. प्रलापिन इति ॥ प्रलापिनः प्रलपनशीलाः अनर्थाराविण इत्यर्थः । प्रमाथिनः प्रमथनशीलाः कर्णकठोरत्वात्प्राणिमात्रपीडका इत्यर्थः । उभयत्र "प्रे लपसृद्रुमथवदवसः" इति घिनुण् । वियुक्तानां तु हिंसकाः घातुकाः ॥ "निन्दहिंस—" इत्यादिना वुञ्प्रत्ययः ॥ एते पापदर्दुराः दुष्टभेकाः । 'दर्दुरस्तोयदे भेके' इति विश्वः ॥ कदा नु अपलाषिणोऽपलषणशीला वृथाभाषिणो भग्नकामाः भविष्यन्ति । लष कान्तौ ॥ "अपे च लषः" इति घिनुण्प्रत्ययः ॥

---

१ °मविस्रम्भी E₃, T., G., Com.
२ पुनर्जलम् E₂, E₃.
३ पर्णे T., G., Com. °तको ह्योनि B., D., E₃.
४ ह्येते E₃.
५ भविष्यन्ति T₄.

निन्दको रजनिम्मन्यं दिवसं क्लेशको निशाम् ।
प्रावृष्यनैषीत्काकुत्स्थः कथंचित्परिदेवकः ॥ १३ ॥

१३. निन्दक इति ॥ काकुत्स्थो रामः प्रावृषि वर्षर्त्तौ रजनिमात्मानं मन्यते मेघान्धकारादिति रजनिम्मन्यम् ॥ "आत्ममाने खश्च" इति खशि मुमागमः ॥ दिवसं तथा निशां च निन्दकः धिगिमौ मारकाविति निन्दिता सन् । क्लेशकः ताच्छील्येन क्लिश्यन् ॥ "निन्दहिंसक्लिशखाद—" इत्यादिना वुञ्प्रत्ययः ॥ परिदेवको विलपिता च सन् ॥ "देविक्रुशोश्चोपसर्गे" इति देवतेर्वुञ् ॥ कथंचिदनैषीत् अतिदुःखेन वार्षिकदिवसान्नीतवानित्यर्थः ॥

अथोपशरदेऽपश्यत् क्रौञ्चानां चेष्टनैः कुलैः ।
उत्कण्ठावर्धनैः शुभ्रं रवणैरम्बरं ततम् ॥ १४ ॥

१४. अथेति ॥ अथ वर्षापनयनानन्तरं रामः उपशरदे शरत्समीपे शरदारम्भ इत्यर्थः । समीपार्थेऽव्ययीभावः । "अव्ययीभावे शरत्प्रभृतिभ्यः" इति समासान्तः ॥ "तृतीयासप्तम्योर्बहुलम्" इति विकल्पादमभावः ॥ चेष्टनैश्चलनैः रवणैः शब्दनैः । 'रवणः शब्दनो नान्दी' इत्यमरः । क्रमात् "चलनशब्दार्थादकर्मकाद्युच्" इति युच्प्रत्ययः । उत्कण्ठाया औत्सुक्यस्य वर्धनैरुद्दीपकैः ॥ "अनुदात्तेतश्च हलादेः" इति ताच्छील्ये कर्त्तरि युच् ॥ क्रौञ्चानां कुलैः सङ्घैः ततं व्याप्तं शुभ्रं मेघापगमादमलमम्बरमपश्यत् । तदा शरदागमनमज्ञासीदित्यर्थः ॥

विलोक्य द्योतनं चन्द्रं लक्ष्मणं शोचनोऽवदत् ।
पश्य दन्द्रमणान् हंसानरविन्दसमुत्सुकान् ॥ १५ ॥

१५. विलोक्येति ॥ द्योतनं साधु द्योतमानम् ॥ "अनुदात्तेत—" इत्यादिनैव युच्प्रत्ययः ॥ चन्द्रं विलोक्य शोचनः शोकशीलः सन् । शोचनादयो गर्धनान्ताः "जुचङ्क्रम्य—" इत्यादिना युजन्ताः ।

१ रावणै° $T_3$.

लक्ष्मणमवदत् । दन्द्रम्यन्त इति दन्द्रमणान् कुटिलगमनशीलान् । द्रमु पादविक्षेपे इत्यस्मात् "नित्यं कौटिल्ये गतौ" इति यङि "नुगतोऽनुनासिकान्तस्य" इति नुक् अल्लोपयलोपौ ॥ अरविन्देषु समुत्सुकान् कौतुकिनः ॥ "प्रसितोत्सुकाभ्यां तृतीया च" इति सप्तम्याः "सप्तमी" इति योगविभागात्समासः । हंसान् पश्य । शरदागमं पश्येत्यर्थः ॥

कपिश्चङ्क्रमणोऽद्यापि नासौ भवति गर्धनः ।
कुर्वन्ति[1] कोपनं[2] तारा मण्डना[3] गगनस्य[4] माम् ॥ १६ ॥

१६. कपिरिति ॥ असौ कपिः सुग्रीवः गर्धनो विषयगृध्नुः सन् अद्यापि शरदागमेऽपि चङ्क्रमणः क्रमणप्रवणो न भवति । अद्यापि न यातीत्यर्थः । दन्द्रमणवद्रूपनयः । गगनस्य मण्डयन्तीति मण्डनाः भूषणास्तारास्तारका मां क्रुध्यतीति क्रोधनं कोपनं कुर्वते ॥ "क्रुधमण्डार्थेभ्यश्च" इत्युभयत्र ताच्छील्ये कर्त्तरि युच् ॥

नावैत्याप्यायितारं किं कमलानि रविं कपिः[5] ।
दीपितारं दिनारम्भे निरस्तध्वान्तसञ्चयम्[6] ॥ १७ ॥

१७. नेति ॥ कपिः सुग्रीवः कमलान्याप्यायितारं साधु आप्याययन्तम् ॥ "न यः" इति यकारान्ताद्युच्प्रतिषेधे तृन् ॥ "न लोक—" इत्यादिना षष्ठीप्रतिषेधात् द्वितीया ॥ किं च दिनारम्भे दीपितारं दीप्तम् ॥ "सूददीपदीक्षश्च" इति युच्प्रतिषेधात् तृन् ॥ दीप्तत्वादेव विरुद्धध्वान्तसंचयं निरस्ततमस्काण्डं रविं नावैति नावगच्छति किम् । अहो प्रमत्त इति भावः ॥

अतीते वर्षुके काले प्रमत्तः स्थायुको गृहे ।
गामुको ध्रुवमध्वानं सुग्रीवो वालिना गतम् ॥ १८ ॥

---

१ कुर्वते Com.
२ क्रोधनं T. G. Com.
३ तारा मण्डनं c., E2.
४ गगणस्य c.
५ दिशः T2, T4.
६ निरुद्ध° T3, T4, D., E2.
विरुद्ध T., G., Com.

१८. अतीत इति॥ वर्षुके वर्षणशीले काले वर्षर्त्तावतीते प्रमत्तो मदान्धः सन् गृह एव स्थायुकः स्थितिशीलः सुग्रीवो वालिना गतं क्रान्तमध्वानं गामुको गन्ता ध्रुवम्। अन्यथा कथमद्यापि नागच्छतीति भावः। सर्वत्र "लषपत—" इत्यादिना उकञ्प्रत्ययः॥ "न लोक—" इत्यादिना षष्ठीप्रतिषेधाद्वितीया॥

जल्पाकीभिः सहासीनः स्त्रीभिः प्रजविना त्वया।
गत्वा लक्ष्मण वक्तव्यो जयिना निष्ठुरं वचः॥ १९॥

१९. जल्पाकीभिरिति॥ हे लक्ष्मण प्रजविनातिजविना॥ "प्रजोरिनिः" इति जवतेरिनिप्रत्ययः॥ जयिना जयशीलेन॥ "जिदृक्षि—" इत्यादिना जयतेरिनिप्रत्ययः॥ त्वया गत्वा जल्पाकीभिः वाचालाभिः॥ "जल्पभिक्ष—" इत्यादिना षाकन्प्रत्ययः॥ "षिद्गौरादिभ्यश्च" इति ङीष्॥ स्त्रीभिः सहासीनः स्त्रीमध्यगत एव सुग्रीवो निष्ठुरं वचो वक्तव्यः। अन्यथा लज्जानुदयादिति भावः। 'अप्रधाने दुहादीनाम्' इति वचनादप्रधाने कर्मणि तव्यप्रत्ययः॥

शैले[1] विश्रयिणं क्षिप्रमनादरिणमभ्यमी।
न्याय्यं परिभवी ब्रूहि पापमव्यथिनं कपिम्॥ २०॥

२०. शैल इति॥ शैले किष्किन्धाद्रौ विश्रयिणमाश्रयणशीलमनादरिणमगणनाशीलमव्यथिनमभीरुमचलं वा अत एव पापमनाचारिणं कपिं क्षिप्रमभ्यमी अभिगन्ता। अम गत्यादौ। परिभवी परिभावुकः सन् न्याय्यं न्यायादनपेतं ब्रूहि सर्वत्र "जिदृक्षि—" इत्यादिना इनिप्रत्ययः॥

स्पृहयालुं कपिं स्त्रीभ्यो निद्रालुमदयालुवत्।
श्रद्धालुं भ्रामरं धारुं सद्रुमद्रौ वद द्रुतम्॥ २१॥

२१. स्पृहयालुमिति॥ स्त्रीभ्यः स्पृहयालुं स्त्रीकामुकम्॥ "स्पृहेरीप्सितः" इति संप्रदानत्वम्॥ "स्पृहिगृहि—" इत्यादिना सर्वत्रा-

---

[1] शैलविश्रयिणं T2.

लुच् प्रत्ययः ॥ निद्रालुं स्त्रीभिः सह शयालुमनन्तरकर्त्तव्येष्वजागरूकं वा । श्रद्धालुं विषयाभिलाषिणम् । 'श्रद्धास्तिक्याभिलाषयोः' इति यादवः । भ्रमरैः कृतं भ्रामरं क्षौद्रम् ॥ "क्षुद्राभ्रमर—" इत्यादिना संज्ञायामञ् ॥ "न लोक—" इत्यादिना षष्ठीप्रतिषेधः ॥ धयतीति धारुं धातारं पातारमित्यर्थः । अद्रौ सीदतीति सद्रुं सत्तारं स्थातारमित्यर्थः ॥ "दाधेट्सिशद्सदो रुः" इति धेटः सदेश्च रुप्रत्ययः । कपिं सुग्रीवं द्रुतमदयालुवन्निर्दयेन तुल्यं वद ॥

सृमरोऽभङ्गुरप्रज्ञो गृहीत्वा भासुरं धनुः ।[1]
विदुरो जित्वरः प्राप लक्ष्मणो गत्वरान् कपीन् ॥ २२ ॥

२२. सृमर इति ॥ सृमरः साधुसरणशीलः ॥ "सृघस्यदः क्मरच्" इति क्मरच्प्रत्ययः ॥ अभङ्गुरप्रज्ञः स्थिरधीः ॥ "भञ्जभासमिदो घुरच्" इति घुरच्प्रत्ययः ॥ विदुरो ज्ञाता । 'ज्ञाता तु विदुरो विन्दुः' इत्यमरः ॥ "विदिभिदिच्छिदेः कुरच्" इति कुरच्प्रत्ययः ॥ जित्वरो जयशीलः ॥ "इण्नशजिसर्त्तिभ्यः क्वरप्" इति क्वरप्प्रत्ययः ॥ एवंभूतो लक्ष्मणो भासुरं भासनशीलम् ॥ "भञ्जभास—" इत्युक्तम् ॥ धनुर्गृहीत्वा गत्वरान् भयात्प्रतिदिशं गन्तॄन् ॥ "गत्वरश्च" इति क्वरबन्तो निपातः ॥ कपीन् प्राप प्राप्तवान् ॥

तं जागरूकः[2] कार्येषु दन्दशूकरिपुं कपिः[3] ।
अकम्प्रं मारुतिर्दीप्रं नम्रः प्रावेशयद्गुहाम् ॥ २३ ॥

२३. तमिति ॥ दन्दशूकाः हिंस्राः ॥ "यजजपदशां यङः" इति दंशेर्यङन्तादूकप्रत्ययः ॥ तेषां रिपुं हन्तारमकम्प्रमकम्पसंस्थिरं दीप्रं दीप्यमानम् ॥ "नमिकम्पि—" इत्यादिना सर्वत्र रप्रत्ययः ॥ तं लक्ष्मणं कार्येषु स्वामिकृत्येषु जागरूकमप्रमत्तम् ॥ "जागरूकः" इत्यूकप्रत्ययः ॥ मारुतिर्वायुनन्दनो हनूमान् नम्रः प्रणतः सन् गुहां किष्किन्धाख्यां

१ °मरो भङ्गुर N.
२ जागरूकं D.
३ रिपुः D.

प्रावेशयत् प्रवेशितवान् । विशेर्हेतुमण्ण्यन्ताल्लुङ् । प्रवेशनस्य गतिविशेषत्वात् "गतिबुद्धि—" इत्यादिना अणि कर्त्तुः कर्मत्वम् ॥

कम्राभिरावृतः स्त्रीभिराशंसुः क्षेममात्मनः ।
इच्छुः प्रसादं प्रणमन् सुग्रीवः प्रावेदन्नृपम् ॥ २४ ॥

२४. कम्राभिरिति ॥ कम्राभिः कमनाभिः । 'कम्रः कामयिताभीकः कमनः कामनोऽभिकः' इत्यमरः ॥ "नमिकम्पि—" इत्यादिना रप्रत्ययः ॥ स्त्रीभिरावृतः । अनुकम्पार्थं तत्पुरःसर इत्यर्थः । आत्मनः क्षेममनपायमाशंसुरिच्छुः ॥ "सनाशंसभिक्ष उः" इत्युप्रत्ययः ॥ प्रसादमनुग्रहमिच्छुः ॥ "विन्दुरिच्छुः" ॥ इत्युप्रत्ययान्तो निपातः ॥ सुग्रीवो नृपं लक्ष्मणं प्रणमन्प्रावदत्प्रोवाच ॥

अहं स्वप्नक् प्रसादेन तव वन्दारुभिः सह ।
अभीरुरवसं स्त्रीभिर्भासुराभिरिहेश्वरः ॥ २५ ॥

२५. अहमिति ॥ हे ईश्वर स्वामिन् अहं तव प्रभावेन महिम्ना वन्दारुभिः वन्दनशीलाभिः ॥ "शॄवन्द्योरारुः" इत्यारुप्रत्ययः ॥ भास्वराभिः ॥ "स्थेशभास—" इत्यादिना वरच्प्रत्ययः ॥ स्त्रीभिः सह स्वप्नक् । ञिष्वप् शये ॥ "स्वपितृषोर्नजिङ्" इति नजिङ्प्रत्ययः ॥ अभीरुर्निर्भीकः सन् ॥ "भियः क्रुक्लुकनौ" इति क्रुप्रत्ययः ॥ इहावसमुषितवान् ॥

विद्युन्नाशं रवेर्भासं विभ्राजं शशलाञ्छनम् ।
रामप्रत्तेषु भोगेषु नाहमज्ञासिषं रतः ॥ २६ ॥

२६. विद्युदिति ॥ हे नाथ । अहं रामेण प्रत्तेषु दत्तेषु ॥ "अच उपसर्गात्तः" इति घोस्तः ॥ भोगेषु विषयेषु रतः सक्तः सन् विद्युन्नाशं विद्युतामु-

---

१ कम्राभिः प्रावृतः E3.
२ प्राब्रवीन्नृ° D., c.
३ प्रभावेन T., G., Com.
४ तेन T2, T4.
५ दीप्ताभिर° T2. T4.
६ °भास्वराभि° T3, D., B., T., E2, G., Com.
७ °हेश्वर T., G., Com., E3.
८ रवेर्भासो T., G., Com., E2, D.

परमं रवेर्भासः प्रकाशान् । विभ्राजते इति विभ्राट् ॥ "भ्राजभास—" इत्यादिना सर्वत्र ताच्छील्ये क्विप् ॥ तं शशलाञ्छनं च नाज्ञासिषम् । वर्षापगमं शरदागमं च न ज्ञातवानस्मि । 'मोहं विधत्ते विषयाभिलाषः' इति भावः ॥

एष शोकच्छिदो वीरान् प्रभो सम्प्रति वानरान् ।
धरासमुद्रशैलानामन्तगान्प्रहिणोम्यहम् ॥ २७ ॥

२७. एष इति ॥ हे प्रभो एषोऽहं सम्प्रति शोकस्य छिदः । भ्राजादिसूत्रादनुपपदे क्विप्यनुवृत्ते "अन्येभ्योऽपि दृश्यते" इति ताच्छील्ये क्विप् । वीरान् शूरान् धरायाः शैलानां समुद्राणां चान्तगान् पारगान् ॥ "अन्तात्यन्त—" इत्यादिना डप्रत्ययः ॥ वानरान् प्रहिणोमि प्रहेष्यामि । प्रेषयिष्यामीत्यर्थः । हि गतौ । वर्त्तमानसामीप्ये लट् ॥ "हिनुमीना" इति णत्वम् ॥

इति ताच्छीलिकाः ॥

राघवस्य ततः कार्यं कारुर्वानरपुङ्गवः ।
सर्ववानरसेनानामाश्वागमनमादिशत् ॥ २८ ॥

२८. अथोणादिपदोक्तप्रत्ययाधिकारः ॥ राघवस्येति ॥ ततो लक्ष्मणानुनयानन्तरं पुमान्गौः पुङ्गवः वृषभः ॥ "गोरतद्धितलुकि" इति समासान्तष्टच् ॥ तेनोपमितसमासे वानरपुङ्गवः सुग्रीवो राघवस्य कार्यं प्रयोजनम् । करोतीति कारुः कर्त्ता सन् ॥ "कृवापाजि—" इत्यादिना उण्प्रत्ययः ॥ सर्ववानरसैन्यानामाश्वागमनं शीघ्रागमनमादिशदादिष्टवान् । कारुवदाशुशब्दः ॥

वयमद्यैव गच्छामो रामं द्रष्टुं त्वरान्विताः ।
कारका मित्रकार्याणि सीतालाभाय सोऽब्रवीत् ॥ २९ ॥

१ सरित्समुद्र° B.
२ शैलसमुद्राणां° D., E2, E3, N., T., G., Com.
३ कुर्यादा° T2, T4.
४ सैन्याना° T3, T., G., Com.

२९. पुनः स एवाह वयमिति ॥ सीतालाभाय सीतां लब्धुम् ॥ "भाववचनाश्च" इति तुमर्थे घञ् ॥ "तुमर्थाच्च भाववचनात्" इति चतुर्थी ॥ मित्रकार्याणि मित्रकृत्यानि कारकाः करिष्यन्तः कर्त्तुमित्यर्थः ॥ "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" इति ण्वुल्प्रत्ययः ॥ "अकेनोर्भविष्यदाधमर्ण्ययोः" इति षष्ठीप्रतिषेधः । रामं द्रष्टुम् ॥ "तुमुन्ण्वुलौ—" इत्यनेनैव तुमुन् ॥ त्वरया अन्विताः सन्तः वयमद्यैव गच्छामः इति सः सुग्रीवोऽब्रवीत् ॥

ततः कपीनां सङ्घाता हर्षाद्राघवभूतये ।
पूरयन्तः समाजग्मुर्भयदाया दिशो दश ॥ ३० ॥

३०. तत इति ॥ आदेशानन्तरं कपीनां संघाताः संघाः हर्षात्स्वाम्यादेशसन्तोषाद्राघवस्य भूतये भूतिमभ्युदयं कर्त्तुम् ॥ "भाववचनाश्च" इति तुमर्थे क्तिन् ॥ "तुमर्थाच्च भाववचनात्" इति चतुर्थी ॥ दश दिशः पूरयन्तः व्याप्नुवन्त इत्यर्थः । भयं दास्यन्तो भयदायाः ॥ "अण् कर्मणि च" इति कर्मोपपदाद्दातेर्भविष्यदर्थे अण्प्रत्ययः ॥ समाजग्मुरागताः ॥

सुग्रीवान्तिकमासेदुः साधयिष्याम इत्यरिम् ।
करिष्यन्त इवाकस्माद्भुवनं निर्दशाननम् ॥ ३१ ॥

३१. सुग्रीवेति ॥ अकस्मादतर्कितं भुवनं जगन्निर्दशाननमरावणं करिष्यन्त इव ॥ "लृट् शेषे च" इति शेषार्थे लृट् ॥ "लृटः सद्वा" इति शत्रादेशः ॥ तथा अरिं साधयिष्याम इति सुग्रीवान्तिकमासेदुः साधयितुमासन्ना इत्यर्थः ॥ "लृट् शेषे च" इति चकारात्क्रियार्थक्रियोपपदे लृट् ॥ आसदनस्य साधनार्थत्वादिति भावः ॥

## अथ घञधिकारः ।

कर्त्तास्मि कार्यमायातैरेभिरित्यभिगम्य सः ।
काकुत्स्थपादपच्छायां शीतस्पर्शामुपागमत् ॥ ३२ ॥

१ हर्षाद्रामविभूतये B.
२ सादयिष्याम B., D., E2, N.
३ इत्यरीन् T2, T3, T4.
४ °त्यभिगम्य E2.

३२. कर्त्तास्मीति ॥ आयातैरागतैरेभिर्वानरैः साधनैः कार्यं रामप्रयोजनं कर्त्तास्मि करिष्यामि ॥ "अनद्यतने लुट्" इत्यनद्यतनभविष्यति लुट् ॥ इत्यवगम्य । कार्यसिद्धिं निश्चित्येत्यर्थः । शीतस्पर्शामाह्लादिकामित्यर्थः । काकुत्स्थ एव पादपः तस्य छायामुपागमत् । रामान्तिकं गत इत्यर्थः ॥ "पदरुजविशस्पृशो घञ्" इति पादस्पर्शौ घञन्तौ ॥

कार्यं सारनिभं दृष्ट्वा वानराणां समागमम् ।
अवैन्नाशं दशास्यस्य निर्वृत्तमिव राघवः ॥ ३३ ॥

३३. कार्येति ॥ राघवः कार्यस्य सीताप्राप्तिरूपस्य । सरति कालान्तमिति सारः स्थिरांशः । 'सारो बले स्थिरांशे च' इत्यमरः ॥ "सृ स्थिरे" इति घञ्प्रत्ययः ॥ तन्निभं तत्सङ्काशं वानराणां समागमं दृष्ट्वा दशास्यस्य नाशं विनाशम् ॥ "भावे" इति घञ् ॥ निर्वृत्तमिवावैत् अवगतवान् सिद्धप्रायममन्यतेत्यर्थः ॥ इणो लङि तिपि शपो लुकि गुणः । आड्वृद्धिः

ततः कपिसमाहारमेकनिश्चायमागतम् ।
उपाध्याय इवायामं सुग्रीवोऽध्यापिपद्दिशाम् ॥ ३४ ॥

३४. तत इति ॥ ततः कपिसमागमनानन्तरं सुग्रीवः । निष्कृष्य चीयत इति निश्चायो राशिः ॥ "परिमाणाख्यायां सर्वेभ्यः" इति चिनोतेर्घञ् ॥ एकनिश्चायमेकराशीभूतमागतम् । एकशब्दस्य "पूर्वकाल—" इत्यादिना समासः । कपिसमाहारं कपिसङ्घम् ॥ "अकर्त्तरि च कारके संज्ञायाम्" इति घञि वृद्धिः । उपेत्याधीयतेऽस्मादित्युपाध्यायो गुरुरिव ॥ "इङश्च" इति घञ् ॥ दिशामायामं विस्तारकृतिम् । परिमाणाख्यायां घञ् । अध्यापिपत् बोधितवानित्यर्थः ॥ "गतिबुद्धि—" इत्यादिना अणि कर्त्तुः कर्मत्वम् । इङो णौ चङि "क्रीङ्जीनां णौ" इत्यात्वे "अर्त्तिह्री—" इत्यादिना पुगागमः ॥

---

१ °मेकं निश्चाय° C. | २ निश्चय° B.

सजलाम्भोदसंरावं हनूमन्तं सहाङ्गदम् ।
जाम्बवन्नीलसहितं चारुसन्द्रावमब्रवीत् ॥ ३५ ॥

३५. सजलेति ॥ सजलाम्भोदस्येव संरावो यस्य तम् ॥ "उपसर्गे रुवः" इति घञ् ॥ सहाङ्गदमङ्गदसहितं जाम्बवता नीलेन च सहितम् । केचिदकारान्तत्वमाश्रित्य नीलसहितं जाम्बवं चेति व्याचक्षते तच्चिन्त्यम् । चारुसन्द्रावं श्लाघ्यगतिम् ॥ "समि युद्रुदुवः" इति घञ् ॥ हनूमन्तमब्रवीत् ॥

यात यूयं यमश्रायं दिशं नायेन दक्षिणाम् ।
विक्षावैस्तोयविश्रावं तर्जयन्तो महोदधेः ॥ ३६ ॥

३६. यदब्रवीत्तदेव नवभिराह ॥ यातादिभिः ॥ यूयम् । श्रीयते इति श्रायः । यमस्य श्रायमाश्रयं स्थानं दक्षिणां दिशम् । नीयन्त इति नायैर्नीतिभिरुपायैरित्यर्थः ॥ "श्रिणीभुवोऽनुपसर्गे" इत्युभयत्रापि कर्मणि घञ् ॥ विक्षावैः सिंहनादैः । टुक्षुशब्दे । महोदधेस्तोयानां विश्रूयते इति विश्रावं शब्दम् ॥ "वौ क्षुश्रुवः" इत्युभयत्रापि कर्मणि घञ् । तर्जयन्तस्तिरस्कुर्वन्तो यात गच्छत ॥

उन्नायानधिगच्छन्तः प्रद्रावैर्वसुधाभृताम् ।
वनाभिलावान् कुर्वन्तः स्वेच्छया चारुविक्रमाः ॥ ३७ ॥

३७. उन्नायानिति ॥ हे चारुविक्रमाः श्लाघ्यपराक्रमाः वसुधाभृतां गिरीणामुन्नायानुत्सेधान् ॥ "अवोदोर्नियः" इति घञ् ॥ प्रद्रावैः प्रकृष्टगतिभिः ॥ "प्रेद्रुस्तुस्रुवः" इति घञ् ॥ अधिगच्छन्तः आरोहन्तः स्वेच्छया वनानामभिलावानुत्सेधान्कुर्वन्तः सर्वत्र यातेति पूर्वेणान्वयः ॥

---

१ सजलाम्भोधि° B.
२ हनुमन्तं N.
३ जाम्बवं N., D.
४ यमाश्रायं E₂.
५ नायेन दक्षिणां दिशम् E₂.
६ नायैश्च T., G., Com.

सदोद्गारसुगन्धीनां फलानामलमाशिताः ।
उत्कारेषु[1] च धान्यानामनभीष्टपरिग्रहाः ॥ ३८ ॥

३८. सदेति ॥ सदोद्गारो निरन्तरसंस्रावः[2] ॥ "उदन्योर्ग्रः" इति गिरतेर्घञ् ॥ तेन सुगन्धीनां हृद्यगन्धानाम् ॥ "गन्धस्य—" इतीत्वम् ॥ फलानामलं पर्याप्तमाशिताः आशितवन्तः ॥ "आशितः कर्त्ता" इति निपातनादाङ्पूर्वादश्नातेः कर्त्तरि क्तः ॥ आशितशब्दस्य सुहितार्थत्वात् "पूरणगुणसुहित—" इत्यादिना षष्ठीसमासप्रतिषेधः ॥ एतस्मादेव ज्ञापकात्षष्ठी । तथा धान्यादीनां व्रीहियवादीनामुत्कारेषु राशिषु च ॥ "कॄ धान्ये" इति किरतेर्घञ् । अनभीष्टपरिग्रहास्तत्स्वीकारनिस्पृहा इत्यर्थः ॥

संस्तावमिव शृण्वन्तश्छन्दोगानां[3] महाध्वरे[4] ।
शिञ्जितं[5] मधुलेहानां पुष्पप्रस्तारशायिनाम् ॥ ३९ ॥

३९. संस्तावमिति ॥ महाध्वरे छन्दोगानां सामगानां संस्तावं संभूय स्तवनमिव ॥ "यज्ञे समि स्तुवः" इति घञ् ॥ पुष्पाणां प्रस्तारा राशयः ॥ "प्रे स्त्रोऽयज्ञे" इति घञ् ॥ तेषु शेरत इति तच्छायिनाम् ॥ "सुप्यजातौ—" इत्यादिना णिनिः ॥ मधुलेहानां मधुलिहाम् ॥ "कर्मण्यण्" इत्यण् ॥ शिञ्जितं कूजितं शृण्वन्तः ॥

आलोचयन्तो[6] विस्तारमम्भसां दक्षिणोदधेः ।
स्वादयन्तः फलरसं मुष्टिसंग्राहपीडितम् ॥ ४० ॥

४०. आलोचयन्त इति ॥ दक्षिणोदधेरम्भसामुदकानां विस्तारं परिणाहम् ॥ "प्रथने वावशब्दे" इति घञ् ॥ आलोचयन्त इयानिति रूपयन्तः । मुष्टीनां संग्राहः सम्यग्ग्रहणम् ॥ "समि मुष्टौ" इति ग्रहेर्घञ् ॥ तेन पीडितं निःसारितं फलरसं स्वादयन्तः ॥

---

१ उत्करेषु C.
२ संभाव° $T_3$.
३ °श्छान्दोगानां C.
४ छन्दोगानामिवाध्वरे $T_1$, $T_3$, $T_4$.
५ सिञ्जितं D.
६ आलोकयन्तो C.

न्याय्यं यद्यत्र तत्कार्यं पर्यायेणाविरोधिभिः।
निशोपशायः कर्त्तव्यः फलोच्चायश्च संहतैः॥ ४१॥

४१. न्याय्यमिति॥ अविरोधिभिः परस्परमविरुन्धानैः किं तु संहतैरैकमत्यं गतैर्युष्माभिर्यत्र यन्न्याय्यं न्यायादनपचारेण यथाप्राप्तकरणलक्षणादभ्रेषादनपेतम्॥ "परिन्योर्नीणोर्द्यूताभ्रेषयोः" इत्यभ्रेषार्थे निपूर्वादिणो घञ्॥ ततः "धर्मपथ्यर्थन्यायादनपेते" इति यत्प्रत्ययः॥ तत्कार्यम्। निशोपशायो निशायां पर्यायशयनम्। ईशोपशाय इति पाठे राजोपशाय इत्यर्थः॥ "व्युपयोः शेतेः पर्याये" इत्युपपूर्वात् शीङो घञ्॥ कर्त्तव्यः। किं च पर्यायेणानुपात्ययेन तवोपशायो ममोपशाय इति क्रमेणेत्यर्थः॥ "परावनुपात्यय इणः" इति परिपूर्वादिणो घञ्॥ फलोच्चायः क्षुन्निवृत्त्यर्थमासन्नफलादानम्। स च कर्त्तव्यः॥ "हस्तादाने चेरस्तेये" इति चिनोतेर्घञ् हस्तादानमिति प्रत्यासत्त्युपलक्षणम्॥

सीता रक्षोनिकायेषु स्तोककायैश्छलेन च।
मृग्या शत्रुनिकायानां व्यावहासीमनाश्रितैः॥ ४२॥

४२. सीतेति॥ रक्षोनिकायेषु राक्षसनिवासेषु स्तोककायैरल्पशरीरैः तथा शत्रुनिकायानां शत्रुसंघानां व्यावहासी मिथोहासव्यवहारः॥ "कर्मव्यतिहारे णच् स्त्रियाम्" इति हसतेर्णच्॥ "णचः स्त्रियामञ्" इत्यञ्॥ "टिड्ढाणञ्—" इत्यादिना ङीप्॥ तामनाश्रितैरप्रमत्तैर्भवद्भिः सीता छलेन छद्मना मिषान्तरेण मृग्या॥ "निवासचितिशरीरोपसमाधानेष्वादेश्च कः" इति निकायादिषु निवासाद्यर्थेषु चिनोतेर्घञ् आदेश्चकारस्य ककारः॥

सारावीणं न कर्त्तव्यं यावन्नायाति दर्शनम्।
संदृष्टायां तु वैदेह्यां निग्राहो वोऽर्थवानरेः॥ ४३॥

---

१ कार्यं तत् D., T₂, T₃. | २ निग्राहोऽप्यर्थवा° E₂.

४३. सांराविणमिति ॥ किं च वैदेही यावद्दर्शनं नायाति तावत्समन्ताद्रावः कलकलः सांराविणम् ॥ "अभिविधौ भाव इनुण्" इति संपूर्वाद्रौतेरिनुणप्रत्ययः ॥ "अणिनुणः" इति ततोऽण् ॥ "इनण्यनपत्ये" इति प्रकृतिभावात् "नस्तद्धिते" इति न टिलोपः ॥ न कर्त्तव्यम् । वैदेह्यां संदृष्टायां तु वो युष्माकं संबन्धी अरेः । कर्मणि षष्ठी । निग्राहः आक्रोशः शपनमर्थवान् सफलो भवति ॥ "आक्रोशेऽवन्योर्ग्रहः" इति निपूर्वाद्ग्रहेर्घञ् ॥

प्रग्राहैरिव पात्राणामन्वेष्या मैथिली[1] कृतैः ।
ज्ञातव्या चेङ्गितैर्धर्म्यैर्ध्यायन्ती राघवागमम् ॥ ४४ ॥

४४. प्रग्राहैरिति ॥ मैथिलीकृतैः सीताकृतैः सीतालिप्सया कल्पितैः पात्राणां प्रग्राहैर्भिक्षापात्रस्वीकारैः ॥ "प्रे लिप्सायाम्" इति प्रपूर्वाद्ग्रहेर्घञ् ॥ इवशब्दोऽपारमार्थिकत्वे । अन्वेष्या भिक्षुवेषैरन्वेष्टव्येत्यर्थः । किं च राघवागमं ध्यायन्ती रामागमनमेव चिन्तयन्ती सा सीता धर्म्यैर्धर्मादनपेतैः ॥ "धर्मपथ्यर्थ—" इत्यादिना यत् ॥ इङ्गितैः पतिव्रताचेष्टितैः ज्ञातव्या च ॥ 'प्रोषिते मलिना कृशा' इत्यादिशास्त्रोक्तकार्श्यादिलिङ्गैरवगन्तव्या चेत्यर्थः ॥

वेदिवत्सपरिग्राहा यज्ञियैः संस्कृता द्विजैः ।
दृश्या मासतमादह्नः प्रागनिन्दितवेशभृत्[2] ॥ ४५ ॥

४५. वेदिवदिति ॥ किं च वेद्या तुल्यं वर्त्तते वेदिवत् सपरिग्राहा स्थण्डिलशयनादिव्रतपरिग्रहवती । अन्यत्र 'वसवस्त्वापरिगृह्णन्तु' इत्यादिमन्त्रसाध्यपूर्वोत्तरपरिग्रहाख्यसंस्कारवती ॥ "परौ यज्ञे" इति परिपूर्वाद्ग्रहेर्घञ् ॥ यज्ञियैर्यज्ञार्हैः ॥ "यज्ञर्त्विग्भ्यां घखञौ" इति घप्रत्ययः ॥ द्विजैर्याज्ञिकैः संस्कृता जातकर्मादिभिः प्रोक्षणादिभिश्च योग्यत्वमापादिता । 'संपूर्वस्य क्वचिदभूषणेऽपीष्यते' इति सुडागमः । अनिन्दितवेषभृत् पतिव्रतोचितवेषधारिणी सा मासस्य पूरणात् मासत-

---

१ The Com. takes मैथिलीकृतैः as one word.

२ वेष D., T., G., Com.

मात् ॥ "नित्यं शतादिमासार्धमाससंवत्सराच्च" इति डटस्तमडागमः । एतस्मादेव ज्ञापकादसंख्यावाचिनोऽपि डट् । अहः प्राग्दश्या द्रष्टव्या । तदतिक्रमे दण्ड्या इति भावः ॥

नीवारफलमूलाशानृषीनप्यतिशेरते ।
यस्या गुणा निरुद्रावास्तां द्रुतं यात पश्यत ॥ ४६ ॥

४६. नीवारेति ॥ निरुद्रावा निश्चापलाः स्थिरा इत्यर्थः ॥ "उदि श्रयतियौतिपूद्रुवः" इत्युत्पूर्वाद्द्रवतेर्घञ् ॥ यस्या गुणाः नीवाराः अकृष्टपच्या व्रीहयः ॥ "नौ वृ धान्ये" इति निपूर्वाद्वृञो घञ् ॥ "उपसर्गस्य घञि—" इत्यादिना नेर्दीर्घः । तान् फलानि मूलानि चाश्नन्तीति तदाशाः ॥ "कर्मण्यण्" इत्यण्प्रत्ययः ॥ तानृषीनप्यतिशेरते तां सीतां पश्यत द्रुतं यात गच्छत ॥

उच्छ्रायवान् घनारावो वानरं जलदारवम् ।
दूराप्लावं हनूमन्तं रामः प्रोचे गजाप्लवः ॥ ४७ ॥

४७. उच्छ्रायवानिति ॥ उच्छ्रायवानुन्नतिमान् ॥ "उदि श्रयति—" इत्यादिना घञ् ॥ महारावो गम्भीरध्वनिः गजाप्लावो गजगमनो रामः जलदारवं मेघगम्भीरघोषं दूराप्लवं दूराप्लुतं हनूमन्तं नाम वानरं प्रोचे प्रोवाच ॥ "विभाषाङि रुप्लुवोः" इत्याङ्पूर्वाद्रौतेः प्लवतेश्च विकल्पाद्घञ् ॥ तदभावे "ऋदोरप्" इत्यप्प्रत्ययः ॥

अवग्राहे यथा वृष्टिं प्रार्थयन्ते कृषीवलाः ।
प्रार्थयध्वं तथा सीतां यात सुग्रीवशासनात् ॥ ४८ ॥

४८. अवग्राह इति ॥ अवग्राहे वर्षाभावे ॥ "अवे ग्रहो वर्षप्रतिबन्धे" इति विकल्पाद्घञ् ॥ यथा कृषीवलाः कर्षकाः ॥ "रजःकृषि—" इत्या-

१ यात पश्यत द्रुतम् E2.
२ महारावो T., G., Com.
३ गजाप्लावो T., G., Com.
दूराप्लवं D.
दूराह्वावं E3, T2.
४ दूराप्लवम् T., G., Com.
५ अवग्रहे T2, T4.
६ प्रार्थयन्ति C.
७ यात सीतां T4.

दिना मत्वर्थीये वलचि "वले" इति पूर्वस्य दीर्घः ॥ वृष्टिं प्रार्थयन्ते आशंसन्ते तथा सीतां प्रार्थयध्वम् सुग्रीवशासनाद्यात ॥

वणिक् प्रग्राहवान् यद्वत् काले चरति सिद्धये ।
देशापेक्षास्तथा यूयं यातादायाङ्गुलीयकम् ॥ ४९ ॥

४९. वणिगिति ॥ प्रगृह्यतेऽनेनेति प्रग्राहस्तुलासूत्रम् ॥ "प्रे वणिजाम्" इति घञ् ॥ तद्वान् तुलाहस्तो वणिक् यद्वद्यथा काले व्यवहारकाले सिद्धये लाभाय देशापेक्षः समृद्धदेशापेक्षश्चरति तथा यूयमङ्गुलौ भवमङ्गुलीयं तदेवाङ्गुलीयकम् ॥ "जिह्वामूलाङ्गुलेश्छः" इति छप्रत्ययः ॥ आदाय देशापेक्षाः सीताधिष्ठितदेशापेक्षाः सन्तः ॥ "कर्मण्यण्" इत्यण् ॥ यात गच्छत ॥

अभिज्ञानं गृहीत्वा ते समुत्पेतुर्नभस्तलम् ।
वाजिनः स्यन्दने भानोर्विमुक्तप्रग्रहा इव ॥ ५० ॥

५०. अभीति ॥ ते वानराः अभिज्ञानं चिह्नमङ्गुलीयकं गृहीत्वा भानोः स्यन्दने रथे विमुक्ताः शिथिलिताः प्रग्रहाः रश्मयः संयमनरज्जवो येषां ते ॥ "रश्मौ च" इति प्रपूर्वाद्ग्रहेः घञभावपक्षे "ग्रहवृदृनिश्चिगमश्च" इत्यप् ॥ वाजिनोऽश्वा इव नभस्तलं समुत्पेतुः ॥

उदक् शतबलिं कोट्या सुषेणं पश्चिमां तथा ।
दिशं प्रास्थापयद्राजा वानराणां कृतत्वरः ॥ ५१ ॥

५१. उदगिति ॥ राजा सुग्रीवः कृतत्वरः सन् शतबलिं नाम कञ्चन कपियूथपं वानराणां कोट्या सह उदक् उदीचीं दिशं प्रतीत्यर्थः । उदीचीशब्दात्प्रथमान्तात् "दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यः—" इत्यादिना अस्तातिप्रत्यये तस्य "अञ्चेर्लुक्" इति लुकि "लुक् तद्धितलुकि" इति स्त्रीप्रत्ययस्यापि लुकि भसंज्ञाभावात् "उद ईत्" इतीत्वेऽपि निवृत्ते "तद्धितश्चासर्वविभक्तिः" इत्यव्ययत्वात्पश्चादुत्पन्नायाः

१ देशापेक्ष्या° E₂.
२ °याङ्गुरीयकम् C., c., E₂, E₃.
३ नभस्तले c.
४ वियुक्त E₂.
५ This latter half is not found in T₃.

द्वितीयायाः "अव्ययादाप्सुपः" इति लुकि सर्वमवदातम् ॥ प्रास्थापयत् प्रस्थापितवान् । तथा तद्वत्कोट्या सहैव सुषेणं पश्चाद्भवां पश्चिमां प्रतीचीं दिशं प्रति प्रास्थापयत् ॥ "अग्रादिपश्चाड्डिमच्" इति डिमच् ॥

प्राचीं तावद्भिरव्यग्रः कपिभिर्विनतो ययौ ।
अप्रग्राहैरिवादित्यो वाजिभिर्दूरपातिभिः ॥ ५२ ॥

५२. प्राचीमिति ॥ विनतो नाम कश्चिद्यूथपः तावद्भिः कोटिसंख्याकैरेव कपिभिः सह अप्रग्राहैः शिथिलितप्रग्रहैरित्यर्थः ॥ "रश्मौ च" इति विकल्पात्प्रपूर्वाद्ग्रहेर्घञ् ॥ अत एव दूरपातिभिर्दूरगामिभिः वाजिभिरश्वैरादित्य इव अव्यग्रः सन् प्राचीं दिशं प्रति ययौ ॥

ययुर्विन्ध्यं शरन्मेघैः प्रावारैः प्रवरैरिव ।
प्रच्छन्नं मारुतिप्रष्ठाः सीतां[3] द्रष्टुं प्लवङ्गमाः ॥ ५३ ॥

५३. ययुरिति ॥ प्रतिष्ठत इति प्रष्ठोऽग्रगामी ॥ "आतश्चोपसर्गे" इति तिष्ठतेः प्रोपसृष्टात्कर्त्तरि कः ॥ "प्रष्ठोऽग्रगामिनि" इति षत्वनिपातः ॥ मारुतिप्रष्ठाः हनूमत्पुरोगाः प्लवैर्गच्छन्तीति प्लवङ्गमाः वानराः । खशिमुम् । सीतां द्रष्टुं प्रवरैः श्रेष्ठैः ॥ "ग्रहवृदृनिश्चिगमश्च" इत्यप् ॥ प्रावारैरुत्तरासङ्गैरिव । 'द्वौ प्रावारोत्तरासङ्गौ' इत्यमरः ॥ "वृणोतेराच्छादने" इति घञ् ॥ "उपसर्गस्य घञ्यमनुष्ये बहुलम्" इति दीर्घः ॥ शरन्मेघैः प्रच्छन्नं विन्ध्यं ययुः ॥

परिभावं मृगेन्द्राणां कुर्वन्तो नगमूर्धसु ।
विन्ध्ये तिग्मांशुमार्गस्य चेरुः परिभवोपमे ॥ ५४ ॥

५४. परिभावमिति ॥ नगमूर्धसु विन्ध्याद्रिशिखरेषु मृगेन्द्राणां सिंहानां परिभावमवज्ञानं कुर्वन्तः ॥ "परौ भुवोऽवज्ञाने" इति पक्षे घञ् ॥ तिग्मां-

१ अप्रग्रहै° T₃.
२ दूरयायिभिः D., T₂, T₄.
३ द्रष्टुं सीतां T₂, T₃, T₄.
४ गिरिमूर्धसु T₃.
गिरिमूर्धनि T₂, T₄.

शुमार्गस्य सूर्यमार्गस्य यः परिभवो निरोधः। घञभावपक्षे "ऋदोरप्" इत्यप्॥ तस्य उपमापयतीत्युपमे सदृशे। मूर्त्तः परिभव इव स्थित इत्यर्थः॥ "आतश्चोपसर्गे" इति कः॥ तस्मिन्विन्ध्ये चेरुः परिभ्रेमुः॥

भ्रेमुः शिलोच्चयान्भीमानुच्चेरुरतरान् नदान्।
आशंसवो लवं शत्रोः सीतायाश्च विनिश्चयम्॥ ५५॥

५५. भ्रेमुरिति॥ शत्रोर्लवमुच्छेदनम्॥ "ऋदोरप्" इत्यप्॥ सीताया विनिश्चयं स्थाननिर्णयं च॥ "ग्रहवृदृनिश्चिगमश्च" इत्यप्॥ आशंसव इच्छवः। "सनाशंसभिक्ष उः" इत्युप्रत्ययः॥ ते वानराः भीमान् भयङ्करान् शिलोच्चयान् शिलोत्करान् गिरीन्। उत्पूर्वाच्चिनोतेः "एरच्" इत्येरच्। भ्रेमुस्तेषु बभ्रमुरित्यर्थः। "देशकालाध्वभावानां कर्मसंज्ञा ह्यकर्मणाम्" इति कर्मत्वम्॥ "वा जॄभ्रमुत्रसाम्" इति विकल्पाद्भ्रमेर्लिट्येत्वाभ्यासलोपौ॥ अतरानविद्यमानतरणान् दुस्तरानित्यर्थः॥ "ऋदोरप्" इत्यप्॥ नदान्प्रवाहान् तेरुरुत्तीर्णवन्तः॥ "तॄफलभजत्रपश्च" इत्येत्वाभ्यासलोपौ॥

आदरेण गमं चक्रुर्विषमेष्वप्यसङ्घसाः।
व्याप्नुवन्तो दिशो न्यादान् कुर्वन्तः सव्यधान्हरीन्॥ ५६॥

५६. आदरेणेति॥ विषमेषु विषमस्थलेष्वप्यसङ्घसाः अविद्यमानसम्यग्ग्रासाः॥ "उपसर्गेऽदः" इत्यदेरुपसृष्टादप्॥ "घञपोश्च" इति घस्लादेशः॥ दिशो व्याप्नुवन्तः हरीन् सिंहान् सव्यधान् ससंप्रहारान्॥ "व्यधजपोरनुपसर्गे" इत्यप्॥ न्यादान् निराहारांश्च॥ "नौ ण च" इत्यदेर्णप्रत्ययः॥ कुर्वन्तः आदरेण गमं गमनं चक्रुः। ग्रहादिनैवोभयत्राप्यप्॥

संचेरुः सहसाः केचिदस्वनाः केचिदाटिषुः।
संयामवन्तो यतिवन्निगदाननपरेऽमुचन्॥ ५७॥

---

१ शिलोच्चयांस्तुङ्गा° N., C., T., B.. शिलोच्चयान्भीमांस्ते तेरु° T., G., Com.
२ The verse is not found in $T_3$.
३ आदरेणागमं $T_4$.
४ सव्यथा° D.
५ निनादा° c., $T_4$, T., G., Com.

५७. संचेरुरिति ॥ केचिद्वानराः सहसाः सहासाः संचेरुः। केचिद्स्वनाः निःशब्दाः आटिषुः पर्यटितवन्तः। अटतेर्लुङ् ॥ "स्वनहसोर्वा" इत्युभयत्र विकल्पादप् ॥ अपरे यतिवत् संयामवन्तो नियमवन्तः ॥ "यमः समुपनिविषु च" इति विकल्पाद्घञ् ॥ निनादान् वाचः ॥ "नौ गदनद—" इत्यादिना विकल्पादेव घञ् ॥ अमुचन्। वाचो निजगदुरित्यर्थः। मुचेर्लुङि लृदित्वादङ् ॥

अथ क्रमादनिकाणा नराः क्षीणपणा इव।
अमदाः सेदुरेकस्मिन् नितम्बे निखिला गिरेः ॥ ५८ ॥

५८. अथेति ॥ अथानन्तरं क्रमात् परिभ्रमणश्रमात्। क्रमेर्भावे घञ् ॥ "नोदात्तोपदेशस्य—" इत्यादिना वृद्धिप्रतिषेधः ॥ अनिकाणाः निःशब्दाः "क्वणो वीणायां च" इति निपूर्वात्क्वणतेः वीणायां वा घञ् ॥ क्षीणपणाः क्षीणवित्ताः नरा इव ॥ "नित्यं पणः परिमाणे" इति पणतेः परिमाणार्थे अप्प्रत्ययः। इह वित्तमात्रं लक्ष्यते। अमदाः निर्मदाः ॥ "मदोऽनुपसर्गे" इत्यप् ॥ निखिलाः वानराः एकस्मिन्गिरेर्नितम्बे कटके सेदुर्निषेदुः ॥

ततः ससंमर्दास्तत्र निरैक्षन्त पतत्रिणः।
गुहाद्वारेण निर्यातः समजेन पशूनिव ॥ ५९ ॥

५९. तत इति ॥ ततो निषदनानन्तरं तत्राद्रिकटके ससंमदान् सहर्षान् ॥ "प्रमदसंमदौ हर्षे" इत्यप्प्रत्ययान्तो निपातः ॥ गुहाद्वारेण निर्यातो निर्गच्छतः। यातेः शतरि शस्। पतत्रिणः पक्षिणः समजेन सङ्घेन ॥ "समुदोरजः पशुषु" इति संपूर्वादजेरप् ॥ निर्यातः पशूनिव निरैक्षन्त अपश्यन्। ईक्षतेर्लङि "झोऽन्तः" इत्यन्तादेशः ॥

---

१ क्रमेन C., T₃, D. क्रामेन E₂.
२ °दनिःक्वाणाः N., C., T₁.
३ समदा° T₂.
पतत्रिणस्त° D.
४ ससंमर्दास्तत्र Com.
५ ससंमदाः D.
६ समाजेन C.

ग्लहमक्षेषु[1] कुर्वाणान्छद्मना कितवानिव ।
मलिम्लुचानिवापश्यञ्शकुन्तानागतान्गिरेः ॥ ६० ॥

६०. ग्लहमिति ॥ अक्षेषु पाशकेषु विषये छद्मना कपटेन ग्लहं पणं कुर्वाणान् । 'पणोऽक्षेषु ग्लहोऽक्षास्तु देवनाः पाशकाश्च ते' इत्यमरः । "अक्षेषु ग्लहः" इति ग्रहेरबन्तो लत्वार्थं निपातः । कितवानक्षदेवकानिव । 'धूर्तोऽक्षदेवी कितवः' इत्यमरः । गिरेरागतान् मलिम्लुचान् पाटच्चरानिव । 'पाटच्चरमलिम्लुचौ' इत्यमरः । गिरेरागतान् शकुन्तान् पक्षिणोऽपश्यन् ॥

वीनामुपसरं[2] दृष्ट्वा तेऽन्योन्योपहवा गुहाम् ।
प्राविशन्नाहवप्रज्ञा आहावमुपलिप्सवः[3] ॥ ६१ ॥

६१. वीनामिति ॥ वीनां पतत्रिणां । 'विविष्किरपतत्रिणः' इत्यमरः । उपसरः प्रजनो गर्भाधानाय वृषभाणां गोषूपगमनमिति यावत् । "प्रजने सर्तेः" इत्यप् ॥ इह लक्षणयोपसरमिवोपसरं संभ्रमोपसर्पणं दृष्ट्वा । पक्षिसंचारादुदकसत्तां निश्चित्येत्यर्थः । अन्योन्यमुपहवः आह्वानं येषां ते अन्योन्योपहवाः ॥ "ह्वः संप्रसारणं च न्यभ्युपविषु" इति ह्वयतेरप् संप्रसारणं च ॥ आह्वयन्ते सस्पर्धमाकारयन्त्यस्मिन्नित्याहवो युद्धम् ॥ "आङि युद्धे" इत्यप् संप्रसारणं च । तत्र प्रज्ञाः प्रौढाः ते वानराः आहावं निपानाख्यं जलाशयम् । 'आहावस्तु निपानं स्यादुपकूपजलाशये' इत्यमरः ॥ "निपानमाहावः" इति निपातनात्साधुः ॥ उपलिप्सवः पिपासोपशमार्थं लिप्सवो गुहां प्राविशन् ॥

कुर्वन्तो हवमाप्तानां पिपासावधकाङ्क्षिणः ।
द्वारं तमोघनमरण्यं गुहायाः प्राविशन् द्रुतम् ॥ ६२ ॥

६२. कुर्वन्त इति ॥ आप्तानां सुहृदां हवमाह्वानम् ॥ "भावेऽनुपसर्गस्य" इत्यप्संप्रसारणं च ॥ कुर्वन्तः पिपासाया वधो निवृत्तिः ॥ "हनश्च

---

१ Verse 60 is found only in T., G., Com., and $T_2$, $T_4$.

२ °मुपासरं $T_3$, $T_4$.

३ आहार° c., D.

वधः" इति हन्तेरप्वधादेशश्च ॥ तत्काङ्क्षिणः सन्तः तमसो घनो मूर्त्तिः काठिनत्वं संघात इति यावत् ॥ "मूर्त्तौ घनः" इति निपातः ॥ तत्प्रख्यं तत्सन्निभं गाढान्धकारं गुहायाः द्वारं द्रुतं प्राविशन् ॥

तस्मिन्नन्तर्घने[1] पश्यन्प्रघणे[2] सौधसद्मनः।
लौहोद्घनघनस्कन्धा ललितापघनां स्त्रियम् ॥ ६३ ॥

६३. तस्मिन्निति ॥ तस्मिन्बिले अन्तर्हन्यते गम्यते इत्यन्तर्घनोऽन्तर्घणो वा। बाह्लिकेषु देश इति काशिका। अत्राभ्यन्तरावकाशमात्रं लक्ष्यते ॥ "अन्तर्घनो देशे" इति हन्तेरप्प्रत्ययो घनादेशश्च। तस्मिन्नन्तर्घनेऽवकाशे सौधस्य सद्मनः प्रघणेऽलिन्दे। 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठकः' इत्यमरः। "अगारैकदेशे प्रघणः प्रघाणश्च" इति प्रपूर्वाद्धन्तेरप्प्रत्ययान्तो निपातः। उद्धन्यतेऽस्मिन्नित्युद्घनो हन्यमानस्य तप्तायःपिण्डादेराधारभूतोऽत्याधानाख्यो लोहकूटः ॥ "उद्घनोऽत्याधानम्" इति हन्तेरुत्पूर्वादप्प्रत्ययान्तो निपातः ॥ लोहोद्घनवद्घनाः निबिडाः स्कन्धाः येषां ते वानराः ललितापघनां कोमलाङ्गाम् ॥ "अपघनोऽङ्गम्" इत्यपपूर्वाद्धन्तेरप्प्रत्ययान्तो निपातः ॥ स्त्रियमपश्यत् ॥

द्रुघणोद्भिन्नकल्पाग्रास्तरसा तरुसंहतीः[3]।
अभ्याध्यपृच्छन्कुर्वाणास्तां तेऽयोघनमुष्टयः ॥ ६४ ॥

६४. द्रुघणेति ॥ अयो हन्यते एभिरित्ययोघनाः लोहघण्टास्त इव मुष्टयो येषां ते। तद्वन्निबिडमुष्टय इत्यर्थः। अत एव तरसा तरुसंहतीः द्रुर्द्रुमो हन्यतेऽनेनेति द्रुघणः कुठारादिः ॥ "करणेऽयोविद्रुषु" इत्युभयत्रापि करणार्थे हन्तेरप्प्रत्ययो घनादेशश्च ॥ अरिहणादिपाठात् "पूर्वपदात्संज्ञायामगः" इति वा द्रुघण इति णत्वम्। तेनोद्भिन्नकल्पानि तत्प्रायाण्यग्राणि यासां ताः कुर्वाणास्ते वानरास्तां स्त्रियम्।

१ °न्तर्घणे N., C., D., E₂.
२ प्रघाणे N., C., B.
प्रघाने c., E₂.

३ The verse 64 in found only in T., G., Com.

व्याधेरभावोऽव्याधि अनामयमित्यर्थः । अर्थाभावेऽव्ययीभावः । अपृच्छन् कुशलमपृच्छन्नित्यर्थः ॥

सा स्तम्बघ्नपदन्यासान् विघनेन्दुसमद्युतिः ।
परिघोरुभुजानाह हसन्ती स्वागतं कपीन् ॥ ६५ ॥

६५. सेति ॥ विहन्यते तमस्तेजोऽन्तरं वानेनेति विघनः । पूर्ववत् "करणेऽयोविद्रुषु" इत्यप् । तेनेन्दुना समद्युतिः सा स्त्री स्तम्बाः गुल्माः हन्यन्त एभिरिति स्तम्बघ्नाः । 'अप्रकाण्डे स्तम्बगुल्मौ' इत्यमरः ॥ "स्तम्बे क च" इति स्तम्बोपपदाद्धन्तेः करणे कप्रत्ययः ॥ "गमहन—" इत्यादिना उपधालोपः ॥ ते पदन्यासा येषां तान् । परिहन्यतेऽनेनेति परिघोऽर्गला ॥ "परौ घः" इत्यप्प्रत्ययो घादेशश्च ॥ तद्वदुरवो भुजाः येषां तान् कपीन् हसन्ती स्वागतमाह । स्मितपूर्वं स्वागतमपृच्छदित्यर्थः ॥

पिप्रायाद्रिगुहोपघ्नानुद्घान् सङ्घसमागतान् ।
फलैर्नानारसैश्चित्रैः स्वादुशीतैश्च वारिभिः ॥ ६६ ॥

६६. पिप्रायेति ॥ अद्रिगुहोपघ्नान् तदाशयान् स्वाश्रयं गतानित्यर्थः ॥ "उपघ्न आश्रये" इति हन्तेरप्प्रत्यये उपधालोपनिपातः । उद्घान् प्रशस्तान् सङ्घशो गणश आगतान् ॥ "सङ्घोद्घौगणप्रशंसयोः" इति समुत्पूर्वाद्धन्तेरप्प्रत्यये घादेशनिपातः ॥ कपीन् नानाविधैर्बहुविधैः चित्रैरद्भुतैः फलैः स्वादुशीतैः मधुराशिशिरैः वारिभिश्च पिप्राय सन्तर्पयामास । प्रीणातेर्लिटि वृद्ध्यायादेशौ ॥

निघानिघतरुच्छन्ने तस्मिंस्ते लब्धिमैः फलैः ।
तृप्तास्तां भ्राजथुमतीं पप्रच्छुः कस्य पूरियम् ॥ ६७ ॥

६७. निघेति ॥ निघाः निमिताः समसंस्थानाः अनिघाः विपरीताः ॥ "निघो निमितम्" इति निपूर्वाद्धन्तेरप्प्रत्यये घादेशनिपातः । तैरुभयै-

१ परिघाभभुजा° T3, T4.
२ सादरं noticed by c.
३ सङ्घशा आगतान् T., G., Com.
४ नानाविधै° T., G., Com.
५ ते तस्मिन् D.

स्तरुभिश्छन्ने तस्मिन् बिले ते वानराः लब्धैर्मैर्लब्धैः । "ष्टितः क्रिः" इति क्रिः ॥ फलैस्तृप्ताः सन्तः भ्राजथुमतीं दीप्तिमतीम् ॥ "ट्वितोऽथुच्" इत्यथुच्प्रत्ययान्तः ॥ तां स्त्रियमियं कस्य पूरिति पप्रच्छुः ॥

रक्षणं[1] करोषि कस्मात्त्वं[2] यत्नेनाख्यायतां शुभे[3] ।
स्वप्ने निधिवदाभाति तव संदर्शनं हि नः ॥ ६८ ॥

६८. रक्षणमिति ॥ हे शुभे कस्मात्कारणात्त्वं यत्नेन रक्षणं रक्षणं करोषि ॥ "यजयाचयत—" इत्यादिना यतिरक्षिभ्यां भावे नङ्प्रत्ययः ॥ नोऽस्मभ्यमाख्याहि । तव संदर्शनं नोऽस्माकं स्वप्ने स्वप्नावस्थायाम् ॥ "स्वपो नन्" इति नन् ॥ निधिवत् निधिरिव ॥ "उपसर्गे घोः किः" ॥ आभाति प्रतिभाति ॥

ततो जलधिगम्भीरान्वानरान्प्रत्युवाच सा ।
इयं दानवराजस्य पूः सृष्टिर्विश्वकर्मणः[4] ॥ ६९ ॥

६९. तत इति ॥ ततः प्रश्नानन्तरं सा स्त्री जलानि धीयन्तेऽस्मिन्निति जलधिः समुद्रः ॥ "कर्मण्यधिकरणे च" इति घोः किः ॥ तद्वद्गम्भीरान् वानरान्प्रत्युवाच । किमिति । इयं दानवराजस्य दानवेन्द्रस्य पूः पुरी विश्वकर्मणः । कृद्योगात्कर्त्तरि षष्ठी ॥ सृज्यत इति सृष्टिः । तेन सृष्टेत्यर्थः । कर्मणि "स्त्रियां क्तिन्" इति क्तिन् ॥

निहतश्च स्थितिं भिन्दन् दानवोऽसौ बलद्विषा[5] ।
दुहिता मेरुसावर्णेरहं नाम्ना स्वयंप्रभा ॥ ७० ॥

७०. निहत इति ॥ असौ दानवः स्थितिं मर्यादाम् ॥ "स्थागापापचो भावे" इत्यङपवादेन क्तिन् ॥ "द्यतिस्यतिमास्थामित्ति किति" इती-

१ रक्षं B.
२ कस्माद्वा T3, T4.
३ °नाख्याहि नः शुभे D., T3, T4, Com.
४ सृष्टिः पूर्विश्व° D., E2.
५ बलिद्रुहा T., G., Com.
बलिद्विषा B.
बलद्रुहा T3.

त्वम् ॥ भिन्दन्नुत्सादयन् बलिद्रुहा बलिध्वंसिना दैत्यारिणा निहतश्च । अहं मेरुसावर्णेर्नाम तस्य दानवेन्द्रस्य दुहिता नाम्ना स्वयंप्रभा ॥

जूतिमिच्छथ चेत्तूर्णं कीर्त्तिं वा पातुमात्मनः ।
करोमि वो बहिर्यूतीन् पिधद्ध्वं पाणिभिर्दृशः[1] ॥ ७१ ॥

७१. जूतिमिति ॥ तूर्णं जूतिं बहिर्गतिं तदा आत्मनो मम कीर्त्तिं युष्मत्त्राणजनितं यशः पातुं वा त्रातुं चेत्यर्थः ॥ 'वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये' इति विश्वः । इच्छथ चेत् । वो युष्मान् बहिर्गुहाबहिर्देशे यूतिर्मिश्रणं मेलनं येषां तान् बहिर्यूतीन् करोमि । युष्मानभ्रष्टयूथान् बहिः स्थापयिष्यामीत्यर्थः ॥ "ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च" इति निपातनात् जूतियूत्योर्जवतेर्यौतेश्च दीर्घनिपातः कीर्त्तयतेः कीर्त्तिः । पाणिभिर्दृशः पिधद्ध्वं छादयत । अपिपूर्वाद्धाञो लोटि ताङि ध्वमि "दधस्तथोश्च" इत्यभ्यासस्य भष्भावे "श्नाभ्यस्तयोरातः" इत्याकारलोपः । 'वष्टि भागुरिरल्लोपम्' इत्यपेरल्लोपः ॥

व्रज्यावती निरुद्धाक्षान् विद्येवानुष्ठितक्रियान् ।
निरचिक्रमदिच्छातो वानरांश्चङ्क्रमावतः ॥ ७२ ॥

७२. व्रज्येति ॥ व्रज्यावती प्रशस्तगतिमती ॥ "व्रजयजोर्भावे क्यप्" इति क्यप् ॥ ततः प्रशंसायां मतुप् । ततो ङीप् । सा स्त्री विद्येव काचिन्मन्त्रविद्येव ॥ "संज्ञायां समज—" इत्यादिना विदेः क्यप् ॥ निरुद्धाक्षान् पाणिपिहितदृष्टीन् अनुष्ठितक्रियान् कृतोचितव्यापारान् ॥ "कृञः श च" इति स्त्रियां शप्रत्यये रिङादेशः ॥ चङ्क्रमावतः कुटिलगतिमतः ॥ "नित्यं कौटिल्ये गतौ" इति क्रमेर्यङन्तात् "अ प्रत्ययात्" इति स्त्रियामकारप्रत्यये टाप् । ततो मतुपि शस् । वानरानिच्छातस्तदिच्छानुसारतः॥ "इच्छा" इतीषेः शप्रत्यये यगभावो निपातितः ॥ निरचिक्रमत् निष्क्रामितवती । क्रमेर्णौ चङि "सन्यतः" इत्यभ्यासस्येत्वम् । तस्यालघुत्वान्न दीर्घः ॥

---

[1] पाणिभिर्दृशम् E₃.

निष्क्रम्य शिक्षया तस्यास्त्रपावन्तो रसातलात् ।
ज्ञात्वा मासमतिक्रान्तं व्यथामवललम्बिरे ॥ ७३ ॥

७३. निष्क्रम्येति ॥ तस्याः स्त्रियाः शिक्षयोपदेशेन ॥ "गुरोश्च हलः" इत्यप्रत्यये टाप् ॥ रसातलाद्बिलान्निष्क्रम्यात एव स्त्रीशरणागमात् त्रपावन्तः । त्रपूष्षित्वात् "षिद्भिदादिभ्योऽङ्" इत्यङ् । ततो मतुप् । काले स्वामिकृतं मासकालमतिक्रान्तं ज्ञात्वा व्यथां भयम् । व्यथ भयसंचलनयोः । भिदादित्वादङ् । अवलल्म्बिरे प्राप्ताः ॥

चिन्तावन्तः कथां चक्रुरुपधाभेदभीरवः ।
अकृत्वा नृपतेः कार्यं पूजां लप्स्यामहे कथम् ॥ ७४ ॥

७४. चिन्तावन्त इति ॥ उपधानमुपधा सम्यक् परीक्षा । 'उपधा सुपरीक्षापि' इति यादवः ॥ "आतश्चोपसर्गे" इत्यङ् ॥ तया तज्जन्या सिद्धिर्लक्ष्यते । तद्भेदात् तद्भङ्गाद्भीरवः अत एव चिन्तावन्तः इतिकर्त्तव्यतामूढाः किमपि ध्यायन्तः नृपतेः स्वामिनः कार्यमकृत्वा कथं पूजां संमानं लप्स्यामह इति कथाः संलापांश्चक्रुः । सर्वत्र "चिन्तिपूजिकथिकुम्बिचर्चश्च" इत्यङ् ॥

प्रायोपासनया शान्तिं मन्वानो वालिसंभवः ।
युक्त्वा योगं स्थितः शैले विवृण्वंश्चित्तवेदनाम् ॥ ७५ ॥

७५. प्रायेति ॥ वालिसंभवोऽङ्गदः प्रायोपासनया प्रायोपवेशनेन अनशनस्थित्येत्यर्थः । 'प्रायश्चानशने मृत्यौ' इति विश्वः । उपपूर्वादासेः "ण्यासश्रन्थो युच्" इति युच् । शान्तिं सर्वारिष्टनिवृत्तिं मन्वानो निश्चिन्वन् योगं चित्तनिरोधं युक्त्वा अवलम्ब्य चित्तवेदनां मनोव्यथाम् । "घट्टिवन्दिविदिभ्यो युज्वक्तव्यः" इति विदेर्युच् । विवृण्वन् प्रकाशयन् शैले स्थितः ॥

---

१ काल° T., G., Com.

प्रस्कन्दिकामिव प्राप्तो ध्यात्वा ब्रूते स्म जाम्बवान्।
धिक् शालभञ्जिकाप्रख्यान् विषयान् कल्पनारुचीन् ॥ ७६ ॥

७६. प्रस्कन्दिकामिति ॥ अथ जाम्बवान् ध्यात्वा किं त्वं करिष्यसीति प्रश्नस्योत्तरमालोच्येत्यर्थः। प्रस्कन्दिकां प्रस्कन्दनिरोगं प्राप्त इव तथा गद्गदः सन्नित्यर्थः ॥ "रोगाख्यायां ण्वुल् बहुलम्" इति स्कन्देः प्रपूर्वाद्रोगाख्यायां स्त्रियां ण्वुल् ॥ ब्रूते स्म। तदेवाह सार्धश्लोकेन धिगित्यादिना। सालभञ्जिकाः दारुदन्तवस्त्रादिनिर्मिताः क्रीडासाधनभूताः पुत्रिकाः। 'पाञ्चालिकादिवस्त्रादिपुत्रिका सालभञ्जिका' इति यादवः ॥ "संज्ञायाम्" इति ण्वुल् ॥ "नित्यं क्रीडाजीविकयोः" इति समासः ॥ तत्प्रख्यांस्तत्प्रायान् अपारमार्थिकानित्यर्थः। अत एव कल्पनातोऽभिमानतो रुचिरिच्छा येषु तान् स्वभावतः स्पृहणीयानित्यर्थः। विषयान् शब्दादीन् धिक् ॥

यां कारिं राजपुत्रोऽयमनुतिष्ठति तां क्रियाम्।
अहमप्यनुतिष्ठामि सोऽप्युक्त्वैवमुपाविशत् ॥ ७७ ॥

७७. यामिति ॥ अयं राजपुत्रोऽङ्गदः यां कारिं क्रियामनुतिष्ठति ॥ "विभाषा ख्यानपरिप्रश्नयोरिञ्च" इति करोतेरिञ्प्रत्ययः। चकारात्तां क्रियामित्यत्र शप्रत्ययः। अहमप्यनुतिष्ठामीत्येवमुक्त्वा जाम्बवानप्युपाविशदुपविष्टः। प्रायोपवेशनं कृतवानित्यर्थः ॥

उवाच मारुतिर्वृद्धे संन्यासिन्यत्र वानरान्।
अहं पर्यायसंप्राप्तां कुर्वे प्रायोपवेशिकाम् ॥ ७८ ॥

७८. उवाचेति ॥ अथ मारुतिर्हनुमान् अत्रास्मिन्पर्वते वृद्धे जाम्बवति संन्यासिनि सर्वसङ्गपरित्यागिनि सति अहं पर्यायसंप्राप्तामङ्गदजाम्बवदानन्तर्यप्राप्तां प्रायोपवेशिकां प्रायोपवेशनम् ॥ "पर्यायार्हणोत्पत्तिषु ण्वुच्" इति पर्यायार्थे ण्वुच् ॥ कुर्वे इति वानरानुवाच ॥

---

१ स T₃.
२ साल° T., G., Com.

३ वानरान् D.

अभावे भवतां योऽस्मिन् जीवेत्तस्यास्त्वजीवनिः ।
इत्युक्त्वा सर्वं एवास्थुर्बद्धा योगासनानि ते ॥ ७९ ॥

७९. अभाव इति ॥ अस्मिन् शैले भवतामभावे मरणे सति यो जीवेत्तस्य अजीवनिरस्तु अजीवनमेवास्तु। धिक् तस्य जीवनमिति भावः ॥ "आक्रोशे नञ्यनिः" इत्याक्रोशे जीवेरनिप्रत्ययः ॥ इत्युक्त्वा ते सर्वे एव सर्वेऽपि योगासनानि स्वस्तिकपद्मकादीन्यासनानि बद्धा अस्थुरनशने स्थिताः । तिष्ठतेर्लुङि "गातिस्था—" इत्यादिना सिचो लुक् ॥ "आतो लोप इटि च" इत्याकारलोपः ॥

अक्लेश्यमसिनाऽश्यन्तं कबन्धवधमभ्यधुः ।
धिङ् नः प्रपतनं घोरं क्लेदान्तत्वमनाथवत् ॥ ८० ॥

८०. अक्लेश्यमिति ॥ असिना खड्गेन कृतमिति शेषः । अत एवाक्लेश्यमक्लेशकरमाशुभावादिति भावः ॥ "कृत्यल्युटो बहुलम्" इति कर्त्तरि कृत्यः । किं चाऽश्यन्तमग्निसंस्कारान्तं तत्रापि रामहस्तकृतमिति भावः कबन्धवधमभ्यधुरभिहितवन्तः प्रशंसितवन्त इत्यर्थः । घोरं दारुणं नोऽस्माकं प्रपतनं शरीरपातं धिक् । अशस्त्रवधत्वादिति भावः । किं चानाथवदनाथानामिव क्लेदः पूतीभावः तदन्तत्वम् । अग्निसंस्काराभावादिति भावः ॥

ततो मन्दगतः पक्षी तेषां प्रायोपवेशनम् ।
अशंनीयमिवाशंसुर्महानायादशोभनः ॥ ८१ ॥

८१. तत इति ॥ ततस्तेषां प्रायोपवेशनानन्तरं मन्दगतो मन्दगमनः ॥ "नपुंसके भावे क्तः" इति क्तः ॥ महान्महाकायः न शोभत इत्यशोभनः अमङ्गलरूपः ॥ "कृत्यल्युटो बहुलम्" इति कर्त्तरि ल्युट् ॥ पक्षी संपातिर्नाम जटायोर्भ्राता गृध्रस्तेषां प्रायोपवेशनं मरणव्रतम् । भावे ल्युट् ।

---

१ अक्लिश्य° T4.
२ मन्दगतिः B.
३ पयःपानमिवा° T., G., Com.

पयःपानं क्षीरपानमिव भक्ष्यलाभात्तद्वच्छरीरसुखकरमित्यर्थः ॥ "कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम्" इति कर्मोपपदात्पिबतेर्भावे ल्युट् ॥ आशंसुरभिलाषुकः सन् ॥ "सनाशंसभिक्ष उः" इत्युः ॥ आयादायातः ॥

देहव्रश्चनतुण्डाग्रं तं विलोक्याशुभाकरम् ।
पापेगोचरमात्मानमशोचन् वानरा मुहुः ॥ ८२ ॥

८२. देहेति ॥ वृश्च्यते भिद्यतेऽनेनेति व्रश्चनम् । "करणाधिकरणयोश्च" इति करणे ल्युट् ॥ देहस्य व्रश्चनं देहव्रश्चनम् ॥ "कृद्योगादिषष्ठी समस्यते" इति समासः इध्मप्रव्रश्चनवत् । तादृक् तुण्डाग्रं यस्य तम् । अशुभाकरममङ्गलालयम् ॥ "पुंसि संज्ञायां घः प्रायेण" इति घः ॥ तं गृध्रं विलोक्य वानराः पापगोचरं पापाश्रयम् ॥ "गोचरसंचर—" इत्यादिना घप्रत्ययान्तो निपातः ॥ आत्मानं मुहुरशोचन् ॥

जटायुः पुण्यकृत्पक्षी दण्डकारण्यसंचरः ।
कृत्वा राघवकार्यं यः स्वरारूढोऽग्निसंस्कृतः ॥ ८३ ॥

८३. जटायुरिति ॥ संचरत्यस्मिन्निति संचरः संचारस्थानम् ॥ "गोचरसंचर—" इत्यादिना अधिकरणार्थे घान्तो निपातः ॥ दण्डकारण्यमेव संचरोऽस्येति सः जटायुर्नाम पक्षी गृध्रः पुण्यकृत् पुण्यं कृतवान् ॥ "सुकर्म—" इत्यादिना भूते क्विप् ॥ तथाहि यः जटायुः राघवकार्यं रामप्रयोजनं कृत्वा अग्निसंस्कृतो रामेण कृताग्निसंस्कारः सन् स्वः स्वर्गमारूढः ॥

नरकस्यावतारोऽयं प्रत्यक्षोऽस्माकमागतः ।
अचेष्टा यदिहान्यायादनेनात्स्यामहे वयम् ॥ ८४ ॥

८४. स्वयं तु पापकृदित्याहुः नरकस्येति ॥ अस्माकमयं प्रत्यक्षो नरकस्य रौरवादेरवतारोऽवतरणमार्गः ॥ "अवे तृस्त्रोर्घञ्" इति करणे घञ् ॥

---

१ पापे गोच° T₄. | २ नितरां मुहुः T₂.

आगतः प्राप्तः यद्यस्मादिहाद्रौ अचेष्टाः निश्चेष्टाः वयमन्यायादकारणात् ॥ "अध्यायन्याय—" इत्यादिना निपूर्वादिणः करणे घञन्तो निपातः ॥ अनेनात्स्यामहे भक्षिष्यामहे । अतो दुर्मरणहेतुत्वादस्माकमयं प्रत्यक्षं नरकद्वारमित्यर्थः । अदेः कर्मणि लृटि तङ् ॥

हृदयोदङ्कसंस्थानं कृतान्तानायसंनिभम् ।
शरीराखनतुण्डाग्रं प्राप्यामुं शर्म दुर्लभम् ॥ ८५ ॥

८५. हृदयेति ॥ हृदयस्य उदञ्च्यते उद्ध्रियतेऽनेनेत्युदङ्क उद्धरणी ॥ "उदङ्कोऽनुदके" इत्युत्पूर्वादञ्चतेः करणे घञन्तो निपातः ॥ तस्यैव संस्थानं संनिवेशो यस्य तं हृदयोद्धारकोदङ्कवद्वयङ्करमित्यर्थः ॥ कृतान्तस्यान्तकस्य आनीयते आकृष्यतेऽनेनेत्यानायो जालं जलजन्तुबन्धनम् । 'आनायः पुंसि जालं स्यात्' इत्यमरः ॥ "जालमानायः" इत्याङ्पूर्वान्नयतेः करणे घञन्तो निपातः ॥ तत्संनिभं तत्सदृशं तद्वत्प्राणाकर्षकमित्यर्थः । शरीरस्य आखन्यतेऽनेनेत्याखनं विदारणं क्रकचादिकम् ॥ "खनो घ च" इत्याङ्पूर्वात्खनतेः करणे घप्रत्ययः ॥ तदिव तुण्डाग्रं चञ्चुकोटिर्यस्य तममुं गृध्रं प्राप्य शर्म सुखं दुर्लभं जीवनं नास्तीत्यर्थः ॥ "न सुदुर्भ्यां केवलाभ्याम्" इति निषेधात् "उपसर्गात्खल्घञोः" इति नुम्न भवति । अत्रामुमिति पुल्लिङ्गनिर्देशात्तुण्डाग्रधर्म उदङ्कादिसाम्यमवयवतद्वतोरभेदोपचारात्पक्षिगतत्वेनोक्त इत्यनुसन्धेयम् ॥

ईषदाढ्यङ्करोऽप्येष न परत्रा[1]शुभक्रियः ।
अस्मानत्तुमितोऽभ्येति[2] परिग्लानो बुभुक्षया ॥ ८६ ॥

८६. ईषदिति ॥ किं च एष वानरगणः परत्राप्यकृच्छ्रेण सुखेनानाढ्यः आढ्यः कृतो विधात्रा ईषदाढ्यङ्करो न । इह तावदास्तां दैवेन परत्रापि सुखभाक् न कृत इत्यर्थः ॥ "कर्तृकर्मणोश्च भूकृञोः" इति करोतेः कर्मणीषदादौ चोपपदे खल्प्रत्ययः ॥ तथाहि अशुभक्रियः

१ परत्र शुभक्रियः T2, T4. | २ °मिहाभ्येति E2, E3.

पापकर्मा बुभुक्षया भोक्तुमिच्छया क्षुधा। भुजेः सन्नन्तात्स्त्रियामप्रत्यये टाप्। परिग्लायतीति परिग्लानः परिक्षीणः। बहुलग्रहणात्कर्त्तरि ल्युट्। निष्ठायां वा "संयोगादेरातो धातोर्यण्वतः" इति नत्वम्। एष पक्षीत्यनुवर्त्तते। अस्मानत्तुं भक्षयितुमितोऽभ्येतीत आगच्छति। दुर्मरणदोषात्परलोकोऽपि नास्माकमस्तीत्यर्थः॥

इति कृदधिकारः॥

संप्राप्य वानरान् पक्षी जगाद मधुरं वचः।
के यूयं दुरुपस्थाने मनसाप्यद्रिमूर्धनि[1]॥ ८७॥

८७. संप्राप्येति॥ अथ पक्षी वानरान्संप्राप्य मधुरं वचो जगाद। तदेवाह। मनसापि दुरुपस्थाने दुष्प्रापे गिरिमूर्धनि पर्वताग्रे यूयं के किमर्थमागताः किमिदमिह क्रियत इति शेषः॥

आत्मनः परिदेवध्वे कुर्वन्तो रामसंकथाम्[2]।
समानोदर्यमस्माकं जटायुं च स्तुथादरात्[3]॥ ८८॥

८८. अथ पुनः प्रकीर्णकाधिकारः। आत्मन इति॥ यूयं के रामसंकथाः रामसंबन्धिनीः कथाः कुर्वन्तः आत्मनः॥ "न संयोगाद्वमन्तात्" इति निषेधाच्छसि नाल्लोपः॥ परिदेवध्वे शोचथ। देवृ देवने। भौवादिकाल्लुटि ध्वमि टेरेत्वम्। किंचास्माकं समानोदरे शयितं समानोदर्यमेकोदरभ्रातरम्॥ "समानोदरे शयित ओ चोदात्तः" इति यत्प्रत्ययः॥ "विभाषोदरे" इति समानस्य विकल्पेन सभावाभावः। जटायुमादरात्स्तुथ च प्रशंसथ च। स्तौतेर्लटि थे शपो लुक्॥

शङ्काधवित्रवचनं[4] प्रत्यूचुर्वानराः खगम्।
वयं शत्रुलवित्रेणोद्दृता रामस्य भूपतेः॥ ८९॥

---

१ मनसा नगमूर्धनि T2, T3, T4.
मनसा गिरिमूर्धनि T., G., Com.
२ °संकथाः T., G., Com.
३ जटायुं च कथं स्तुथ E2.
जटायुं प्रस्तुथादरात् D.
४ वचनमित्यूचुर्वा° T2.

८९. शङ्केति ॥ वानराः धूयतेऽनेनेति धवित्रं विधूननम्। "अर्त्तिलूधूसूखनसहचर इत्रः" इति करणे धुनातेरित्रप्रत्ययः ॥ शङ्काधवित्रं हिंस्रत्वशङ्कानिराकरणं वचनं यस्य तं विश्वसनीयमित्यर्थः। खर्गं पक्षिणं वयं शत्रूणां लूयन्ते एभिरिति लवित्राश्छेदकाः। पूर्ववदित्रप्रत्ययः। त इषवो यस्य तस्य रामस्य भूपतेः स्वामिनो दूता इति प्रत्यूचुः ॥

केनापि दौष्कुलेयेन कुल्यां माहाकुलीं[1] प्रियाम्।
हृतां माहाकुलीनस्य[2] तस्य लिप्सामहे वयम् ॥ ९० ॥

९०. के यूयमित्यत्रोत्तरमुक्त्वा किमर्थमागता इत्यत्रोत्तरमाह केनापीति ॥ केनापि दौष्कुलेयेन दुष्कुलापत्येन ॥ "दुष्कुलाड्ढक्" इति ढक् ॥ हृतां कुल्याम्। अहार्थे साध्वर्थे वा यत्। माहाकुलीं महाकुलापत्यं महाकुलीनस्य महाकुलापत्यस्य ॥ "महाकुलादञ्खञौ" इति क्रमादञ्खञौ॥ तस्य रामस्य प्रियां सीतां वयं लिप्सामहे लब्धुमिच्छामः। लभेः सन्नन्ताल्लटि "सनि मीमा—" इत्यादिना इसादेशे "पूर्ववत् सनः" इति तङ् ॥

त्रिंशत्तममहर्यातं[3] मत्वा प्रत्यागमावधिम्।
अकृतार्था विषीदन्तः परलोकमुपास्महे ॥ ९१ ॥

९१. अथ किमिदमिह क्रियत इत्यत्रोत्तरमाचक्षते त्रिंशत्तममिति ॥ प्रत्यागमस्य प्रत्यागमनस्यावधिमवधीकृतं त्रिंशतोऽह्नां पूरणं त्रिंशत्तमम् ॥ "तस्य पूरणे डट्" इति डट् ॥ "विंशत्यादिभ्यस्तमडन्यतरस्याम्" इति डटस्तमडागमः ॥ अहर्दिनमतीतमतिक्रान्तं मत्वा ज्ञात्वा। अत्राहोतीतमिति सन्धिश्चिन्त्यः। "रोऽसुपि" इति रेफादेशे अहरतीतमिति भाव्यमिति। अकृतार्थाः मासात्प्रागेवाकृतप्रयोजनाः अत एव विषीदन्तो भग्नोत्साहाः सन्तः। 'विषादश्चेतसो भङ्ग उपायाभावनाशनैः' इति लक्षणात्। परलोकमुपास्महे उपसीदामः ॥

---

१ महाकुलीं B.
२ महाकु° B., c., T., G., Com.
३ अहोऽतीतं $T_3$, T., G., Com. अहो यातं $T_4$.

म्रियामहे न गच्छामः कौशल्यायनिवल्लभाम् ।
उपलम्भ्यामपश्यन्तः कौमारीं पततां वर ॥ ९२ ॥

९२. म्रियामह इति ॥ हे पततां पक्षिणां वर । अनूढपूर्वायाः स्त्रियाः वोढा कौमारः तस्य स्त्री कौमारी ॥ "कौमारापूर्ववचने" इति पाणिग्रहणापूर्वत्वेऽण्प्रत्ययान्तनिपाते ङीप् ॥ तां कौमारीं कोसलानां राजा कोसलस्तस्यापत्यं कौसल्यायनिरुत्तरकोसलेश्वरापत्यं दाशरथी रामः ॥ "कौसल्यकार्मार्याभ्यां च" इति परमप्रकृतेः कोसलशब्दादपत्यार्थे फिञ्प्रत्ययः । तत्सन्नियोगात्कोसलशब्दस्य कौसल्यभावनिपातः । अत एव भाष्यवार्त्तिकयोरपि "कोसलकर्मार—" इत्यादिना मूलप्रकृतेरेव प्रत्ययो दर्शितः । कौसल्याया अपत्यमित्यस्मिन्नर्थे फिञिति जयमङ्गलादयस्तदसत् । तदा स्त्रीभ्यो ढकि कौसलेय इति स्यादित्यास्तां तत् । तस्य वल्लभां दयितामुपलम्भ्यां प्रशस्ततया सर्वथा द्रष्टव्यामित्यर्थः ॥ "उपात्प्रशंसायाम्" इति लभेर्यकारादिप्रत्ययविषये नुमागमः ॥ अत एव प्रत्ययात्पूर्वं नुमि सत्यदुपधत्वाभावाद्यतो प्राप्तौ "ऋहलोर्ण्यत्" इतिण्यत् । यण्णतोः स्वरे विशेषः । अपश्यन्तोऽनुपलभमानाः । हेतौ शतृप्रत्ययः । म्रियामहे न गच्छामः । सामीप्ये लट् ॥

इति प्रकीर्णकाः ॥

## अथातिदेशिकङिदधिकारः ।

जगाद वानरान् पक्षी नाध्यगीढ्वं ध्रुवं स्मृतीः[1]
यूयं संकुटितुं यस्मात् कालेऽस्मिन्नध्यवस्यथ ॥ ९३ ॥

९३. जगादेति ॥ पक्षी संपातिर्वानरान् जगाद । किमिति यूयं ध्रुवं स्मृतीः धर्मशास्त्राणि नाध्यगीढ्वं नाधीतवन्तः । इणो लुङि "विभाषा लुङ्लृङोः" इति गाङादेशः "गाङ्कुट—" इत्यादिना सिचो ङित्त्वे

---

१ स्मृतिम् N.

"घुमास्था—" इत्यादिना ईकारः॥ "धि च" इति सिचसलोपः॥ "इणः षीध्वं—" इत्यादिना मूर्धन्यादेशः॥ यस्मादस्मिन्काले व्यापारकाले संकुटितुमवसत्तुम्। कुट कौटिल्ये॥ "गाङ्कुट—" इत्यादिना ङित्त्वान्न गुणः॥ अध्यवस्यथ यतध्वे। स्यतेर्लटि थप्रत्ययः॥

नायमुद्विजितुं कालः स्वामिकार्याद्भवादृशाम्।
हृतभार्ये च्युते राज्याद्रामे पर्युत्सुके भृशम्॥ ९४॥

९४. नेति॥ रामे स्वरूपत एवोपास्य इत्यर्थः राज्याच्च्युते राज्यभ्रष्टे एकाकिनीत्यर्थः तत्रापि हृतभार्ये अत एव भृशं पर्युत्सुके विरहदुःखिते सति भवादृशां प्रतीकारसमर्थानां स्वामिकार्यादुद्विजितुम्। ओविजी भयचलनयोः॥ "विज इट्" इतीटो ङित्त्वान्नोपधागुणः॥ अयं कालो न। निर्गुणं चापि भर्त्तारमापत्सु न परित्यजेदिति धर्मशास्त्रनादित्यर्थः किं पुनरीदृशं गुणाढ्यमिति भावः॥

यत्नं प्रोर्णवितुं तूर्णं दिशं कुरुत दक्षिणाम्।
प्रोर्णुवित्रीं दिवस्तत्र पुरीं द्रक्ष्यथ काञ्चनीम्॥ ९५॥

९५. यत्नमिति॥ किं तु दक्षिणां दिशं प्रोर्णुवितुमाच्छादयितुम्॥ "विभाषोर्णोः" इतीटो ङित्त्वपक्षे गुणप्रतिषेधादुवङादेशः। तूर्णं यत्नं कुरुत कुरुध्वम्॥ "सार्वधातुकमपित्" इति ङित्त्वाद्विकरणस्य गुणाभावः॥ धातोर्गुणे सति "अत उत्सार्वधातुके" इत्युकारः॥ तत्र दक्षिणस्यां दिशि दिवोऽन्तरिक्षस्य। कर्मणि षष्ठी। प्रोर्णवित्रीं स्वकान्त्याच्छादयित्रीम्। ऊर्णोतेस्तृचि ङीप्। इटो ङित्त्वाभावपक्षे गुणावादेशौ। काञ्चनस्य विकारं काञ्चनीं हिरण्मयीम्॥ "प्राणिरजतादिभ्योऽञ्" इत्यञ्॥ पुरं पुरीं द्रक्ष्यथ॥

---

१ प्रभु° E₂.
२ प्रोर्णुवितुं C., D., E₂, E₃, T., G., Com.
३ प्रोर्णवित्रीं T., G., Com., B.
४ पुरं Com.

## अथ किदधिकारः।

लङ्कां नाम्ना गिरेर्मूर्ध्नि राक्षसेन्द्रेण पालिताम्।
निर्जित्य शक्रमानीतां ददृशुर्या सुरस्त्रियः॥ ९६॥

९६. लङ्केति॥ सा पुरी नाम्ना लङ्केति प्रसिद्धिरुक्ता। गिरेस्त्रिकूटाद्रेर्मूर्ध्नि इति दुर्गत्वमुक्तम्। किं च राक्षसेन्द्रेण पालितेति स्वामिबलमुक्तम्। यां पुरीं शक्रं निर्जित्यानीता आहृताः सुरस्त्रियो ददृशुः शक्रपुरीं विस्मृत्याद्राक्षुरित्यर्थः। दृशेर्लिटि "असंयोगाल्लिट् कित्" इति कित्त्वाद्गुणाभावः॥

बभूव याधिशैलेन्द्रं मृदित्वेवेन्द्रगोचरम्।
कुषित्वा जगतां सारं सैकाँ शङ्के कृता भुवि॥ ९७॥

९७. बभूवेति॥ या पुरी अधिशैलेन्द्रं त्रिकूटाद्रौ। विभक्त्यर्थेऽव्ययीभावः। इन्द्रगोचरमिन्द्रालयममरावतीं मृदित्वा निष्पेष्य कृतेव बभूवेत्युत्प्रेक्षा॥ "इन्धिभवतिभ्यां च" इति लिटः कित्त्वान्न गुणः। अथवा जगतां सारं कुषित्वोत्कृष्योद्धृत्येत्यर्थः सा एका भुवि कृता निर्मिता शङ्के इत्यपरोत्प्रेक्षा। इवशङ्के शब्दावुत्प्रेक्षायाम्॥ "मृडमृदगुधकुषक्लिशवदवसः क्त्वा" इति क्त्वः कित्त्वान्न मृदिकुष्योर्गुणः॥

अमृडित्वा सहस्राक्षं क्लिशित्वा कौशले निजे।
उदित्वालं चिरं यत्नात् सैका धात्रा विनिर्मिता॥ ९८॥

९८. अमृडित्वेति॥ सहस्राक्षममृडित्वा असुखयित्वा तन्नगरादुत्कृष्टनिर्माणेन तस्य दुःखमुत्पाद्येत्यर्थः। मृड सुखने इति धातोः क्त्वाप्रत्यये नञ्समासः। 'अनञ्पूर्वे' इति निषेधान्न क्त्वो ल्यबादेशः। निजे स्वकीये कौशले च विषये चिरं क्लिशित्वा परिश्रम्य चिरमभ्यस्येत्यर्थः। अलमुदित्वोक्त्वा एवं करिष्यामीत्युद्धोष्येत्यर्थः यत्नात् सा

१ लङ्का T., G., Com.
२ नाम T₃.
३ पालिता T., G., Com.
४ °मानीतां T₂.
५ °न्द्रगोपुरम् B.
६ कुषित्वा D.
७ सैषा T₂, T₃.
८ कौशलैर्निजैः N., D.

पुरी एका अद्वितीया धात्रा विनिर्मिता। उत्प्रेक्षा। इवेवाद्यप्रयोगात् गम्या॥ "मृडमृद—" इत्यादिना सर्वत्र क्त्वः कित्त्वान्न गुणः॥

मुषित्वा धनदं पापो यां गृहीत्वावसद्विषन्।
तां रुदित्वेव शक्रेण यात लङ्कामुपेक्षिताम्॥ ९९॥

९९. मुषित्वेति॥ पापः क्रूरः। 'नृशंसो घातुकः क्रूरः पापः' इत्यमरः। द्विषन्नमित्रो रावणः॥ "द्विषोऽमित्रे" इति शतृप्रत्ययः। यां लङ्कां धनदं कुबेरं मुषित्वा चोरयित्वा गृहीत्वादाय। 'जिदण्डिरुधिप्रच्छि-चिञ्ब्रूशासु-जिमथ्मुषाम्। द्विकर्मसु पचादीनां चोपसंख्यानमिष्यते' इति मुषिग्रह्योर्द्विकर्मकत्वम्। अवसत् यस्यामवसदित्यर्थः। 'देश-कालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्' इति वसेः सकर्मकत्वम्। पूर्वं लङ्का कौबेरी रावणेनाच्छिद्य गृहीतेति कथात्रानुसंधेया। अथ शक्रे-णापि रुदित्वा शोचित्वेवोपेक्षितामसाध्यतयावधीरितां लङ्कां यात गच्छत॥ सर्वत्र "रुदविद—" इत्यादिना क्त्वः कित्त्वान्न गुणः॥

विदित्वा शक्तिमात्मीयां रावणं विजिघृक्षवः।
उक्तं पिपृच्छिषूणां वो मा स्म भूत सुषुप्सवः॥ १००॥

१००. विदित्वेति॥ आत्मीयां शक्तिं विदित्वा रावणं विजिघृक्षवः विग्रहीतुं विरोद्धुमिच्छवो यूयं स्वप्तुमिच्छवः सुषुप्सवः प्रमत्ताः मा स्म भूत किं तु जागरूकाः स्तेत्यर्थः॥ "स्मोत्तरे लङ् च" इति चका-राल्लुङ्॥ पिपृच्छिषूणां प्रष्टुमिच्छूनां जिज्ञासूनामित्यर्थः॥ "किरश्च पञ्चभ्यः" इति प्रच्छेः सनीडागमः। वो युष्माकमुक्तमुपदिष्टम्। 'नापृष्टः कस्य चिद्ब्रूयात्' इति भावः। अत्रापि "रुदविद—" इत्या-दिना क्त्वासनोः कित्त्वाद्विदादीनां गुणाभावः प्रच्छेः स्वपेश्च संप्र-सारणम्॥

नाविंविदिषुमभ्येति सम्पद्रुरुदिषुं नरम्।
किं मुमुषिषुवद्यात द्विषो नापचिकीर्षया॥ १०१॥

---

१ द्विषत् T₂.
२ अभ्येति नाविविदिषुं T., G., Com.
३ न द्विषोऽपचि॰ D. द्विषो नोऽपचि॰ T₂.

१०१. अभ्येतीति ॥ अविविदिषुं कार्याकार्यमजिज्ञासुमविवेकिनमित्यर्थः । रुरुदिषुं रोदितुमिच्छुमनुद्योगिनमित्यर्थः । ईदृशं नरं पुरुषं संपल्लक्ष्मीर्नाभ्येति नोपैति । 'निवसन्ति पराक्रमाश्रयानविषादेन समं समृद्धयः' इति भावः । मोषितुमिच्छुर्मुमुषिषुः स्तेनस्तद्वत्तथा रन्ध्रान्वेषिणः सन्त इत्यर्थः । द्विषः शत्रोरपचिकीर्षया अपकर्तुमिच्छया ॥ "इको झल्" इति सनः कित्त्वान्न गुणः ॥ "अज्झनगमां सनि" इति दीर्घः । अन्यत्र पूर्ववत् "रुदविद—" इत्यादिना सनः कित्त्वादगुणः ॥ किं न यात न गच्छत शीघ्रं गच्छतेत्यर्थः । विधौ लोट् ॥

बुभुत्सवो ध्रुवं[1] सीतां भुत्सीध्वं प्रब्रवीमि वः ।
मा च[2] भुद्ध्वं मृषोक्तं नः[3] कृषीढ्वं स्वामिने[4] हितम् ॥ १०२ ॥

१०२. बुभुत्सव इति ॥ ध्रुवं सत्यं सीतां बुभुत्सवो बोद्धुमिच्छवस्ते इत्यर्थः ॥ "हलन्ताच्च" इति बुधः सनः कित्त्वान्न लघूपधगुणः ॥ "एकाचो बशः—" इत्यादिना भष्भावः ॥ "खरि च" इति धकारस्य चर्त्वम् ॥ भुत्सीध्वं जानीध्वमन्विष्य पश्यतेत्यर्थः । आशीरर्थो न विवक्षितः ॥ "लिङ्सिचावात्मनेपदेषु" इति लिङः कित्त्वान्न गुणः ॥ "लिङः सीयुट्" इति सीयुट् ॥ यलोपः । शेषं पूर्ववत् । वो युष्मभ्यं प्रब्रवीमि हितमुपदिशामीत्यर्थः । नोऽस्माकमुक्तमुक्तिं मृषानृतं मा स्म भुद्ध्वं न जानीध्वमित्यर्थः ॥ "स्मोत्तरे लङ् च" इति चकाराल्लुङ् । "लिङ्सिचौ—" इत्यादिना सिचः कित्त्वान्न लघूपधगुणः ॥ "धि च" इति सलोपः ॥ भष्भावश्च । स्वामिने रामाय हितम् । हितयोगे चतुर्थी । कृषीढ्वं कुरुध्वमित्यर्थः । अत्राप्याशीरर्थो न विवक्षितः ॥ "उश्च" इति लिङः कित्त्वान्न गुणः ॥ "लिङः सीयुट्" इति सीयुट् ॥ "इणः षीध्वम्—" इत्यादिना मूर्धन्यादेशः ॥

---

१ ध्रुवं T., G., Com.
२ मावभुद्ध्वं T₂.
३ स्म T., G., Com., T₂.
४ स्वामिनो D., T₂, c., B.

समगध्वं पुरः शत्रोर्मोदयध्वं रघूत्तमम्।
नोपायध्वं भयं सीतां नोपायंस्त दशाननः॥ १०३॥

१०३. समगध्वमिति॥ शत्रोः पुरः समगध्वं संगस्यध्वे संगताः स्थास्यध्व इत्याशास्महे इत्यर्थः॥ "समो गम्यृच्छि—" इत्यादिना संपूर्वाद्गमेरकर्मकाल्लुङि तङ्॥ "आशंसायां भूतवच्च" इति भविष्यदर्थे भूतवत्प्रत्ययः॥ "वा गमः" इति सिचः कित्त्वात् "अनुदात्तोपदेश—" इत्यादिना अनुनासिकलोपः॥ "ह्रस्वादङ्गात्" इति सलोपः॥ रघूत्तमं रामं मोदयध्वं सीतान्वेषणेनानन्दयत। मुद हर्षे। ण्यन्ताल्लोटि "णिचश्च" इति तङ्। सुबोधिनीकारस्तु मोदाहध्वमिति पाठं दृष्ट्वा किदधिकारलोभात्तथैव व्याचष्ट। रघूत्तमं मोदाहध्वं प्रायोपवेशनेन सीतावार्तालोडनाद्रामं मा वधिष्ट। उदाङ्पूर्वाद्धन्तेर्लुङि "आङो यमहनः" इति तङि ध्वमि "हनः सिच्" इति सिचः कित्त्वादनुनासिकलोपे "ह्रस्वादङ्गात्" इति सलोपः। 'आहध्वं मा रघूत्तमम्' इति क्वचित्पाठः। अत्राकर्मकाधिकारस्य भट्टिकविनानुमतत्वात् सकर्मकत्वे न तङित्यन्ये तु साहसभीरवोऽधिकारभ्रंशेऽपि पूर्वपाठमेवाश्रिता इत्यास्तां तत्। भयं मोपायध्वं धातूनामनेकार्थत्वान्मा गन्धयतेत्यर्थः। गन्धनं सूचनमाविष्करणमिति यावत्॥ "आङो यमहनः" इत्याङ्पूर्वाद्यमेर्लुङि सकर्मकत्वादात्मनेपदं चिन्त्यम्॥ "यमो गन्धने" इति सिचः कित्त्वादनुनासिकलोपे सलोपः। तथा दशाननः सीतां मोपायंस्त न स्वीकरोतु तस्य दौरात्म्यादिति भावः॥ "उपाद्यमः स्वकरणे" इति उपपूर्वाद्यमेरात्मनेपदम्॥ "विभाषोपयमने" इति सिचः पक्षे कित्त्वाभावान्नानुनासिकलोपो नापि सलोपः॥ उभयत्रापि "न माङ्योगे" इत्यडभावः॥

ततः मास्थिषताद्रीन्द्रं महेन्द्रं वानरा द्रुतम्।
सर्वे किलोंकिलायन्तो धैर्यं चाधिषताधिकम्॥ १०४॥

---

१ मादयध्वं $T_2$.
२ रघूत्तमौ $E_2$.
३ मोपायध्वं $T_2$, $T_3$, T., G., Com.
४ मोपायंस्त T., G., Com.
५ किलिकिला $T_2$, $T_3$, $T_4$.

१०४. तत इति ॥ ततः संपातिवाक्यश्रवणानन्तरं सर्वे वानराः किलकिलायन्तः किलकिलशब्दं कुर्वाणाः ॥ "अव्यक्तानुकरणात्—" इत्यादिना डाचि "लोहितादिडाज्भ्यः क्यष्" इति क्यषि "वा क्यषः" इति पक्षे परस्मैपदम् । महेन्द्रं महेन्द्राख्यमद्रीन्द्रं प्रति द्रुतं प्रास्थिषत प्रस्थिताः ॥ "समवप्रविभ्यः स्थः" इति तिष्ठतेर्लुङि तङ् ॥ अधिकं धैर्यं चाधिषत दधिरे ॥ "स्थाघ्वोरिच्च" इत्युभयत्रेत्वं सिचः कित्त्वं च तस्मान्न गुणः ॥

निकुञ्जे तस्य वर्त्तित्वा रम्ये प्रक्ष्वेदिताः परम् ।
मणिरत्नाधिशयितं प्रत्युदैक्षन्त तोयधिम् ॥ १०५ ॥

१०५. निकुञ्ज इति ॥ रम्ये तस्य गिरेर्निकुञ्जे गृहकल्पे तरुषण्डे । 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इत्यमरः। वर्त्तित्वा स्थित्वा विहृत्येत्यर्थः॥ "न क्त्वा सेट्" इति कित्त्वप्रतिषेधाद्गुणः॥ परमत्यन्तं प्रक्ष्वेदिताः कृतसिंहनादाः । क्ष्विदः कर्त्तरि क्तः॥ "निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः" इति निष्ठायां कित्त्वप्रतिषेधाद्गुणः॥ मणीनां पद्मरागादीनां रत्नानां स्वजातिश्रेष्ठवस्तूनां च । 'रत्नं स्वजातिश्रेष्ठे च' इत्यमरः । अधिशेरतेऽत्रेत्यधिशयनमधिष्ठानम् ॥ "क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः" इति शेतेर्ध्रौव्यार्थादकर्मकापराख्यादधिकरणे क्तः ॥ "निष्ठा शीङ्—" इत्यादिना कित्त्वप्रतिषेधाद्गुणः॥ तोयधिं समुद्रं प्रत्युदैक्षन्त कियानयं कीदृशो वेति समन्तादवैक्षन्तेत्यर्थः ॥

अमर्षितमिव घ्नन्तं तटाद्रीन् सलिलोर्मिभिः ।
श्रिया[1] समग्रं द्युतितं[2] मदेनेव प्रलोठितम्[3] ॥ १०६ ॥

१०६. अथैनं चतुर्भिर्विशिनष्टि अमर्षितमित्यादिभिः ॥ सलिलानामूर्मिभिस्तटाद्रीन् तटस्थान्पर्वतान् घ्नन्तं ताडयन्तमत एवामर्षितं कुपितमिव स्थितमित्युत्प्रेक्षा । मृषेः कर्त्तरि क्तः ॥ "मृषस्तितिक्षायाम्" इति

१ क्रिया E2.
२ समग्रद्युतितं T2, T., G., Com.
३ प्रलोटितम् D.

कित्त्वप्रतिषेधाद्गुणः ॥ ततो नञ्समासः । श्रिया रत्नादिसम्पदा समग्रं द्युतितं द्योतनं यस्य तं समग्रद्युतितमित्यर्थः । द्युतेर्भावे क्तः ॥ "उदुपधाद्भावादिकर्मणोरन्यतरस्याम्" इति पक्षे कित्त्वाद्गुणाभावः ॥ मदेनेवेति हेतूत्प्रेक्षा । प्रलोठितं प्रघूर्णितम् । लुठेः आदिकर्मणि क्तः ॥ "उदुपधात्—" इत्यादिना कित्त्वाभावपक्षे गुणः ॥

पूतं शीतैर्नभस्वद्भिः ग्रन्थित्वेव स्थितं रुचः ।
गुम्फित्वेव निरस्यन्तं तरङ्गान् सर्वतो मुहुः ॥ १०७ ॥

१०७. पूतमिति ॥ पुनः शीतैः शीतलैर्नभस्वद्भिर्वायुभिः । हेतौ कर्त्तरि वा तृतीया । पूतं पवित्रं हृद्यमित्यर्थः । पूङः कर्त्तरि कर्मणि वा क्तः ॥ "पूङश्च" इति विकल्पादिडभावे "पूङः क्त्वा च" इति सेटोरेव क्त्वानिष्ठयोः कित्त्वनिषेधादनिटोः कित्त्वान्न गुणः । पुनः रुचो दीप्तीः ग्रन्थित्वा सन्दर्भ्येव स्थितं तेजःस्रजमिव स्थितमित्युत्प्रेक्षा । पुनस्तरङ्गान् गुम्फित्वेव एकत्र क्रोडीकृत्येव मुहुः सर्वतो निरस्यन्तं क्षिपन्तम् । ग्रन्थिगुम्फ्योर्नकारोपधयोः "नोपधात्थफान्ताद्वा" इति विकल्पात्कित्त्वाभावपक्षे "अनिदिताम्—" इत्यादिना नोपधानकारलोपः ॥

वञ्चित्वाप्यम्बरं दूरं स्वस्मिंस्तिष्ठन्तमात्मनि ।
तृषित्वेवानिशं स्वादु पिबन्तं सरितां पयः ॥ १०८ ॥

१०८. वञ्चित्वेति ॥ पुनः अम्बरमाकाशं दूरं यथा तथा वञ्चित्वापि लङ्घित्वापि ॥ "वञ्चिलुञ्च्यृतश्च" इति वञ्चेः क्त्वायाः कित्त्वप्रतिषेधान्नोपधानकारलोपः ॥ स्वस्मिन्नात्मनि पुनः स्वरूपे तिष्ठन्तम् । निरन्तरं पतनोत्पतने कुर्वन्तमित्यर्थः । पुनः तृषित्वा पिपासित्वेवेत्युत्प्रेक्षा ॥ "तृषिमृषिकृशेः काश्यपस्य" इति क्त्वः पक्षे कित्त्वान्न लघूपधगुणः । स्वादुं मधुरं सरितां गङ्गादीनां पयो जलमनिशं पिबन्तं स्वयं लवणोदत्वादिति भावः ॥

द्युतित्वा शशिना नक्तं रश्मिभिः परिवर्धितम् ।
मेरोर्जेतुमिवाभोगमुच्चैर्दिद्योतिषुं मुहुः ॥ १०९ ॥

---

१ गुपित्वेव T2. | २ कुञ्चित्वे° E2.

१०९. द्युतित्वेति ॥ शशिना कर्त्रा नक्तं द्युतित्वा द्योतित्वा अत एव रश्मिभिः किरणैः परिवर्धितं पुनः मेरोराभोगं विस्तारमौन्नत्यमित्यर्थः जेतुमतिशयितुमिवेति फलोत्प्रेक्षा । मुहुरुच्चैरूर्ध्वं दिद्योतिषु द्योतितुं वर्धितुमिच्छुमित्यर्थः । द्युतः सन्नन्तादुप्रत्ययः । तस्योदुपधत्वात् ॥ "रलो व्युपधाद्धलादेः संश्च" इति क्त्वासनोः सेटोः पक्षे कित्त्वाद् द्युतित्वेत्यत्र न लघूपधगुणः दिद्योतिषुमित्यत्र गुणः ॥

विलोक्य सलिलोच्चयानधिसमुद्रमभ्रंलिहान्
भ्रमन्मकरभीषणं समधिगम्य चाधः पयः ।
गमागमसहं द्रुतं कपिवृषाः परिप्रैषयन्
गजेन्द्रगुरुविक्रमं तरुमृगोत्तमं मारुतिम् ॥ ११० ॥

११०. विलोक्येति ॥ कपिवृषाः कपिपुङ्गवाः अधिसमुद्रं समुद्रे । विभक्त्यर्थेऽव्ययीभावः । अभ्रं लिहन्तीत्यभ्रंलिहानभ्रङ्कषान् ॥ "वहाभ्रे लिहः" इति खशि मुमागमः ॥ सलिलोच्चयान् जलोच्छ्रायान् ॥ "एरच्" इत्येरच् ॥ तथा भ्रमद्भिर्मकरैर्भीषणं भयङ्करम् । नन्द्यादित्वाल्ल्युः । उच्चैरुन्नतं पयश्च विलोक्य गजेन्द्रः ऐरावणः तद्वद्गुरुविक्रममप्रतिहत-गतिमत एव तरुमृगेषु कपिषूत्तमं श्रेष्ठं मारुतिं हनूमन्तं गमागमयोर्गमनागमनयोः सहं क्षमम् । पचाद्यच् । समधिगम्य निश्चित्य द्रुतं परिप्रैषयन् प्रेषितवन्तः । इषु गतौ । ण्यन्ताल्लङ् ॥ पृथ्वीवृत्तम् । 'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः' इति लक्षणात् ॥

इति भट्टिकाव्येऽधिकारकाण्डे सीतान्वेषणो नाम
सप्तमः सर्गः ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचल
मल्लिनाथसूरिविरचिते भट्टिकाव्यव्याख्याने
सर्वपथीनाख्याने सप्तमः सर्गः ॥

---

१ चाधः° D. चोच्चैः° T., G., Com.

२ द्विजेन्द्र $T_2$, $T_3$, $T_4$.

॥ श्रीः ॥

# अथाष्टमः सर्गः ।

अगाधत ततो व्योम हनूमानुरुविग्रहः ।
अत्यशेरत तद्वेगं न सुपर्णार्कमारुताः ॥ १ ॥

१. अगाहतेति ॥ ततः कपिवराभ्यनुज्ञानन्तरमुरुविग्रहोऽब्धिलङ्घनोचितमहाकायो हनूमान् व्योमाकाशमगाहत प्राविशत् । तस्य हनूमतो वेगं सुपर्णार्कमारुताः नात्यशेरत तेऽप्येनमतिशयितुं न शेकुरित्यर्थः । गाहेः शीङश्च लङि क्रमात् "अनुदात्तङित आत्मनेपदम्" ॥ "शीङो रुट्" इति रुडागमः ॥

अभायत यथार्केण सुप्रातेन शरन्मुखे ।
गम्यमानं न तेनासीदगतं क्रामता पुरः ॥ २ ॥

२. अभायतेति ॥ तेन हनूमता शरन्मुखे शरदारम्भे शोभनं प्रातर्यस्य तेन सुप्रातेन निर्मेघोदयेनार्केण यथार्केणेवाभायत अदीप्यत । कुतः । यत्पुरः क्रामता आक्रामता तेन गम्यमानमगतं गन्तव्यं च नासीत् । गतिवेगेन सर्वं गतमेव भवतीत्यर्थः । भातेर्गमेश्च क्रमात् "भावकर्मणोः" इत्यात्मनेपदम् ॥ अगतस्यैकदागतत्वासंबन्धेऽपि संबन्धोक्तेरतिशयोक्तिभेदोऽलङ्कारः ॥

वियति व्यत्यतन्वातां मूर्त्ती हरिपयोनिधी ।
व्यसैतां चोत्तमं मार्गमर्केन्द्रेन्दुनिषेवितम् ॥ ३ ॥

३. वियतीति ॥ हरिपयोनिधी हनूमत्सागरौ वियत्याकाशे मूर्त्ती शरीरे व्यत्यतन्वातां मिथो मत्सराद्व्यतिहारेणावर्धयतामित्यर्थः । तनोतेर्लङि "कर्त्तरि कर्मव्यतिहारे" इति तङ् । परस्परकरणं कर्म-

---

१ अगाहत T., G., Com.
२ विक्रमः B.
३ शरन्मुखे C.

व्यतिहारः । किं चोत्तममत्युन्नतमर्केन्द्रेन्दुभिर्निषेवितं मार्गं तत्संचारपथं व्यत्यैतामन्योन्यमत्यक्रामताम् । इणो गत्यर्थात्कर्मव्यतिहारे लङि तसस्तामादेशः ॥ "न गतिहिंसार्थेभ्यः" इति निषेधान्न तङ् ॥

व्यतिजिग्ये समुद्रोऽपि न धैर्यं तस्य गच्छतः ।
अगच्छन्नास्य न गतं प्रचण्डोऽपि प्रभञ्जनः ॥ ४ ॥

४. व्यतीति ॥ गच्छतस्तद्गतिप्रतिबन्धाय वर्धमानमात्मानं विजित्य लङ्घयतस्तस्य मारुतेः धैर्यमुत्साहं समुद्रोऽपि न व्यतिजिग्ये स्वजयिनं तं प्रतिजेतुं न शशाकेत्यर्थः ॥ "कर्त्तरि कर्मव्यतिहारे" इति जयतेर्लिटि तङ् ॥ किं च गच्छत आत्मानमतीत्य धावतस्तस्य गतं गतिं च प्रचण्डः प्रभञ्जनोऽपि चण्डमारुतोऽपि न व्यत्यगच्छत् न व्यतिचक्राम ॥ "न गतिहिंसार्थेभ्यः" इति प्रतिषेधात्कर्मव्यतिहारेऽपि न गमेरात्मनेपदम् ॥

व्यतिघ्नतीं व्यतिघ्नन्स राक्षसीं पवनात्मजः ।
जघानाविश्य वदनं निर्यान् भित्त्वोदरं द्रुतम् ॥ ५ ॥

५. व्यतिघ्नतीमिति ॥ स पवनात्मजो हनूमान् व्यतिघ्नतीं घाते घातं कुर्वतीम् । व्यतिपूर्वाद्धन्तेः शतरि ङीप् । व्यतिशब्दः कर्मव्यतिहारद्योतनार्थः । राक्षसीं समुद्रादुत्थितां काञ्चन सिंहिकाख्यां नक्तंचरीं व्यतिघ्नन् स्वयमपि घाते घ्नन्नेव । पूर्ववद्धन्तेः शतृप्रत्ययः ॥ "उगिदचाम्—" इत्यादिना शतुर्नुमागमः ॥ "न गतिहिंसार्थेभ्यः" इति निषेधादुभयत्र कर्मव्यतिहारेऽपि नात्मनेपदम् ॥ वदनमाविश्य द्रुतमुदरं भित्त्वा निर्यान्निर्गच्छन् । यातेः शतृप्रत्ययः । जघान हतवान् ॥

अन्योन्यं स्म व्यतियुतः शब्दान् शब्दैस्तु भीषणान् ।
उदन्वांश्चानिलोद्धूतो म्रियमाणा च राक्षसी ॥ ६ ॥

---

१ व्यत्यगच्छन्न च N., T2, T4, T., G., Com.
अत्यागच्छन्न न गतं T3.
२ व्यतिघ्नंस्तां D.
व्यतिघ्नन्तं E2.
पथि घ्नन्तं B., E3, T1, N., C.
३ शब्दैः शब्दान्सुभीषणान् T2, T3, T4.
४ म्रियुषी च निशाचरी T2, T3, T4, T., G., Com.

६. अन्योन्यमिति ॥ अनिलोद्धूतः उदकानि धीयन्तेऽस्मिन्नित्युदन्वान् उदधिश्च ॥ "उदन्वानुदधौ च" इति द्धात्यर्थे मतावुदन्नादेशनिपातः ॥ प्रेयुषी प्रेता मृता सती ॥ "उपेयिवान्—" इत्यादिना कसन्तनिपातने ङीप् । निशाचरी राक्षसी चान्योन्यमन्योन्यस्येत्यर्थः ॥ "कर्मव्यतिहारे सर्वनाम्नो द्वे भवतः समासवच्च बहुलम् । बहुलग्रहणाद्यदा न समासवत्ता तदा पूर्वपदस्य प्रथमैकवचनमुत्तरपदस्याम्भाव इति वक्तव्यम्" । विभीषणानतिभयङ्करान् । नन्द्यादित्वाह्युः । शब्दान् घोषान् शब्दैर्घोषैः सह । अत्रापि विभीषणैरिति विभक्तिपरिणामेन योज्यम् । व्यतियुतः स्म मिश्रीकुरुतः स्म । यु मिश्रण इति धातोः "लट् स्मे" इति भूते लट् अत्रापि कर्मव्यतिहारे आत्मनेपदस्य "इतरेतरान्योऽन्योपपदाच्च" । इति प्रतिषेधः ॥

न्यविक्षत महाग्राहसङ्कुलं मकरालयम् ।
सैका[1] बहूनां कुर्वाणा[2] नक्राणां स्वाशितम्भवम्[3] ॥ ७ ॥

७. न्यविक्षतेति ॥ एका सती बहूनां नक्राणां जलग्राहाणामाशिताः भुक्तवन्तः । आङ्पूर्वादश्नातेः कर्तरि क्तः । आशितानां भवनमाशितम्भवमाशितत्वम् ॥ "आशितेः भुवः करणभावयोः" इति खचि मुमागमः ॥ तं कुर्वाणा एकापि बहुभोजनपर्याप्तेति तस्याः कायाधिक्यमुक्तम् । सा राक्षसी । गृह्णन्तीति ग्राहाः जलचराः ॥ "विभाषा ग्रहः" इति ग्रहेर्जलचरे कर्तरि णप्रत्ययः ॥ महद्भिस्तैः संकुलं मकरालयं समुद्रं न्यविक्षत प्राविक्षत् । विशेर्लुङि "नेर्विशः" इत्यात्मनेपदम् ॥ "शल इगुपधादनिटः क्सः" इति क्सः ॥

कृतेनोपकृतं वायोः[4] परिक्षीणानमुत्थितम् ।
पित्रा संरक्षितं शक्रात्स मैनाकाद्रिमैक्षत ॥ ८ ॥

---

१ एका T4. E2, E3.
२ नक्राणां कुर्वाणा B.
३ नक्राण्यमाशि° C., T., G., Com.
४ साधोः T2.

८. कृतेनेति॥ सः हनूमान् पित्रा स्वजनकेन वायुना शक्राद्गोत्रभिदः सकाशात्संरक्षितं पक्षच्छेदकाले वेगादादाय समुद्रे गुप्तमत एव वायोः कर्तुरुपकृतमुपकारं पूर्वोक्तं रक्षणरूपं कृतेन प्रत्युपकारेण विश्रामदानरूपेण। उभयत्र भावे क्तः। परिक्रीणानं विनिमिन्वन्तम्। उपकारस्य प्रत्युपकारं कुर्वाणमित्यर्थ॥ "परिव्यवेभ्यः क्रियः" इति क्रीणातेरात्मनेपदम्॥ शानच्। उत्थितं प्रत्युपकारार्थमेव समुद्रादुद्भूतं मैनाकाद्रिमैक्षताद्राक्षीत्॥

खं पराजयमानोऽसावुन्नत्या पवनात्मजम्।
जगादाद्रिर्विजेषीष्ठा मयि विश्रम्य वैरिणम्॥ ९॥

९. खमिति॥ उन्नत्या निजौन्नत्येन खमाकाशं पराजयमानः परिभवन्नाच्छादयन्नित्यर्थः॥ "विपराभ्यां जेः" इत्यात्मनेपदम्॥ असावद्रिर्मैनाकः पवनात्मजं हनूमन्तं जगाद। किमिति। हे सौम्य मयि विश्रम्य श्रान्तिमपनीय वैरिणं रावणं विजेषीष्ठाः विजयस्व विजेतुं गच्छेत्यर्थः। विपूर्वाज्जयतेराशीर्लिङ्। पूर्ववत्तङ्॥

फलान्यादत्स्व चित्राणि परिक्रीडस्व सानुषु।
साध्वनुक्रीडमानानि[१] पश्य[२] वृन्दानि पक्षिणाम्॥ १०॥

१०. पुनरष्टभिस्तदेवाह फलानीत्यादिभिः॥ हे सौम्य चित्राणि विविधानि फलान्यादत्स्व गृहाण। आङ्पूर्वाद्ददातेर्लोटि थासि "आङो दोऽनास्यविहरणे" इत्यात्मनेपदम्। सानुष्वनुक्रीडमानानां विहरतां पक्षिणां वृन्दानि पश्यन् साधु परिक्रीडस्व विहर॥ "क्रीडोऽनुसंपरिभ्यश्च" इत्यात्मनेपदम्॥

क्षणं भद्रावतिष्ठस्व ततः प्रस्थास्यसे[३] पुनः।
न तत्संस्थास्यते[४] कार्यं दक्षेणोरीकृतं त्वया॥ ११॥

---

१ °क्रीडमानानां T., G., Com.
२ पश्यन् T., G., Com., T₂.
३ प्रस्थास्यते T₂.
४ च सं° D., E₃.
न सं° T₄, T., G., Com.

११. क्षणमिति ॥ हे भद्र मङ्गलमूर्त्ते क्षणमवतिष्ठस्व विश्राम्येत्यर्थः। ततो विश्रामानन्तरं पुनः प्रस्थास्यसे प्रयास्यसे । दक्षेण क्षिप्रकारिणा त्वया उरीकृतमङ्गीकृतं कार्यं सीतान्वेषणकृत्यं कर्तुं । न न संस्थास्यते न समाप्तं भविष्यतीति न किं तु भविष्यत्येवेत्यर्थः । 'संस्था व्यवस्थाप्रणिधिसमाप्त्याकारमृत्युषु' इति यादवः । एतावता दक्षस्य ते न कोऽपि कार्यप्रतिबन्ध इत्यर्थः । 'संभाव्यनिषेधनिवर्त्तने द्वौ प्रतिषेधौ' इति वामनः । संपूर्वात्तिष्ठतेः कर्त्तरि लृट् । सर्वत्र "समवप्रविभ्यः स्थः" इति तङ् ॥

त्वयि नस्तिष्ठते प्रीतिस्तुभ्यं तिष्ठामहे वयम् ।
उत्तिष्ठमानं मित्रार्थे कस्त्वां न बहु मन्यते ॥ १२ ॥

१२. त्वयीति ॥ हे प्राज्ञ नोऽस्माकं प्रीतिः प्रीतियुक्ता चित्तवृत्तिस्त्वयि तिष्ठते सर्वकार्यसंशयेषु स्थेये निर्णेतरि त्वयि तिष्ठते त्वद्वाक्ये वर्त्तत इत्यर्थः । इति वयं तुभ्यं तिष्ठामहे स्वाभिप्रायं प्रकाशयामः ॥ "प्रकाशनस्थेयाख्ययोश्च" इति यथायोगमुभयत्रात्मनेपदम् ॥ किं च मित्रार्थे मित्रप्रयोजने उत्तिष्ठमानमुद्युञ्जानम् ॥ "उदोऽनूर्ध्वकर्मणि" इत्यात्मनेपदम् ॥ त्वां को न बहु मन्यते पितृवत्त्वमपि मित्रोपकारित्वात्तद्वदेव सर्वमान्य इत्यर्थः ॥

ये सूर्यमुपतिष्ठन्ते मन्त्रैः संध्यात्रयं द्विजाः ।
रक्षोभिस्तापितास्तेऽपि सिद्धिं ध्यायन्ति तेऽधुना ॥ १३ ॥

१३. य इति ॥ ये द्विजाः संध्यात्रयं त्रिसंध्यम् । अत्यन्तसंयोगे द्वितीया । मन्त्रैः सूर्यमुपतिष्ठन्ते उपासते ॥ "उपान्मन्त्रकरणे" इत्यात्मनेपदम् ॥ रक्षोभिस्तापिताः उपद्रुतास्ते द्विजा अप्यधुना ते तव सिद्धिं रक्षोविजयकार्यसिद्धिं ध्यायन्ति निरन्तरं चिन्तयन्ति ॥

अभ्यग्रमुपतिष्ठस्व वीरं वायोरहं सुहृत् ।
रविर्वितपतेऽत्यर्थमाश्वस्य मयि गम्यताम् ॥ १४ ॥

१ बहु न B.
२ धीर C., E₃.
३ °माश्वस्य C.
°र्थं विश्रम्य D., E₃.

१४. अव्यग्रमिति ॥ हे वीर अव्यग्रमसहसा उपतिष्ठस्व संनिधत्स्व ॥ "अकर्मकाच्च" इत्युपतिष्ठतेरात्मनेपदम् ॥ अहं वायोः सुहृत् तवाहं पितृसख इत्यर्थः । रविरत्यर्थं वितपते तीव्रं प्रतपति ॥ "उद्विभ्यां तपः" इति विपूर्वात्तपतेरकर्मकादात्मनेपदम् ॥ मध्याश्वस्य विश्रम्य गम्यतामीषदातपं नीत्वा गच्छेत्यर्थः ॥

तीव्रमुत्तपमानोऽयमशक्यः सोढुमातपः[1] ।
आघ्नान इव संदीप्तैरलातैः[2] सर्वतो[3] मुहुः ॥ १५ ॥

१५. तीव्रमिति ॥ संदीप्तैः प्रज्वलितैः सर्वतोमुखैर्विषूचीनैरलातैरुल्मुकै-राघ्नानस्ताडयन्निवेत्युत्प्रेक्षा ॥ "आङो यमहनः" इत्याङ्पूर्वाद्धन्तेरक-र्मकादात्मनेपदम् ॥ "गमहन—" इत्यादिना उपधालोपः ॥ "हो हन्तेः—" इत्यादिना कुत्वम् ॥ तीव्रं तीक्ष्णमुत्तपमानः प्रदीप्यमानः । पूर्ववत् "उद्विभ्याम्—" इत्यादिना आत्मनेपदम् ॥ अयमातपः सोढु-मशक्यः ॥

संशृणुष्व कपे मत्कैः संगच्छस्व वनैः[4] शुभैः ।
समारन्त ममाभीष्टाः संकल्पास्त्वय्युपागते[5] ॥ १६ ॥

१६. संशृणुष्वेति ॥ हे कपे संशृणुष्व आकर्णय ॥ "समो गम्यृच्छि—" इत्यादिना शृणोतेः संपूर्वादकर्मकादात्मनेपदम् ॥ कौमुद्यां तु समो गम्यृच्छिभ्यामिति पाठः । तदा तत्रत्यवार्त्तिकेनात्मनेपदम् । अहमेषां ग्रामणीः मत्कानि मत्स्वामिकानीत्यर्थः ॥ "स एषां ग्रामणीः" इति कन्प्रत्ययः ॥ "प्रत्ययोत्तरपदयोश्च" इत्यस्मदो मपर्यन्तस्यैकवचने मदादेशः ॥ तैः शुभैः वनैः संगच्छस्व तानि संगच्छ तेषु विहरेत्यर्थः । संपूर्वाद्गमेः पूर्ववत्तङ् । त्वय्युपागते सति ममाभीष्टाः प्रियाः संकल्पा मनोरथाः समारन्त सम्यग्गताः सत्या बभूवुरित्यर्थः । संपूर्वादर्त्तेर्लुङि

१ °पं न शक्यः D.
२ °रालातैः D.
३ सर्वतोमुखैः T₃, T., G., Com.
४ बलैः B.
५ °य्युपासते T₄.

पूर्ववत्तङि "सर्तिशास्त्यर्तिभ्यश्च" इति च्लेरङादेशः। आद्वृद्धिश्च रपरा॥

के न संविद्रते वायोर्मैनाकाद्रिर्यथा सखा।
यत्नादुपह्वये[1] प्रीतः संह्वयस्व विवक्षितम्॥ १७॥

१७. क इति॥ हे कपे यथा मैनाकाद्रिर्वायोः सखा तथा के न संविद्रते न विदन्ति। तत्सर्वेऽपि विदन्तीत्यर्थः। पूर्ववत्संपूर्वाद्विदेरकर्मकात्तङ्। शपो लुकि झेरदादेशः॥ "वेत्तेर्विभाषा" इति रुडागमः॥ अतः प्रीतो यत्नादुपह्वये त्वामाह्वयामि। अकर्मकादिति निवृत्तम्। सामान्येन विधानम्। विवक्षितमभिप्रेतं संह्वयस्व कथयेत्यर्थः॥ "निसमुपविभ्यो ह्वः" इति ह्वयतेस्तङ्॥

द्यामिवाह्वयमानं तमवोचद्भूधरं कपिः।
उपकुर्वन्तमत्यर्थं प्रकुर्वाणोऽनुजीविवत्॥ १८॥

१८. द्यामिति॥ कपिर्हनूमान् द्यामाकाशमाह्वयमानं महत्त्वेन सस्पर्धमाकारयन्तमिव। तादृङ्महिमानमित्यर्थः। अत्यर्थमुपकुर्वन्तं विश्रामदानेनाद्रियमाणं तं भूधरं मैनाकमनुजीविवत् भृत्यवत् प्रकुर्वाणः सेवमानस्तथानुनयन्नित्यर्थः॥ "गन्धनावक्षेपण—" इत्यादिना कृञः सेवने तङ्॥ अवोचत्॥

कुलभार्यां प्रकुर्वाणमहं द्रष्टुं दशाननम्।
यामि त्वरावान् शैलेन्द्र मा कस्यचिदुपस्कृथाः॥ १९॥

१९. कुलेति॥ हे शैलेन्द्र अहं कुलभार्यां कुलाङ्गनां प्रकुर्वाणं सहसा संगृह्णानम्॥ "गन्धनाव—" इत्यादिना साहसिक्ये आत्मनेपदम्॥ दशाननं द्रष्टुं त्वरावान् द्रुततरो यामि गच्छामि। कस्यचिन्मोपस्कृथाः अध्वश्रमार्थं न किंचित्खाद्यपेयादिकमुपस्कर्तव्यमित्यर्थः। कस्यचिदित्यत्र "कृञः प्रतियत्ने" इति कर्मणि षष्ठी। सतो गुणान्तराधानं

१ °दुपाह्वये N., C., E₂.

प्रतियत्नः। कृथा इति करोतेर्लुङि "गन्धन—" इत्यादिना प्रतियत्ने तङि थासि "ह्रस्वादङ्गात्" इति सलोपः॥ "उपात्प्रतियत्न—" इत्यादिना सुडागमः॥ "न माङ्योगे" इत्यडभावः॥

योऽपचक्रे[1] वनात्सीतामधिचक्रे न यं हरिः।
विकुर्वाणः[3] स्वरानद्य बलं तस्य निहन्म्यहम्॥ २०॥

२०. य इति॥ यो रावणो वनात्सीतामपचक्रे अवक्षिप्तवान् भर्त्सितवान् अवक्षिप्य जहारेत्यर्थः। अन्यथा वनादित्यपादाननिर्देशायोगात्॥ "गन्धन—" इत्यादिनैव अवक्षेपणे तङ्॥ यं रावणं हरिरिन्द्रोऽपि नाधिचक्रे न प्रसेहे नाभिबभूव अभिभवितुं नाशकदित्यर्थः॥ "अधेः प्रसहने" इत्यात्मनेपदम्॥ 'प्रसहनमभिभवः' इति काशिका। अद्याहं स्वरान् विकुर्वाणो विविधं शब्दान् कुर्वाणः क्ष्वेडमान इति यावत्॥ "वेः शब्दकर्मणः" इत्यात्मनेपदम्॥ तस्य रावणस्य बलं निहन्मि संहरिष्यामीत्यर्थः। "जासिनिप्रहण—" इत्यादिना शेषे कर्मणि षष्ठीविधानादशेषे कर्मणि द्वितीया॥

विकुर्वे नगरे तस्य पापस्याद्य[4] रघुद्विषः।
विनेष्ये वा प्रियान् प्राणानुदानेष्येऽथवा यशः॥ २१॥

२१. विकुर्व इति॥ अद्य रघुद्विषो रघुकुलद्रोहिणः अत एव पापस्य पापकर्मणः तस्य रावणस्य नगरे विकुर्वे विविधं चेष्टिष्ये। यथेष्टं पराक्रमिष्यामीत्यर्थः। विपूर्वात्करोतेः "अकर्मकाच्च" इति तङ्। अथवा प्रियान् प्राणान्विनेष्ये सम्मानयिष्यामि॥ "संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः" इति विपूर्वान्नयतेः संमानने तङ्॥ स्वाम्यर्थं प्राणानां क्लेशनं संमानने पर्यवस्यति। अथवा यश उदानेष्ये उत्संजयिष्यामि शत्रुविजयेन कीर्त्तिमुच्चैः करिष्यामीत्यर्थः। तेनैवोत्संजने तङ्॥

---

१ योऽवचक्रे $E_3$.
२ बलात्सी° $E_3$, B.
३ विकुर्वाणं D., $E_3$.
४ पापस्यास्य $T_3$.

विनेष्ये क्रोधमर्थंवा क्रममाणोऽरिसंसदि ।
इत्युक्त्वा खे पराक्रंस्त तूर्णं सूनुर्नभस्वतः ॥ २२ ॥

२२. विनेष्य इति ॥ किं बहुना अधुनेदानीमेव अरिसंसदि शत्रुसमाजे क्रममाणोऽप्रतिबन्धं विजृम्भमाणः ॥ "वृत्तिसर्गतायनेषु क्रमः" इति वृत्तावप्रतिबन्धे तङ् ॥ क्रोधं विनेष्ये ॥ "कर्तृस्थे चाशरीरे कर्मणि" इति नयतेस्तङ् ॥ क्रोधः कर्तृस्थं कर्म । शरीरं तदेकदेशो वा न भवतीतिभावः । इत्युक्त्वा नभस्वतः सूनुर्वायुनन्दनस्तूर्णं खेऽन्तरिक्षे पराक्रंस्त अप्रतिबन्धेनोत्साहेन वा जगामेत्यर्थः ॥ "उपपराभ्याम्" इति परापूर्वात्क्रमेर्वृत्तौ सर्गे वा तङ् । वृत्तिरप्रतिबन्धः सर्ग उत्साहः ॥

परीक्षितुमुपाक्रंस्त राक्षसी तस्य विक्रमम् ।
दिवमाक्रममाणेव केतुतारा भयंप्रदा ॥ २३ ॥

२३. परीक्षितुमिति ॥ दिवमाकाशं प्रत्याक्रममाणा उद्गच्छन्ती ॥ "आङ उद्गमने" इति क्रमेराङ्पूर्वादात्मनेपदम् ॥ अत एव केत्वाख्या तारा ज्योतिः केतुतारा औत्पातिको धूमकेतुरिव भयप्रदा भीषणा ॥ "प्रे दाज्ञः" इति कः ॥ राक्षसी सुरसा नाम नागमाता देवप्रेरिता काचिन्नागलोकनिवासिनी तस्य हनूमतो विक्रमं पौरुषं परीक्षितुमुपाक्रंस्त उत्सेहे उद्युक्तेत्यर्थः । पूर्ववत् "उपपराभ्याम्" इति क्रमेर्लुङि तङि सिचि "स्नुक्रमोरनात्मनेपदनिमित्ते" इति निषेधान्नेडागमः ॥

जले विक्रममाणाया हनूमान् शतयोजनम् ।
आस्यं प्रविश्य निरगादणूभूयाप्रचेतितः ॥ २४ ॥

२४. जल इति ॥ अथ हनूमान् जले जलस्योपरीत्यर्थः ॥ विक्रममाणायाः पादाभ्यां विहरन्त्याः गतिविशेषान्कुर्वत्या इत्यर्थः ॥ "वेः पाद-

१ °मधुना T2, T3, T4, Com.
The 2nd half not found in T3.

२ सूनुस्तूर्णं D.

३ भयङ्करा D., T2, T4.
The 1st half not found in T3.

४ °याप्रचोदितः D., T3.
°याप्रचेतितम् T2.

विहरणे" इति विपूर्वात्क्रमेः पादविक्षेपार्थादपि धातूनामनेकार्थत्वादात्मनेपदम्॥ तस्याः राक्षस्याः शतं योजनानि प्रमाणमस्य शतयोजनम्॥ "प्रमाणे लः"। "द्विगोर्नित्यम्" इति प्रमाणतद्धितस्य मात्रचो लुक्। आस्यं प्रविश्य अणूभूयातिसूक्ष्मो भूत्वा अत एवाप्रचेतितोऽप्रज्ञातः सन्निरगान्निर्गतः॥

द्रष्टुं प्रक्रममाणोऽसौ सीतामम्भोनिधेस्तटम्।
उपाक्रंस्ताकुलं घोरैः क्रममाणैर्निशाचरैः॥ २५॥

२५. द्रष्टुमिति॥ सीतां द्रष्टुं प्रक्रममाणः आरभमाणोऽसौ हनूमान् घोरैर्भयङ्करैः क्रममाणैरितस्ततः संचरद्भिः॥ "अनुपसर्गाद्वा" इत्यात्मनेपदम्॥ निशाचरैराकुलं संकीर्णमम्भोनिधेस्तटमुपाक्रंस्त क्रमितुमारब्धवान्॥ "प्रोपाभ्यां समर्थाभ्याम्" इत्युभयत्राप्यात्मनेपदम्॥

आत्मानमपजानानः शशमात्रोऽनयद्दिनम्।
ज्ञास्ये रात्राविति प्राज्ञः प्रत्यज्ञासीत्क्रियापटुः॥ २६॥

२६. आत्मानमिति॥ प्राज्ञः प्रज्ञावान् क्रियापटुः कर्मदक्षः स हनूमानात्मानं स्वस्वरूपमपजानानोऽपह्नुवानः॥ "अपह्नवे ज्ञः" इति जानातेरपोपसृष्टादपह्नवेऽर्थे आत्मनेपदम्॥ शशमात्रः शशप्रमाणकः सन्॥ "प्रमाणे—" इत्यादिना मात्रच्॥ दिनं नयन् रात्रौ ज्ञास्ये भोत्स्ये अनुसंधास्यामीति॥ "अकर्मकाच्च" इति तङ्॥ प्रत्यज्ञासीत् आध्यातवान् चिन्तितवान् विचारितवानिति यावत्॥ "संप्रतिभ्यामनाध्याने" इत्याध्याने निषेधान्न तङ्॥

संजानानान् परिहरन् रावणानुचरान् बहून्।
लङ्कां समाविशद्रात्रौ वदमानोऽरिदुर्गमाम्॥ २७॥

---

१ प्रत्यजानात N., C., T1, E2.
२ क्रियापरः T2, T3, T4.
३ परिभवन् T4.
४ रावणार्थेच° T., G., Com. रावणार्थे चरान् T3. रावणाधिष्ठितान् T2.

२७. समिति ॥ संजानानान् स्वपरान् परामृशतः ॥ "संप्रतिभ्यामनाध्याने" इत्यात्मनेपदम् ॥ बहूननेकान् रावणस्य अर्थेषु कृत्येषु चरन्तीति तच्चरान्नगररक्षकानित्यर्थः परिहरन् दूरात्त्यजन् वदमानो वदितुं जानानः ॥ "भासन—" इत्यादिना ज्ञाने वदेरात्मनेपदम्॥ सोऽरिभिर्दुर्गमां दुरासदां लङ्कां रात्रौ समाविशत् प्रविष्टः ॥

किंचिन्नोपावदिष्टासौ केनचिन्न्यवदिष्ट न ।
शृण्वन्संप्रवदमानाद्रावणस्य गुणान् जनात् ॥ २८ ॥

२८. किंचिदिति ॥ असौ हनूमान् किंचिन्नोपावदिष्ट नोपसंभाषितवान् । उपसान्त्वनवादमपि केनचिन्नाकरोदित्यर्थः ॥ "भासन—" इत्यादिनैव उपसंभाषायामुपसान्त्वनापराख्यायामात्मनेपदम् ॥ केनचिन्न व्यवदिष्ट विवादं च नाकरोदित्यर्थः । तेनैव विमतौ तङ् । किं च रावणस्य गुणान् प्रवदमानान् संभूय कथयतः ॥ "व्यक्तवाचां समुच्चारणे" इत्यात्मनेपदम् ॥ अभिवदनव्यवहारसमर्था मनुष्यादयो व्यक्तवाचः । जनान् संशृण्वन् सम्यगाकर्णयन्नित्यर्थः । 'शङ्खः श्रूयते' । 'भेरी श्रूयते' इतिवत्प्रयोगः । सकर्मकत्वात् "समोगम्यृच्छि—" इत्यादिना संश्रूयतेर्न तङ् । प्रविष्ट इति शेषः ॥

जल्पितोत्क्रुष्टसङ्गीतप्रनृत्तस्मितवल्गितैः ।
घोषस्यान्ववदिष्टेव लङ्का पूतक्रतोः पुरः ॥ २९ ॥

२९. जल्पितेति ॥ लङ्का लङ्कापुरी जल्पितैर्व्याहारैरुत्क्रुष्टैरुच्चैःक्रोशनैराह्वानैः संगीतैः सम्यग्गानैः प्रनृत्तैर्नर्तनैः स्मितैर्लक्षणयाट्टहासैर्वल्गितैर्वल्गनैश्चैवंरूपैः प्रजाकलकलैरित्यर्थः । सर्वत्र भावे क्तः । पूतक्रतोरिन्द्रस्य पुरोऽमरावत्याः संबन्धिनो घोषस्य प्रजाकलकलस्य । संबन्धसामान्ये षष्ठी । अन्ववदिष्टेव अनुचकारेव । इन्द्रनगरे यादृशी

१ कंचिन्नो° N., E2, E3.
२ संशृण्वन्प्रवदमानाद्रावणस्य गुणान् जनान् T., G., Com. संशृण्वन्वदमानांस्तान् रावणस्य गुणान् जनान् T2, T3, T4.
३ जल्पिताक्रुष्ट D.
४ स्मयजृम्भितैः T4.

प्रजासमृद्धिस्तादृशी लङ्कायामित्यर्थः । अनुपूर्वाद्वदतेर्लुङ् ॥ "अनोरकर्मकात्" इति तङ् ॥

ऐद्विप्रवदमानैस्तां[1] संयुक्तां ब्रह्मराक्षसैः ।
तथावगिरमाणैश्च पिशाचैर्मांसशोणितम् ॥ ३० ॥

३०. तामिति ॥ विप्रवदमानैर्युगपत्परस्परविरुद्धं प्रलपद्भिः ॥ "विभाषा विप्रलापे" इत्यात्मनेपदम् ॥ ब्रह्मराक्षसैस्तथा मांसानि शोणितानि च मांसशोणितम् ॥ "जातिरप्राणिनाम्" इति द्वन्द्वैकवद्भावः ॥ अवगिरमाणैर्गिरद्भिः ॥ "अवाद्ग्रः" इति गिरतेस्तौदादिकादात्मनेपदम् ॥ पिशाचैश्च संयुक्तां तां लङ्कामैदगच्छत् । इणो लङि शपो लुक् । आड्वृद्धिः ॥

यथास्वं[2] संगिरन्ते स्म गोष्ठीषु[3] स्वामिनो गुणान् ।
पानशौण्डाः पथः क्षीवा वृन्दैरुदचरन्त च ॥ ३१ ॥

३१. यथार्थमिति ॥ किं च पूर्वोक्ताः राक्षसाः पिशाचाश्च पानशौण्डाः पानेन विख्याताः । मत्तार्थत्वे क्षीवशब्देन पौनरुक्त्यात् । 'शौण्डो मत्ते च विख्याते' इति विश्वः ॥ "सप्तमी शौण्डैः" इति समासः ॥ अत एव क्षीवा मत्ताः सन्तः । 'मत्ते शौण्डोत्कटक्षीवाः' इत्यमरः । क्षीबृ मदे इति धातोः कर्त्तरि क्तान्तः ॥ "अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः" इति निपातनात्तलोपः इडभावश्च ॥ गोष्ठीषु विद्यागोष्ठीषु पानगोष्ठीषु च स्वामिनो रावणस्य गुणान् यथार्थं यथा तथा संगिरन्ते स्म प्रतिजानते स्म । सर्वावस्थास्वपि न तत्र विप्रतिपद्यन्त इत्यर्थः ॥ "समः प्रतिज्ञाने" इति तङ् ॥ तथा वृन्दैः सङ्घशः पथः मार्गान् उदचरन्त च उल्लङ्घ्य चरन्ति स्म । उत्पथप्रवृत्ताः संचेरुरित्यर्थः ॥ "उदश्चरः सकर्मकात्" इति तङ् ॥

---

१ तां विप्रवदमानैरैत् T., G., Com.
ऐत्तां विप्रवदमानैः D.
ऐद्विप्रवदमानैश्च $T_2$, $T_3$, $T_4$.

२ यथार्थं T., G., Com.
यथावत् $T_3$.

३ गोष्ठीषु $E_3$, D.

यानैः समचरन्तान्ये कुञ्जराश्वरथादिभिः ।
संप्रायच्छन्त बन्दीभिरन्ये पुष्पफलं शुभम् ॥ ३२ ॥

३२. यानैरिति ॥ अन्ये कुञ्जराश्वरथमादिर्येषां तैः यानैर्वाहनैः समचरन्त संचरितवन्तः ॥ "समस्तृतीयायुक्तात्" इति संपूर्वाच्चरेस्तङ् ॥ अन्ये शुभं शोभनं पुष्पाणि च फलानि च पुष्पफलम् ॥ "जातिरप्राणिनाम्" इत्येकवद्भावः ॥ बन्दीभिः संप्रायच्छन्त बन्दीकृताभ्यः स्त्रीभ्यो ददुरित्यर्थः । दाण् दाने इति धातोः "पाघ्रा—" इत्यादिना यच्छादेशः । "अशिष्टव्यवहारे दाणः प्रयोगे तृतीया चतुर्थ्यर्थे भवति" इति वचनात् चतुर्थ्यर्थे तृतीया ॥ "दाणश्च सा चेच्चतुर्थ्यर्थे" इति तङ् ॥

कोपात्काश्चित्प्रियैः प्रत्तमुपायंसत नासवम् ।
प्रेम जिज्ञासमानाभ्यस्ताभ्योऽशप्सत कामिनः ॥ ३३ ॥

३३. कोपादिति ॥ काश्चित्कान्ताः प्रियप्रत्तं प्रियदत्तम् ॥ "अच उपसर्गात्तः" इति दस्तकारः ॥ आसवं कोपादन्यासंगदोषान्नोपायंसत न स्वीचक्रुः ॥ "उपाद्यमः स्वकरणे" इति पाणिग्रहणे विधानेऽन्यत्र स्वीकरणमात्रे तङ्प्रयोगश्चिन्त्यः । किन्तु प्रेम स्वविषयानुरागं जिज्ञासमानाभ्यो ज्ञातुमिच्छतीभ्यः ॥ "ज्ञाश्रुस्मृदृशां सनः" इति जानातेः सन्नन्तादात्मनेपदम् ॥ ताभ्यः स्त्रीभ्यः ॥ "श्लाघह्नुङ्—" इत्यादिना संप्रदानत्वाच्चतुर्थी ॥ कामिनः अशप्यन्त विश्वासार्थं शपथवाक्यानि प्रायुञ्जतेत्यर्थः । शपेर्दैवादिकात्स्वरितेत्त्वाल्लुङि तङ् ॥

प्रादिदक्षत नो नृत्यं नाशुश्रूषत गायनान् ।
रामं सुस्मूर्षमाणोऽसौ कपिर्विरहदुःखितम् ॥ ३४ ॥

---

१ कुञ्जरैश्च रथादिभिः T2, T4.
२ प्रियः प्रत्त° T4.
प्रियप्रत्त° T2, T3, T., G., Com.
३ °भ्योऽश्रंसन्त T2.
°भ्योऽशप्यन्त T., G., Com.
४ नृत्तं T2, T3, T4.
५ नोऽशु° T2, T4.
६ °दुःखितः T2.

३४. प्रेति ॥ विरहदुःखितं रामं सुस्मूर्षमाणः स्मर्त्तुमिच्छन् । इच्छापूर्वकमेव निरन्तरं स्मरन्नित्यर्थः । अत एवासौ कपिः कुत्रापि नृत्तं नो प्रादिदृक्षत प्रद्रष्टुं प्रेक्षितुं नैच्छत् गायनान् गायकान् ॥ "ण्युट् च" इति गायतेः शिल्पिनि ण्युट्प्रत्ययः । नाशुश्रूषत श्रोतुं नैच्छत् । "ज्ञाश्रुस्मृदृशां सनः" इति दृशेः शृणोतेश्च सन्नन्ताल्लुङि तङ् । स्मरतेस्तु लटः शानजादेशः ॥ "अज्झनगमां सनि" इति दीर्घे "उदोष्ठ्यपूर्वस्य" इत्युत्वे "हलि च" इति दीर्घः ॥

अनुजिज्ञासतेवार्थं लङ्कादर्शनमिन्दुना ।
तमोपहविमुक्तांशु पूर्वस्यां दिश्युदैयत ॥ ३५ ॥

३५. अन्विति ॥ तस्मै हनूमते लङ्कायाः लङ्कास्थपदार्थानां दर्शनं साक्षात्कारमनुजिज्ञासता अनुज्ञातुमिच्छता अनुमन्यमानेनेवेत्यर्थः । व्यञ्जकाप्रयोगात् गम्योत्प्रेक्षा । जानातेः सन्नन्ताल्लटः शत्रादेशः ॥ "नानोर्ज्ञः" इत्यनुपूर्वस्य सन्नन्तस्य आत्मनेपदप्रतिषेधः । इन्दुना पूर्वस्यां दिशि तमोऽपघ्नन्तीति तमोपहाः ॥ "अपे क्लेशतमसोः" इति डप्रत्ययः ॥ ते च विमुक्ताश्चांशवो यस्मिन्कर्मणि तत् प्रसारिततमोहरकिरणं यथा तथेत्यर्थः ॥ उदैयत उदितम् । इणो भावे लङि तङ् । अजादित्वादाड्वृद्धिः ॥

आशुश्रूषन् स मैथिल्या वार्त्तां हर्म्येषु रक्षसाम् ।
शीयमानान्धकारेषु समचारीदशङ्कितः ॥ ३६ ॥

३६. आशुश्रूषन्निति ॥ स हनूमान् मैथिल्याः वार्त्तां वृत्तान्तमाशुश्रूषन् समन्ताच्छ्रोतुमिच्छन् । आङ्पूर्वाच्छृणोतेः सन्नन्ताल्लटः शत्रादेशः ॥ "प्रत्याङ्भ्यां श्रुवः" इति सन्नन्तादात्मनेपदनिषेधः ॥ शीयमानान्धकारेषु चन्द्रोदयान्नश्यत्तिमिरेषु । शद्लृ शातने इति धातोः शिद्धाविनः "शदेः शितः" इति लटः शानच् ॥ "पाघ्रा—" इत्यादिना शदेः

१ अनुजिज्ञासते तस्मै T., G., Com. °वास्मै T₃, T₄.

२ समाचारीद° D.

शीयादेशः ॥ रक्षसां हर्म्येषु सौधेषु अशङ्कितोऽभीतः सन्। कर्त्तरि क्तः। समचारीत् संचचार। अतृतीयायोगात् "समस्तृतीयायुक्तात्" इत्यस्य प्रत्युदाहरणम्॥

शतसाहस्रमारक्षं मध्यगं रक्षसां कपिः।
ददर्श यं कृतान्तोऽपि म्रियेतासाद्य भीषणम्॥ ३७॥

३७. शतेति॥ कपिर्हनूमान् मध्ये भवं मध्यमं नगरस्य मध्यगतम्॥ "मध्यान्मः" इति मप्रत्ययः॥ आ समन्ताद्रक्षतीत्यारक्षं नगरगोपकम्। पचाद्यच्। रक्षसां संबन्धि शतं सहस्राणि परिमाणमस्य शतसाहस्रं लक्षपरिमितं बलमित्यर्थः। 'प्राग्वतेः संख्यापूर्वपदानां तदन्तविधिरलुकि' इति वचनात् "शतमानविंशतिकसहस्रवसनादण्" इति परिमाणार्थे अणि "संख्यायाः संवत्सरसंख्यस्य च" इत्युत्तरपदवृद्धिः। ददर्श। भीषणं यद्बलमासाद्य कृतान्तोऽपि म्रियेत किमुतान्य इति भावः॥ "म्रियतेर्लुङ्लिङोश्च" इति तङ्॥

अध्यासिसिषमाणेऽथ वियन्मध्यं निशाकरे।
कासांचक्रे पुरी सौधैरतीवोद्भासिभिः सितैः॥ ३८॥

३८. अथेति॥ अथ क्षपाकरे चन्द्रे वियन्मध्यं नभोमध्यमध्यासिसिषमाणे अध्यासितुमिच्छति। आसेः सन्नन्तात् "पूर्ववत्सनः" इत्यात्मनेपदम्॥ "स्तौतिण्योरेव षण्यभ्यासात्" इति नियमान्नाभ्यासादुत्तरस्य षत्वम्॥ अतीवातिमात्रमुद्भासिभिः दीप्तैः सितैः शुभ्रैः सौधैः साधनैः पुरी लङ्का कासांचक्रे प्रचकाशे॥ "कास्प्रत्ययादाममन्त्रे लिटि" इत्याम्प्रत्ययः॥ "आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य" इति कासिवत्कृञस्तङ्॥

---

१ मध्यमं D., T2, T3, T., G., Com. रक्षसां मध्यगं E2.
२ यत्कृता° T., G., Com. This verse is omitted in T3.
३ दिवाकरे T2. क्षपाकरे T., G., Com.
४ °वोद्भासितैः T2, T3. The 1st half omitted in T3.

इन्दुं चषकसंक्रान्तमुपायुङ्क्त यथामृतम्।
प्रयुञ्जानः प्रिया वाचः समाजानुरतो जनः ॥ ३९ ॥

३९. इन्दुमिति ॥ समज्या गोष्ठी पानगोष्ठीत्यर्थः। 'समज्या परिषद्गोष्ठी' इत्यमरः ॥ "संज्ञायां समज—" इत्यादिना क्यप् ॥ तस्यामनुरत आसक्तो जनः कामिजनः प्रिया वाचश्चाटूक्तीः प्रयुञ्जानो ब्रुवाणः सन् चषके पानपात्रे। 'चषकोऽस्त्री पानपात्रम्' इत्यमरः। संक्रान्तं प्रतिबिम्बितमिन्दुममृतं यथा अमृतमिवोपायुङ्क्त उपयुक्तवान् पीतवानित्युत्प्रेक्षा। पानात्प्रागिन्दोरेव मद्यमाच्छाद्य लक्ष्यमाणत्वात्पश्चादलक्ष्यत्वाच्च स एव नूनं पीत इति भावः ॥ "प्रोपाभ्यां युजेरयज्ञपात्रेषु" इत्युभयत्राप्यात्मनेपदम् ॥

संक्ष्णुवान इवोत्कण्ठामुपाभुङ्क्त सुरामलम्।
ज्योत्स्नायां विगलन्मानस्तरुणो रक्षसां गणः ॥ ४० ॥

४०. समिति ॥ ज्योत्स्नया हेतुना विगलन्मानो निवर्त्तमानकोपस्तरुणः प्रौढयौवनो रक्षसां रक्षोमिथुनानां गणः उत्कण्ठामन्योन्यानुरागं संक्ष्णुवान इवोत्तेजयन्निव। मधुपानस्य रागवर्धनत्वादिति भावः ॥ "समः क्ष्णुवः" इत्यात्मनेपदम् ॥ शपो लुक्युवङादेशः। सुरामृतमुपाभुङ्क्त उपभुक्तवान् पपावित्यर्थः ॥ "भुजोऽनवने" इत्यात्मनेपदम् ॥

मध्वपाययत स्वच्छं सोत्पलं दयितान्तिके।
आत्मानं सुरताभोगैर्विस्रम्भोत्पादनं मुहुः ॥ ४१ ॥

४१. मध्विति ॥ स्वच्छं निर्मलं स्वाद्वित्यर्थः सोत्पलमुत्पलवासितं सुरताभोगविस्रम्भोत्पादनं सुरतविहारविस्रम्भकरणम्। करणे ल्युट्। मधु मद्यं कर्तृ। दयितान्तिके प्रियजनसमीपे मुहुरात्मानं स्वात्मानम-

---

१ समज्यानु° $T_3$, T., G., Com.
२ °मुपायुङ्क्त $T_2$, $T_4$, $E_2$.
३ सुरामिषम् D.
सुरामृतम् T., G., Com.
४ ज्योत्स्नया T., G., Com.
५ भोगे वि° $E_3$.
६ विश्रम्भो° N., C.
विश्रम्भोत्पादनक्षमम् D.

पाययत दयितकर्तृकस्वकर्मकं पानं मधु दयितैः स्वयमेवाकारयदित्यर्थः। पिबतेर्ण्यन्ताल्लुङ्यणि कर्मणः कर्तृत्वकर्मत्वोभयविवक्षायामकर्त्रभिप्राये "णेरणौ—" इत्यादिना तङ्॥ अत्र यत्संग्रहणमन्यकर्मनिषेधार्थत्वादणि कर्तृकर्मणोरन्यतरस्य कर्मत्वं न प्रतिषेधतीति कर्मश्रवणेऽपि न विरोधः॥

अभीषयन्त ये शक्रं राक्षसा रणपण्डिताः।
[1]अविस्मापयमानस्तान् कपिराटीद्गृहाद्गृहम्॥ ४२॥

४२. अभीषयन्तेति॥ रणपण्डिताः युद्धविशारदाः ये राक्षसाः शक्रमभीषयन्त भीषितवन्तः॥ "भियो हेतुभये षुक्" इति षुगागमः॥ कपिर्हनूमान् तान् राक्षसानविस्मापयमानः गूढचारित्वात्स्वचेष्टितोपलम्भेन विस्मयमलम्भयन्नित्यर्थः॥ "भीस्म्योर्हेतुभये" इति स्मयस्याप्युपलक्षणत्वादुभयत्रात्मनेपदम्॥ "नित्यं स्मयतेः" इत्यात्वे पुगागमः॥ गृहाद्गृहमाटीदटति स्म। अटतेर्लुङि "इट ईटि" इति सलोप आङ्गृद्धिश्च॥

सीतां दिदृक्षुः मच्छन्नः सोऽगर्धयत राक्षसान्।
अवञ्चयत मायाश्च[2] स्वमायाभिर्नरद्विषाम्[3]॥ ४३॥

४३. सीतामिति॥ सीतां दिदृक्षुः द्रष्टुमिच्छुरत एव प्रच्छन्नो गूढवृत्तिः स हनूमान् राक्षसानगर्धयत विप्रलब्धवान् तथा नरद्विषां राक्षसानां मायाश्च स्वमायाभिरवञ्चयत वञ्चितवान्॥ "गृधिवञ्च्योः प्रलम्भने" इत्युभयत्रापि तङ्। प्रलम्भनं विमोहनम्॥

अपलापयमानस्य शत्रूंस्तस्याभवन्मतिः।
मिथ्या कारयते चारैर्घोषणां राक्षसाधिपः[4]॥ ४४॥

---

१ स विस्मा° D.
२ मायां च D.
३ °याभिः सुरद्विषाम् T2, T4.
४ रक्षसां पतिः C. राक्षसेश्वरः T., G., Com.

४४. अथेति ॥ शत्रूनपलापयमानस्य शालिनीकुर्वाणस्य न्यक्कुर्वाणस्येत्यर्थः । लीङ् श्लेषणे इति धातोर्दैवादिकाण्ण्यन्तात् "लियः संमाननशालिनीकरणयोश्च" इति शालिनीकरणे आत्मनेपदम् ॥ "विभाषा लीयतेः" इति पक्षे आत्वे पुगागमः । तस्य हनूमतः राक्षसेश्वरो रावणश्चारैर्नगररक्षिजनैर्घोषणामन्तः प्रविष्टं ज्ञात्वा सद्यो मारयतेत्येवंरूपां डिण्डिमवाद्यपूर्विकामाघोषणां पुनः पुनः मिथ्या कारयते अर्थशून्यमेवाभ्यासेनावृत्त्या कारयतीत्यर्थः । कृञो ण्यन्तात् "मिथ्योपपदात्कृञोऽभ्यासे" इति तङ् । इति मतिरभूत् । मामेवान्तः प्रविष्टं न जानन्ति किमनया मृषाघोषणयेत्यमन्यतेत्यर्थः ॥

गूहमानः स्वमाहात्म्यमटित्वा मन्त्रिसंसदः ।
नृभ्योऽपवदमानस्य रावणस्य गृहं ययौ ॥ ४५ ॥

४५. गूहमान इति ॥ स्वमाहात्म्यमात्मपौरुषं गूहमानश्छादयन्नेव । स्वरितेत्त्वात् "स्वरितञित—" इत्यादिना कर्त्रभिप्राये आत्मनेपदम् । मन्त्रिसंसदो मन्त्रिगृहानटित्वा तत्राटित्वेत्यर्थः । 'कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् । देशश्च—' इति वचनाद्देशस्य कर्मत्वम् । नृभ्योऽपवदमानस्य मनुष्येभ्यो द्रुह्यतः ॥ "अपाद्वदः" इत्यात्मनेपदम् ॥ "क्रुधद्रुह—" इत्यादिना संप्रदानत्वाच्चतुर्थी ॥ रावणस्य गृहं ययौ ॥

दिशो द्योतयमानाभिर्दिव्यनारीभिराकुलम् ।[1]
श्रियमायच्छमानाभिरुत्तमाभिरनुत्तमाम्[2] ॥ ४६ ॥

४६. अथ चतुर्भिस्तद्गृहं वर्णयति ॥ दिश इति ॥ दिशो द्योतयमानाभिः प्रकाशयन्तीभिः ॥ "णिचश्च" इत्यात्मनेपदम् ॥ श्रियं शोभामायच्छमानाभिरादधानाभिः ॥ "समुदाङ्भ्यो यमोऽग्रन्थे" इत्यात्मनेपदम् ॥ "इषुगमियमां छः" इति छः ॥ उत्तमाभिरुत्कृष्टाभिर्दिव्यनारीभिः आकुलं संकीर्णमत एवानुत्तमं सर्वोत्तमम् ॥

---

१ °सामर्थ्यं C.
२ दिव्यमानाभि° T₃, T₄.
३ °रनुत्तमम् T₃, T., G., Com.

नित्यमुद्यच्छमानाभिः स्मरसंभोगकर्मसु ।
जानानाभिरलं लीलाकिलकिञ्चितविभ्रमान् ॥ ४७ ॥

४७. ता एव त्रिभिर्विशिनष्टि नित्यमित्यादिभिः ॥ स्मरसंभोगकर्मसु कामक्रीडासु नित्यमुद्यच्छमानाभिरुद्युञ्जानाभिः तल्लोलुपाभिरित्यर्थः ॥ "समुदाङ्भ्यो यमोऽग्रन्थे" इत्यस्य सकर्मकाधिकारत्वादिह यमेरकर्मकत्वादात्मनेपदं चिन्त्यम् । लीला प्रियानुकरणम् । क्रोधाश्रुहर्षभीत्यादेः संकरः किलिकिञ्चितम् । विभ्रमस्त्वरयाकाले भूषास्थानविपर्ययः । तानलं सम्यग्जानानाभिर्नानाविलासकुशलाभिरित्यर्थः ॥ "अनुपसर्गाज्ज्ञः" इति कर्त्रभिप्राये आत्मनेपदम् ॥

स्वं कर्म कारयन्नास्ते निश्चिन्तो यौ झषध्वजः ।
स्वार्थं कारयमाणाभिर्यूनो मदविमोहितान् ॥ ४८ ॥

४८. स्वकर्मेति ॥ झषध्वजो मीनकेतनः कामो निश्चिन्तो निर्विचारः सन् स्वकर्म कारयन् स्वप्रयोजनं रतिकृत्यं कामिजनैः कारयन् यद्गृहमास्ते यत्रास्त इत्यर्थः । गृहस्य देशत्वाद् 'देशकालाध्वगन्तव्याः' इति वचनेन कर्मत्वम् । तद्गृहमिति पूर्वेण परेण वान्वयः । पुनस्त्रिभिरेव विशिनष्टि स्वार्थमिति । मदविमोहितान् युवतयो युवानश्च तान्यूनस्तरुणान् ॥ "पुमान् स्त्रिया" इत्येकशेषः ॥ स्वार्थं स्वप्रयोजनं रतिकर्म कारयमाणाभिः तैः कारयन्तीभिरित्यर्थः ॥ "हृक्रोरन्यतरस्याम्" इत्युभयत्र विकल्पादणि कर्तुः कर्मत्वम् । उभयत्रापि करोतेर्ण्यन्तात् "णिचश्च" इति नित्यतया प्राप्ते स्वशब्दे कर्त्रभिप्रायस्य प्रतीयमानत्वात् "विभाषोपपदेन प्रतीयमाने" इत्युभयत्रापि विकल्पादात्मनेपदम् ॥

कान्तिं स्वां वहमानाभिर्यजन्तीभिः स्वविग्रहान् ।
नेत्रैरिव पिबन्तीभिः पश्यतां चित्तसंहतीः ॥ ४९ ॥

---

१ °किलि $T_3$, $T_4$, T., G., Com.
२ स्वकर्म $E_3$, D., B., T., G., Com.
३ यज्ञ° T., G., Com.

४९. कान्तिमिति ॥ पुनः स्वां स्वाभाविकीमनाहार्यां कान्तिं लावण्यं वहमानाभिः वहन्तीभिः पुनः स्वविग्रहान् स्वाङ्गानि यजन्तीभिः पूजयन्तीभिः परिष्कुर्वतीभिरित्यर्थः । वहियज्योः स्वरितेतोः "विभाषोपपदेन—" इत्यादिना विकल्पादात्मनेपदम् ॥ अथ परस्मैपदाधिकारः ॥ पश्यतां द्रष्टॄणां चित्तसंहतीर्मनोवृन्दानि नेत्रैः स्वदृष्टिभिः पिबन्तीभिरिवेत्युत्प्रेक्षा । दिव्यनारीभिरित्यनेनान्वयः । अत्र पिबतेः "शेषात्कर्त्तरि परस्मैपदम्" इति परस्मैपदम् ॥

तां हनूमान्पराकुर्वन्नगमत् पुष्पकं प्रति ।
विमानं मन्दरस्याद्रेरनुकुर्वदिव श्रियम् ॥ ५० ॥

५०. तदिति ॥ हनूमांस्तद्रावणगृहं पराकुर्वन् परिहरन् मन्दराद्रेः श्रियमनुकुर्वद्विडम्बयदिव स्थितमित्युत्प्रेक्षा । पुष्पकं पुष्पकाख्यं विमानं देवयानं प्रत्यगमत् ॥ "अनुपराभ्यां कृञः" इत्युभयत्रापि करोतेः परस्मैपदम् ॥

तस्मिन्कैलाससङ्काशं शिरःशृङ्गं भुजद्रुमम् ।
अभिक्षिपन्तमैक्षिष्ट रावणं पर्वतश्रियम् ॥ ५१ ॥

५१. तस्मिन्निति ॥ कैलाससङ्काशे तस्मिन्विमाने शिरांस्येव शृङ्गाणि शिखराणि यस्य तं भुजा एव द्रुमाः यस्य तमत एव पर्वतश्रियं शैलशोभामभिक्षिपन्तमभिभवन्तं पर्वतकल्पमित्यर्थः ॥ "अभिप्रत्यतिभ्यः क्षिपः" इति स्वरितेत्त्वात्तङपवादेन परस्मैपदम् ॥ रावणमैक्षिष्ट अद्राक्षीत् । उपमारूपकयोः संकरः ॥

प्रवहन्तं मदामोदं सुप्तं परिजनान्वितम् ।
मघोने परिमृष्यन्तमारमन्तं परं स्मरे ॥ ५२ ॥

---

१ तद्ग° T., G., Com.
तां ह° E2.
२ सङ्काशे T3, T., G., Com.
सङ्काशं C.
३ °अतिक्षिपन्त° T3, T4.
४ °श्रियः D.
५ सदामोदं N., C., B., E2, E3, T.

५२. तमेव विशिनष्टि प्रेति ॥ मदामोदं कस्तूरीपरिमलम्। 'मदो रेतसि कस्तूर्याम्' इति विश्वः। प्रवहन्तं प्रकिरन्तमित्यर्थः॥ "प्राद्वहः" इति परस्मैपदम् ॥ सुतं परिजनान्वितं मघोने इन्द्राय परिमृष्यन्तमसूयन्तम् ॥ "परेर्मृषः" इति परस्मैपदम् ॥ परमत्यन्तं स्मरे कामे आरमन्तमासजन्तम् ॥ "व्याङ्परिभ्यो रमः" इति परस्मैपदम् ॥

व्यरमत्प्रधनाद्यस्मात्परित्रस्तः सहस्रदृक्।
क्षणं पर्यरमत्तस्य[1] दर्शनान्मारुतात्मजः[2][3] ॥ ५३ ॥

५३. वीति ॥ यस्माद्रावणात्परित्रस्तो भीतः सन्॥ "भीत्रार्थानाम्—" इत्यादिनैवापादानत्वम् ॥ सहस्रदृक् सहस्राक्षः प्रधनाद्युद्धाद्व्यरमद्व्यरंसीत्। "जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्" इत्यपादानत्वम्। तस्य रावणस्य दर्शने मारुतात्मजो हनूमान् क्षणं पर्यरमद्भिरतोऽभूत् ॥ "व्याङ्परिभ्यो रमः" इत्युभयत्रापि परस्मैपदम् ॥

उपारंसीच्च संपश्यन्[4] वानरस्तं चिकीर्षितात्।
रम्यं मेरुमिवाधूतकाननं श्वसनोर्मिभिः ॥ ५४ ॥

५४. उपेति ॥ वानरो हनूमान् श्वसनोर्मिभिर्निश्वासमारुतप्रवाहैराधूतकाननं कम्पितोद्यानमत एव रम्यं रमणीयं तं रावणं मेरुमिव संपश्यन् चिकीर्षितात्कर्तुमिष्टात्सीतान्वेषणादुपारंसीद्व्यरंसीच्च। पूर्ववत् "जुगुप्साविराम—" इत्यादिनैव अपादानत्वम् ॥ "उपाच्च" इत्यनुवृत्तौ "विभाषाकर्मकात्" इति विकल्पात्परस्मैपदम् ॥

दृष्ट्वा दयितया साकं[5] रहीभूतं[6] दशाननम्।
नात्र सीतेत्युपारंस्त दुर्मना वायुसंभवः ॥ ५५ ॥

५५. दृष्ट्वेति ॥ दुर्मनाः सीतादर्शनाभावाद्दुःखितचित्तो वायुसंभवो हनूमान् दयितया स्वकान्तया साकमरहो रहस्यभूतो रहीभूतो

---

१ पर्यरमच्चास्य B.
२ दर्शने T., G., Com.
३ पवनात्मजः C.
४ पश्यन् स T3.
५ सार्धं D.
६ °कमभिभूतं T2, T4.

रहसि स्थितः। 'रहो रहस्ये सुरते' इति यादवः॥ "अहर्मनश्चक्षुः—" इत्यादिना सलोपे "अस्य च्वौ" इतीकारः॥ तं दशाननं दृष्ट्वा। अत्र सीता नास्तीति मत्वेत्यर्थः। उपारंस्त ततो गृहान्निवृत्त इत्यर्थः। उपपूर्वाद्रमेर्लुङि "विभाषाकर्मकात्" इति पक्षे तङ्॥

ततः प्राकारमारोहत् क्षपाटानविबोधयन्[1]।
नायोधयत्[2] समर्थोऽपि सीतादर्शनलोलसः[3]॥ ५६॥

५६. तत इति॥ ततो निर्गमानन्तरं सीतादर्शने लम्पटो लोलुपः स हनूमान् क्षपायामटन्तीति क्षपाटान् निशाचरानविबोधयन्नज्ञापयन्। बुधेर्ण्यन्तात् "णिचश्च" इत्यात्मनेपदे प्राप्ते "बुधयुध—" इत्यादिना परस्मैपदम्। लटः शत्रादेशः। प्राकारमारोहत्। तथा समर्थः योधयितुं शक्तोऽपि तान्नायोधयत् न योधितवान्। युधेर्ण्यन्तात्पूर्ववत्तङि प्राप्ते तस्य अणावकर्मकत्वाच्चित्तवन्निशाटकर्तृकत्वाच्च "अणावकर्मकात्—" इत्यादिना परस्मैपदम्। बुधादिसूत्रे युधिग्रहणं त्वचित्तवत्कर्तृकार्थं यथा योधयति काष्ठानीति द्रष्टव्यम्॥

अध्यासीद्राघवस्याहं नाशयेयं कथं शुचः[4]।
वैदेह्या जनयेयं वा[5] कथमानन्दमुत्तमम्॥ ५७॥

५७. अध्यासीदिति॥ अहं राघवस्य शुचं कथं वा नाशयेयं वैदेह्याः कथं वोत्तमं महान्तमानन्दं संतोषं जनयेयमित्यध्यासीदचिन्तयत्। ध्यायतेर्लुङि च्लेः सिचीट्। अत्रापि नशिजन्योर्णिचि लिङि पूर्ववत्तङि प्राप्ते "अणावकर्मकात्—" इत्यादिनैव परस्मैपदम्। बुधादिसूत्रे तद्ग्रहणं च तद्वदेवाचित्तवत्कर्तृकार्थम्। जनेर्मित्वाद्ध्रस्वत्वम्॥

दृष्ट्वा राघवकान्तां तां द्रावयिष्यामि राक्षसान्।
तस्या हि दर्शनात्पूर्वं विक्रमः कार्यनाशकृत्॥ ५८॥

---

१ विरोधयन् c., E2.
२ नाबोधयत् T2.
३ °लम्पटः T2, T3, T4, T., G., Com.
४ शुचम् N., D., B., T., G., Com., T2, T4.
५ च c., B., E3.

५८. दृष्ट्वेति ॥ तां राघवकान्तां सीतां दृष्ट्वा राक्षसान्द्रावयिष्यामि पलाययिष्यामि । अत्रापि द्रवतेर्ण्यन्तात् "अणौ—" इत्यादिनैव परस्मैपदे सर्वं पूर्ववत् । हि यस्मात्तस्याः दर्शनात्पूर्वं विक्रमः पौरुषं कार्यनाशकृत्कार्यहानिकरः ॥

चिन्तयन्नित्थमुत्तुङ्गैः प्लावयन्तीं दिवं वनैः[१][२] ।
अशोकवनिकामारादपश्यत् स्तवकाचिताम् ॥ ५९ ॥

५९. चिन्तयन्निति ॥ स हनूमानित्थं चिन्तयन्नालोचयन्नुत्तुङ्गैरुन्नतैर्वनैर्वृक्षसमूहैर्दिवमाकाशं प्लावयन्तीं व्याप्नुवन्तीम् । प्लु गताविति धातोर्ण्यन्तात्पूर्ववत्तङि प्राप्ते "बुधयुध—" इत्यादिना परस्मैपदे शतरि ङीप् । स्तवकाचितां गुच्छव्याप्तां अशोकवनिकामशोकवनम् । घनशब्दात्स्वार्थे कप्रत्ययान्ताट्टापि कात्पूर्वस्येत्वम् । आरादद्दूरादपश्यत् ॥

तां प्राविशत्कपिव्याघ्रस्तरूनचलयन् शनैः ।
अत्रासयन् वनेशयान्[३] सुप्तान् शाखासु पक्षिणः ॥ ६० ॥

६०. तामिति ॥ कपिर्व्याघ्र इव कपिव्याघ्रो हनूमान् । उपमितसमासः । तरूनचलयन् अकम्पयन् ॥ "निगरणचलनार्थेभ्यश्च" इति परस्मैपदम् ॥ वने शेरत इति वनशयान् वनपालान् ॥ "अधिकरणे शेतेः" इत्यच्प्रत्ययः ॥ "शयवास—" इत्यादिना विकल्पात्सप्तम्याः लुक् ॥ तथा शाखासु सुप्तान् पक्षिणश्चात्रासयन् ॥ "अणावकर्मकात्—" इत्यादिना परस्मैपदम् ॥ शनैर्मन्दं तां वनिकां प्राविशत् ॥

अवाद्वायुः शनैर्यस्यां लतां[४] नर्तयमानवत् ।
नायासयन्त सन्त्रस्ता ऋतवोऽन्योन्यसंपदः ॥ ६१ ॥

६१. तामेव चतुष्टयेन विशिनष्टि अवादिति ॥ यस्यां वन्यां वायुर्लताः नर्तयमानवत् नृत्यं कारयन्निव शनैरवात् वाति स्म । यस्यामृतवो

---

१ प्लावयन्तीं दिवं शनैः T2.
२ वनम् E2.
३ वनेशयान् C., T1, T4.
४ लता D., E2.

वसन्तादयः संत्रस्ताः रावणात् भीताः सन्तः अन्योन्यसंपदः परस्परपुष्पफलविभूतीर्नायासयन्त न बाधयामासुः । अत्र यस्यतेश्चलनार्थत्वात् नृत्यतेश्चित्तवत्कर्तृकत्वाच्च णौ प्राप्तस्य परस्मैपदस्य "न पादमि—" इत्यादिना प्रतिषेधादात्मनेपदम् ॥

ज्योत्स्नामृतं शशी यस्यां वापीर्विकसितोत्पलाः ।
अपाययत संपूर्णः सदा दशमुखाज्ञया ॥ ६२ ॥

६२. ज्योत्स्नेति ॥ यस्यां शशी दशमुखाज्ञया सदा संपूर्णः सन् विदलितानि विकसितान्युत्पलानि यासु ताः वापीः दीधिकाः ज्योत्स्नामेवामृतमपाययत पायितवान् । पायतेर्वा पिवतेर्वा प्रत्यवसानार्थत्वात् "गतिबुद्धि—" इत्यादिना अणि कर्तुः कर्मत्वे निगरणार्थत्वात्प्राप्तस्य "न पादमि—" इत्यादिना प्रतिषेधः ॥

प्रादमयन्त पुष्पेषुं यस्यां वन्द्यः समाहृताः ।
परिमोहयमानाभी राक्षसीभिः समावृताः ॥ ६३ ॥

६३. प्रेति ॥ यस्यां परिमोहयमाणाभिः व्यामोहयन्तीभिः प्रलोभयन्तीभिः इत्यर्थः । मुह्यतेर्ण्यन्ताल्लटः शानजादेशः ॥ "कृत्यचः" ॥ "णेर्विभाषा" इति कृन्नकारस्य विभाषाणत्वम् ॥ राक्षसीभिः समावृताः परिवेष्टिताः समाहृताः स्वर्गादानीताः बन्द्यो बन्दीकृताः स्त्रियः पुष्पेषुं कामं प्रादमयन्त प्रकर्षेण दमयामासुः सुरतपराकाष्ठया कामस्योद्रेकं शमयामासुरित्यर्थः । दमिपरिमुह्योः "अणावकर्मकात्—" इत्यादिना प्राप्तस्य परस्मैपदस्य "न पादमि"—इत्यादिना प्रतिषेधादात्मनेपदम् ॥

यस्यां वासयते सीतां केवलं स्म रिपुः स्मरात् ।
न त्वरोचयतात्मानं चतुरो बुद्धिमानपि ॥ ६४ ॥

---

१ वापीर्विदलितो° T2, T3, T4, T., G., Com.
२ परिमोहयमाणाभिः N., C., T1, T2, T3, E2, T., G., Com.
३ बुद्धिमानपि C., E2, E3, T1.

६४. यस्यामिति ॥ रिपुः रावणः स्मरात्कामान्ध्यात् सीतां यस्यां वन्यां वासयते स्म । केवलं वासितवानेव न तु भुक्तवानित्याह । चतुरोऽपि स्त्र्यावर्जकुशलोऽपि बुद्धिमानैश्वर्यवानपि आत्मानं तु नारोचयत तस्यै रुचितं कर्तुं न शशाकेत्यर्थः तथा दृढव्रतत्वात्तस्या इति भावः । वसिरुच्योः पूर्ववत्परस्मैपदप्राप्तिप्रतिषेधयोः "णिचश्च" इति तङ् ॥

मन्दायमानगमनो हरितायत्तरूं कपिः ।
द्रुमैः शकशकायद्भिर्मारुतेनाट सर्वतः ॥ ६५ ॥

६५. मन्दायमानेति ॥ अथ कपिर्मन्दायमानगमनः सुप्तजनप्रबोधशङ्कया मन्दीभवद्गतिः सन् । भृशादिक्यङन्ताल्लटः शानच् । हरितायन्तः पलाशवर्णाभवन्तः तरवो यस्यां तां हरितायत्तरूम् । 'पालाशो हरितो हरित्' इत्यमरः । लोहितादिक्यषन्तात् "वा क्यषः" इति लटः परस्मैपदम् । शत्रादेशः । "अप्राणिजातेश्चारज्ज्वादीनामुपसंख्यानम्" इत्यूङ्प्रत्ययः । मारुतेन शकशकायद्भिः वायुघर्षणाच्छकशकीभवद्भिस्तथा ध्वनद्भिरित्यर्थः ॥ "अव्यक्तानुकरणाद्व्यजवरार्धादनितौ डाच्" इति डाचि "डाचि बहुलं द्वे भवतः" इति द्विर्वचनम् । डाजन्तात् "लोहितादिडाज्भ्यः क्यष्" इति क्यषि "वा क्यषः" इति क्यषन्ताल्लटो वा परस्मैपदम् । शत्रादेशः । तैर्द्रुमैरुपलक्षितां यत्तदोर्नित्यसंबन्धात्तामशोकवनिकां सर्वतः समन्तादाट चचार । अटतेर्लिट् ॥

अस्यंदन्निन्दुमणयो व्यरुचन् कुमुदाकराः ।
अलोठिषत वातेन प्रकीर्णाः स्तवकोच्चयाः ॥ ६६ ॥

६६. अस्यदन्निति ॥ इन्दुमणयश्चन्द्रकान्ता अस्यदन् चन्द्रांशुस्पर्शात्प्रसुस्रुवुः । कुमुदाकराः व्यरुचन् विचकसुरित्यर्थः । स्तवकोच्चयाः

१ अस्यन्दन् N., C., D., $E_4$, c., $T_1$, $T_2$, $T_3$, $T_4$.

२ आलोठिषत B.

अन्येऽपि कुसुमगुच्छव्रजाः वातेन प्रकीर्णाः विक्षिप्ताः सन्तः अलोठिषत लुठन्ति स्म । सर्वत्र लुङि द्युतादित्वात् "पुषादि—" इत्यादिना च्लेरङादेशः ॥ "द्युद्भ्यो लुङि" इति विकल्पात्परस्मैपदं लुठेस्तङ्च ॥

सीतान्तिके विवृत्सन्तं वर्त्स्यत्सिद्धिं प्लवङ्गमम् ।
पतत्रिणः शुभा मन्द्रमानुवानास्त्वजिह्लदन् ॥ ६७ ॥

६७. सीतेति ॥ सीतान्तिके विवृत्सन्तं वर्त्तितुमिच्छन्तमन्तिकं गन्तुमिच्छन्तमित्यर्थः । वृतु वर्त्तने इति धातोः सनन्ताल्लटः शत्रादेशः । वर्त्स्यत्सिद्धिं वर्त्तिष्यमाणसिद्धिमासन्नकार्यसिद्धिकमित्यर्थः ॥ "वृद्भ्यः स्यसनोः" इत्युभयत्र विकल्पात्परस्मैपदम् ॥ "न वृद्भ्यश्चतुर्भ्यः" इतीट्प्रतिषेधश्च ॥ प्लवङ्गमं हनूमन्तं शुभाः शुभावेदकाः पतत्रिणः पक्षिणः मन्द्रं गम्भीरमानुवाना धन्योऽसीति स्तुवाना इवेत्यर्थः । गम्योत्प्रेक्षा । नु स्तुताविति धातोः "आङि नुप्रच्छ्योः" इत्युपसंख्यानादात्मनेपदम् । अजिह्लदन् आह्लादयन्ति स्म । ह्लादेर्णौ चङ्युपधाह्रस्वः ॥

वर्त्तिष्यमाणमात्मानं सीता पत्युरिवान्तिके ।
उदपश्यत्तदा तथ्यैर्निमित्तैरिष्टदर्शनैः ॥ ६८ ॥

६८. वर्त्तिष्यमाणमिति ॥ तदा तस्मिन्हनुमदागमनकाले सीता तथ्यैरवितथैरिष्टदर्शनैरिष्टावेदकैः । कर्त्तरि ल्युट् । निमित्तैर्वामाक्षिस्पन्दादिहेतुभिरात्मानं पत्युः रामस्यान्तिके वर्त्तिष्यमाणमिव स्थास्यन्तमिव ॥ "वृद्भ्यः स्यसनोः" इति परस्मैपदविकल्पादात्मनेपदम् । उदपश्यत् उत्प्रेक्षितवती । पतिप्राप्तिमतर्कयदित्यर्थः ॥

निरवर्त्स्यन्न चेद्वार्त्ता सीताया वितथैव नः ।
अकल्प्स्यदुद्यतिः सर्वा हनूमानित्यचिन्तयत् ॥ ६९ ॥

६९. निरिति ॥ सीतायाः वार्त्ता वृत्तान्तो न निरवर्त्स्यच्चेन्न निर्वृत्ता न जाता चेदित्यर्थः ॥ "वृद्भ्यः स्यसनोः" इति वृत्तेर्लृङि परस्मैपदम् ।

तदा नोऽस्माकं सर्वा समुद्रलङ्घनादिरुयातिरुथमः । यमेः स्त्रियां क्तिन् ॥ "अनुदात्तोपदेश—" इत्यादिना अनुनासिकलोपः ॥ वितथा व्यर्थैवाकल्प्स्यदभविष्यत् । कृपेर्लृङि "लुटि च कॢपः" इति चकाराद्वा परस्मैपदम् । लुटि नोदाहृतम् । इति हनूमानचिन्तयत् । सर्वथा सीता द्रष्टव्येति निश्चङ्कितवानित्यर्थः ॥

## अथ कारकाधिकारः ।

वृक्षाद्वृक्षं परिक्रामन् रावणाद्बिभ्यतीं भृशम् ।
शत्रोस्त्राणमपश्यन्तीमदृश्यो जनकात्मजाम् ॥ ७० ॥

७०. अथ कारकाधिकारः ॥ तत्रापादानकारकं त्रिभिः कुलकेनाह वृक्षादित्यादिभिः । अथ कपिकुञ्जरः स हनूमान् । उपमितसमासः । अदृश्योऽलक्ष्यः सन् वृक्षात्सकाशात् ॥ "ध्रुवमपायेऽपादानम्" इत्यपादानत्वात्पञ्चमी ॥ वृक्षं परिक्रामन् तां जनकात्मजां सीतामपश्यदित्यन्वयः । कीदृशीम् । राक्षसाद्रावणाद्बिभ्यतीं त्रस्यन्तीम् । बिभेतेः शतरि ङीप् ॥ "नाभ्यस्ताच्छतुः" इति नुम्प्रतिषेधः ॥ पुनः शत्रोः रावणात् त्राणं रक्षणमपश्यन्तीं त्रातारमलभमानामित्यर्थः ॥ "भीत्रार्थानां भयहेतुः" इति क्रमादुभयत्रापादानसंज्ञा ॥

तां पराजयमानां स प्रीते रक्ष्यां दशाननात् ।
अन्तर्दधानां रक्षोभ्यो मलिनां म्लानमूर्धजाम् ॥ ७१ ॥

७१. तामिति ॥ पुनस्तस्य रावणस्य प्रीतेरनुरागात् पराजयमानां पराङ्मुखीभवन्तीं तामसहमानामित्यर्थः ॥ "पराजेरसोढः" इति प्रीतेरपादानत्वम् । पुनः कीदृशीम् । दशाननात् स्वकान्तादीप्सितात्तत्कान्ताभिः सीताचापलशङ्किनीभिः सापत्न्यार्थं रक्ष्यां वार्यां वारणीयत्वेनाभिमताम् । अन्यथा तस्य तदेकायत्तत्वे स्वसौभाग्यभङ्ग-

१ कपिः $T_1$, $T_2$, $T_4$. | २ ध्याम॰ C., $E_1$, $E_2$. रूक्ष c.

प्रसङ्गादिति सीतायाः सौन्दर्यातिशयोक्तिः ॥ "वारणार्थानामीप्सितः" इति रावणस्यापादानत्वम् ॥ तथा रक्षोभ्योऽन्तर्दधानां रक्षांसि मां मा द्राक्षुरिति लीयमानामित्यर्थः ॥ "अन्तर्धौ येनादर्शनमिच्छति" इत्यपादानत्वम् ॥ मलिनां संस्काराभावान्मलिनाङ्गीमत एव म्लानमूर्धजां रूक्षकेशीम् ॥

रामादधीतसंदेशो वायोर्जातश्च्युतस्मिताम् ।
प्रभवन्तीमिवादित्यादपश्यत्कपिकुञ्जरः ॥ ७२ ॥

७२. रामादिति ॥ रामादाख्यातुरधीतसंदेशो भक्त्या गृहीतवाचिकः ॥ "आख्यातोपयोगे" इति रामस्यापादानत्वम् ॥ वायोः प्रकृतिभूताज्जात उत्पन्नः ॥ "जनिकर्त्तुः प्रकृतिः" इति वायोरपादानत्वम् ॥ च्युतस्मितामिति शोकादस्तमितहासामादित्यात्प्रभवन्तीमिव तेजसा सूर्यात्प्रादुर्भवन्तीमिव स्थिताम् ॥ "भुवः प्रभवः" इत्यादित्यस्यापादानत्वम् ॥

रोचमानः कुदृष्टिभ्यो रक्षोभ्यः प्रत्तवान् श्रियम् ।
श्लाघमानः[1] परस्त्रीभ्यस्तत्रागाद्राक्षसाधिपः[2] ॥ ७३ ॥

७३. अथ पञ्चभिः संप्रदानकारकभेदानुदाहरति । रोचमान इति ॥ कुदृष्टिभ्यः कुबुद्धिभ्यो दुरात्मभ्यो रोचमानो रुचिकरो न तु साधुभ्य इति भावः ॥ "रुच्यर्थानां प्रीयमाणः" इति संप्रदानत्वम् ॥ रक्षोभ्यः श्रियं प्रत्तवान् प्रकर्षेण दत्तवान् । प्रपूर्वाद्ददातेः क्तवतुप्रत्ययः ॥ "अच उपसर्गात्तः" इति दस्तकारः ॥ "कर्मणा यमभिप्रैति—" इत्यादिना रक्षसां संप्रदानत्वम् ॥ परस्त्रीभ्यः श्लाघमानः कत्थमानः । तासां यथाविदितं तथा ताः स्तुवानस्तत्कामुकतयेत्यर्थः ॥ "श्लाघह्नुङ्—" इत्यादिना स्त्रीणां संप्रदानत्वम् ॥ एवंभूतो राक्षसेश्वरो रावणस्तत्र तस्मिन् सीतादर्शनकाल एवागात् । तं देशमागत इत्यर्थः ॥ आङ्पूर्वादिणः "इणो गा लुङि" इति गादेशः ॥

१ श्लाघ्यमानः D. | २ °गाद्राक्षसेश्वरः T., G., Com.

अशप्त[1] निह्नुवानोऽसौ सीतायै स्मरमोहितः।
धारयन्निव चैतस्यै[2] वसूनि प्रत्यपद्यत[3] ॥ ७४ ॥

७४. अशप्यदिति ॥ स्मरमोहितः कामान्धोऽसौ रावणः अस्यै सीतायै निह्नुवानः सौजन्यनाटकेन स्वदौर्जन्यमपह्नुवानः अस्यै सीतायै अशप्यत् न कदाचिदपरात्स्यामीति शपथमकार्षीदित्यर्थः। शपेर्दैवादिकाल्लङ् ॥ "श्लाघह्नुङ्स्थाशपाम्—" इत्यादिना सीताया उभयत्र संप्रदानत्वम् ॥ किं चैतस्यै सीतायै धारयन्निवाधमर्ण्ये तिष्ठन्निव ॥ "धारेरुत्तमर्णः" इति सीतायाः संप्रदानत्वम् ॥ वसूनि सर्वस्वानि च प्रत्यपद्यत प्रतिपन्नवान् प्रतिश्रुतवानित्यर्थः ॥

तस्यै स्पृहयमाणोऽसौ बहु प्रियमभाषत।
सानुनीतिश्च सीतायै नाक्रुध्यन्नाभ्यसूयत[4][5][6] ॥ ७५ ॥

७५. तस्या इति ॥ असौ रावणस्तस्यै सीतायै स्पृहयमाणस्तामीप्सन् ॥ "स्पृहेरीप्सितः" इति संप्रदानत्वम् ॥ बहु प्रियमभाषत। किं च सानुनीतिरनुनययुक्तः सन् सीतायै नाक्रुध्यत् अतिप्रातिकूल्येऽपि न चुक्रोध नाभ्यसूयत च असूयां च न चकारेत्यर्थः ॥ "क्रुधद्रुहेर्ष्या—" इत्यादिना उभयत्र सीतायाः संप्रदानत्वम् ॥

संक्रुध्यसि मृषा किं त्वं दिदृक्षुं मां मृगेक्षणे।
ईक्षितव्यं परस्त्रीभ्यः स्वधर्मो रक्षसामयम् ॥ ७६ ॥

७६. समिति ॥ हे मृगेक्षणे सीते दिदृक्षुं त्वां द्रष्टुमिच्छुं मां त्वं किं मृषा मुधा संक्रुध्यसि। पूर्वेण संप्रदानत्वे प्राप्ते "क्रुधद्रुहोरुपसृष्टयोः कर्म" इति कर्मत्वम्। किं च परस्त्रीभ्यः ईक्षितव्यं तासां शुभाशुभप्रश्ने तत्परीक्षार्थं यदीक्षणं भवितव्यम् ॥ "राधीक्ष्योर्यस्य विप्रश्नः"

---

१ अशप्यश्नि° D., T3, T4, T., G., Com.
२ चैवास्यै T2, T3, T4.
३ °मयाचत T3.
४ नासूयत न चाक्रुधत् T3, T4.
५ नाभ्यसूयत T., G., Com.
६ च T4.

इति स्त्रीणां संप्रदानत्वम् ॥ अयम् । विधेयप्राधान्यात्पुल्लिङ्गनिर्देशः । रक्षसां स्वधर्मो जातिप्रयुक्तो धर्मः । अतो नायं दोष इति भावः ॥

शृण्वद्भ्यः प्रतिशृण्वन्ति मध्यमा भीरु नोत्तमाः ।
गृणद्भ्योऽनुगृणन्त्यन्ये कृतार्था नैव मद्विधाः ॥ ७७ ॥

७७. शृण्वद्भ्य इति ॥ हे भीरु भक्तो । संज्ञापूर्वकस्य विधेरनित्यत्वान्न गुणः । अन्ये मद्व्यतिरिक्ताः मध्यमाः शृण्वद्भ्यः श्रुतशालिभ्य इदं कार्यमिदमकार्यमिति हिताहितमुपदिशद्भ्य इत्यर्थः । प्रतिशृण्वन्ति अभ्युपगच्छन्ति तथैव कुर्म इति प्रतिजानत इत्यर्थः । 'संविदागूः प्रतिज्ञानं नियमाश्रवसंश्रवाः । अङ्गीकाराऽभ्युपगमप्रतिश्रवसमाधयः' ॥ इत्यमरः ॥ "प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ता" इति शृण्वतां संप्रदानत्वम् ॥ तेषां प्रतिश्रवापेक्षया पूर्वस्यामुपदेशक्रियायां कर्त्तृत्वादिति । कृतार्थाः कृतकृत्याः स्वयमेव कार्याकार्यज्ञा मद्विधा उत्तमास्तु नैवं न परोपदेशापेक्षा इत्यर्थः । किं च पूर्वोक्ता मध्यमाः गृणद्भ्यः शंसद्भ्यः स्तावकेभ्यः अनुगृणन्ति दित्सासूचकालापैः प्रोत्साहयन्ति मद्विधास्तूत्तमाः स्तुतिं विनैवार्थिभ्यः प्रयच्छन्तीत्यर्थः । शंसितुः प्रोत्साहनमनुगरः प्रतिगरश्चोच्यते ॥ "अनुप्रतिगृणश्च" इति पूर्वस्य शंसनकर्त्तुः संप्रदानत्वम् ॥

इच्छ स्नेहेन[1] दीव्यन्ती विषयान् भुवनेश्वरम् ।
संभोगाय परिक्रीतः कर्त्तास्मि तव नाप्रियम् ॥ ७८ ॥

७८. इच्छेति ॥ विषयान् दीव्यन्ती शब्दादिविषयैः क्रीडन्ती त्वम् ॥ "दिवः कर्म च" इति देवकरणस्य विकल्पात्कर्मत्वम् ॥ भुवनेश्वरं त्रैलोक्यनाथं मां स्नेहेन करणेनेच्छ प्रतीच्छ ॥ "साधकतमं करणम्" इति करणत्वात्तृतीया ॥ किं च सम्भोगाय परिक्रीतः संभोगेन परिक्रीतः दासीकृतोऽहम् ॥ "परिक्रयणे संप्रदानमन्यतरस्याम्" इति विकल्पा-

---

[1] योगेन T2, T4.

त्परिक्रियणकरणस्य संभोगस्य संप्रदानत्वम् ॥ तवाप्रियं न कर्त्तास्मि न करिष्यामि। करोतेर्लुटि मिपि तास् ॥

आस्स्व साकं मया सौधे माधिष्ठा निर्जनं वनम्।
माधिवात्सीर्भुवं शय्यामधिशेष्व स्मरोत्सुका ॥ ७९ ॥

७९. आस्स्वेति ॥ मया साकं सौधे आस्स्व ॥ "आधारोऽधिकरणम्" इति सौधस्याधिकरणत्वम् ॥ निर्जनं वनं माधिष्ठाः वने न तिष्ठेत्यर्थः ॥ "अधिशीङ्स्थासां कर्म" इति वनस्य कर्मत्वम् ॥ तिष्ठतेर्माङि लुङि सिपि "गातिस्था—" इत्यादिना सिचो लुक् ॥ "न माङ्योगे" इत्यडभावः ॥ भुवं माधिवात्सीः भुवि न वस नाधः शेष्वेत्यर्थः। वसेर्माङि लुङि सिचि वृद्धिः ॥ "उपान्वध्याङ्वसः" इति भुवः कर्मत्वम् ॥ किन्तु स्मरोत्सुका सुरतासक्ता शय्यामधिशेष्व शय्यायां शेष्वेत्यर्थः ॥ "अधिशीङ्—" इत्यादिना कर्मत्वम् ॥

अभिन्यविक्षथास्त्वं मे यथैवाव्याहता[1] मनः।
तवाप्यध्यावसन्तं मां मा रौत्सीर्हृदयं तथा ॥ ८० ॥

८०. अभीति ॥ यथैव त्वं मे मनो हृदयं अव्याहतमनिवारितमभिन्यविक्षथाः मनसि निविष्टासीत्यर्थः। अभिनिपूर्वाद्विशेर्लुङि "नेर्विशः" इति तङि थासि "शल इगुपधादनिटः क्सः" इति क्सः ॥ "अभिनिविशश्च" इत्याधारस्य मनसः कर्मत्वम् ॥ तथैव तव हृदयमध्यावसन्तं हृदये वसन्तम् ॥ "उपान्व—" इत्यादिना हृदयस्य कर्मत्वम् ॥ मां मा रौत्सीर्मा निवारय। रुधेर्लुङि सिपि सिचि "वदव्रज—" इत्यादिना वृद्धिः ॥ यथा त्वय्यहमनुरक्तस्तथा त्वमपि मय्यनुरक्ता भवेत्यर्थः ॥

मावमंस्था नमस्यन्तमकार्यज्ञे जगत्पतिम् ॥
संदृष्टे मयि काकुत्स्थमधन्यं कामयेत का ॥ ८१ ॥

१ °व्याहतं B., T., G., Com. | २ त्वमप्य° T₂, T₃, D.

८१. न च रामो न त्याज्य इत्याह मेति ॥ हे अकार्यज्ञे मूढे नमस्यन्तं प्रणमन्तम् ॥ "नमोवरिवश्चित्रङः क्यच्" इति क्यजन्ताल्लटः शत्रादेशः ॥ जगत्पतिं जगद्वन्द्यं मां मावमंस्थाः मावमन्यस्व । मन्यतेः कर्त्तरि लुङि थास् ॥ "कर्त्तुरीप्सिततमं कर्म" इति जगत्पतेः कर्मत्वम् ॥ मयि संदृष्टे सति अधन्यमभाग्यं काकुत्स्थं रामम् ॥ "तथायुक्तं चानीप्सितम्" इति रामस्यानीप्सितकर्मत्वम् ॥ का स्त्री कामयेत न कापीत्यर्थः ॥

यः पयो दोग्धि पाषाणं स रामाद्भूतिमाप्नुयात् ।
रावणं गमय प्रीतिं बोधयन्तं हिताहितम् ॥ ८२ ॥

८२. य इति ॥ यो जनः पाषाणं पयः क्षीरं दोग्धि ॥ "दुहियाचि—" इति वचनाद्दुहेर्द्विकर्मकत्वम् । तत्र पयस ईप्सितकर्मत्वं पाषाणस्य "अकथितं च" इत्यकथितकर्मत्वम् । स पाषाणपयोदोग्धा रामाद्भूतिं संपदमाप्नुयात् । तद्वदसंभावितमित्यर्थः । अत्रोत्तरवाक्यार्थे पूर्ववाक्यार्थारोपेणौपम्यावगमाद्वाक्यार्थवृत्तिरसंभवद्वस्तुसंबन्धो निदर्शनालङ्कारः । 'असंभवद्वस्तुयोगादुपमानोपमेययोः । प्रतिबिम्बक्रिया गम्या यत्र सा स्यान्निदर्शना ॥" इति लक्षणात् । हिताहितं हिताहिते ॥ "विप्रतिषिद्धं चानधिकरणवाचि" इति द्वन्द्वैकवद्भावः । बोधयन्तं त्वामिति शेषः । रावणं प्रीतिं गमय । उभयत्रापि "गतिबुद्धि—" इत्यादिना अणि कर्त्तुः कर्मत्वम् ॥

प्रीतोऽहं भोजयिष्यामि भवतीं भुवनत्रयम्[1] ।
किं विलापयसेऽत्यर्थं पार्श्वे शायय रावणम् ॥ ८३ ॥

८३. स्वप्रीतेः फलमाह प्रीत इति ॥ अहं प्रीतः सन् भवतीं भुवनत्रयं भोजयिष्यामि । निगरणार्थत्वात्परस्मैपदम् । किमत्यर्थं विलापयसे विविधं भाषयसे आत्मानमिति शेषः ॥ "णिचश्च" इत्यात्मनेपदम् ॥ रावणं

---

१ भुवनश्रियम् T२.

पार्श्वे शायय ॥ "अणावकर्मकात्—" इत्यादिना परस्मैपदम् ॥ सर्वत्र "गतिबुद्धि—" इत्यादिना अणि कर्त्तुः कर्मत्वम् ॥

आज्ञां कारय रक्षोभिर्मां प्रियाण्युपहारय ।
कः शक्रेण कृतं नेच्छेदधिमूर्धानमञ्जलिम् ॥ ८४ ॥

८४. आज्ञामिति ॥ रक्षोभिः प्रयोज्यैः आज्ञां त्वद्वाक्यं कारय मां प्रियाण्युपहारय । मम प्रियवस्तून्यानयेत्यर्थः ॥ "ह्रक्रोरन्यतरस्याम्" इत्यणि कर्त्तुः कर्मत्वे उभयत्र "तत्प्रयोजको हेतुश्च" इति सीतायाः प्रयोजककर्त्तृत्वमन्येषां प्रयोज्यकर्मत्वम् । किं च शक्रेण कृतम् ॥ "स्वतन्त्रः कर्त्ता" इति कर्त्तृसंज्ञायां कर्त्तरि तृतीया ॥ अधिगतो मूर्धानमधिमूर्धा मूर्धगतः "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समासः । तमञ्जलिं को नेच्छेत् । कस्येदं नाशास्यमित्यर्थः । मत्स्वीकारे त्वमिन्द्रवन्द्या भविष्यसीति भावः ॥

## अथ कर्मप्रवचनीयाः ।

वचनं रक्षसां पत्युरनु क्रुद्धा पतिप्रिया ।
पापानुवसितं[1] सीता रावणं प्राब्रवीद्वचः ॥ ८५ ॥

८५. वचनमिति ॥ पतिप्रिया पतिव्रता सीता रक्षसां पत्युः रावणस्य वचनमनु क्रुद्धा वचनेन हेतुना क्रुद्धा सतीत्यर्थः ॥ "अनुर्लक्षणे" इति हेत्वर्थे कर्मप्रवचनीयसंज्ञा ॥ अत्र सूत्रे लक्षणशब्दस्य हेत्वर्थत्वात् "लक्षणेत्थंभूत—" आदिसूत्रे चिह्नवचनत्वादिति ॥ "कर्मप्रवचनीययुक्ते द्वितीया" इति द्वितीया ॥ पापमनु पापानु पापेन सहेत्यर्थः ॥ "तृतीयार्थे" इति तृतीयार्थे द्योत्ये अनोः कर्मप्रवचनीयसंज्ञायां सहार्थतृतीयापवादेन द्वितीयायां कविना स्वातन्त्र्यात् 'द्वितीया' इति योगविभागात् 'सुप्सुपा' इति वा समासः कृतः । अवसितं पापेन संबद्धं पापिष्ठमित्यर्थः । षिञ् बन्धने इति धातोः कर्त्तरि क्तः । रावणं वचः प्राब्रवीत् प्रोवाच । "ब्रुविशासि—" इति द्विकर्मकत्वम् ॥

---

१ पापान्ववसितं D., T., G., Com.

न भवाननु रामं चेदुप शूरेषु वा ततः ।
अपवाह्य छलाद्वीरौ किमर्थं मामिहाहरः ॥ ८६ ॥

८६. नेति ॥ हे पाप त्वं राममनु रामाद्धीनो न चेत् ॥ "हीने" इत्यनोर्हीनार्थे कर्मप्रवचनीयत्वात् द्वितीया । शूरेषु वा उप चेत् शूरेभ्योऽधिकश्चेदित्यर्थः ॥ "उपोऽधिके च" इत्यधिकार्थे कर्मप्रवचनीयसंज्ञायां तद्योगे "यस्मादधिकम्—" इत्यादिना सप्तमी ॥ ततस्तर्हि छलान्मायामृगव्याजाद्वीरौ रामलक्ष्मणौ अपवाह्य वञ्चयित्वा किमर्थं मामिहाहरः आहृतवान् । तस्मात्त्वं चोरो न शूर इत्यर्थः ॥

उप शूरं न ते वृत्तं कथं रात्रिंचराधम ।
यत्संप्रत्यप लोकेभ्यो लङ्कायां वसतिर्भयात् ॥ ८७ ॥

८७. उपेति ॥ हे रात्रिंचराधम कथं ते तव वृत्तं चरित्रं शूरमुप शूरजनाद्धीनं न ॥ "उपोऽधिके च" इति चकारादुपशब्दस्य हीनार्थे कर्मप्रवचनीयत्वे तद्योगात् द्वितीया । कुतः यद्यस्मात्संप्रतीदानीं भयाल्लोकेभ्योऽप शूरशरणान् लोकान् वर्जयित्वा ॥ "अपपरीवर्जने" इत्यपशब्दस्य वर्जनार्थे कर्मप्रवचनीयत्वे "पञ्चम्यपाङ्परिभिः" इति द्वितीयापवादेन पञ्चमी ॥ लङ्कायां वसतिर्निवासः । वसेरतिप्रत्यय औणादिकः । दुर्गबलजीवी भवान्न भुजबलजीवीति न कथं शूरलोकबाह्य इत्यर्थः ॥

आ रामदर्शनात् पाप विद्योतस्व श्रियः प्रति ।
सद्वृत्ताननु दुर्वृत्तः परि स्त्रीं जातमन्मथः ॥ ८८ ॥

८८. आरामेति ॥ हे पाप पापाचार आ रामदर्शनाद्रामदर्शनपर्यन्तम् ॥ "आङ् मर्यादावचने" इत्याङः कर्मप्रवचनीयत्वात्तद्योगे "पञ्चम्यपाङ्-

१ त्वं पापानु T., G., Com.
२ श्रियं T., G., Com.
स्त्रियं B., E2.
३ परस्त्रीजात° E2, E3, B.

रिभिः" इति पञ्चमी ॥ सद्वृत्तानन्नु साधून्प्रति दुर्वृत्तो दुष्टचरित्रः सन् साधुबाधकः सन्नित्यर्थः ॥ "लक्षणेत्थंभूत—" इत्यादिना अनोरित्थंभूताख्याने कर्मप्रवचनीयत्वम् ॥ तथा परि स्त्रीं स्त्रीं स्त्रीं प्रति । तेनैव परेर्वीप्सायां कर्मप्रवचनीयत्वम् ॥ "वाम्शसोः" इति विकल्पादियङ्भावपक्षे "अमि पूर्वः" इति पूर्वरूपत्वम् ॥ जातमन्मथः सन् श्रियं प्रति लक्ष्मीं लक्षीकृत्य विद्योतस्व श्रीमानयमिति श्रीचिह्नः सन् दीप्यस्व । रामदर्शने सति त्वं सद्यो विनङ्क्ष्यसीति भावः । तेनैव प्रतेर्लक्षणार्थे कर्मप्रवचनीयत्वम् । सर्वत्र तद्योगाद् द्वितीया ॥

अभि द्योतिष्यते रामो भवन्तमचिरादिह ।
उद्गूर्णबाणः संग्रामे यो नारायणतः प्रति ॥ ८९ ॥

८९. अभीति ॥ किं चाचिरात् क्षिप्रमेव रामो भवन्तमभि त्वां लक्षीकृत्य भवन्तं लक्षीकृत्येत्यर्थः द्योतिष्यते भवदाभिमुख्येन स्थास्यत इत्यर्थः ॥ "अभिरभागे" इत्यभेर्लक्षणार्थे कर्मप्रवचनीयत्वं तद्योगाद्द्वितीया ॥ संग्रामे रणे उद्गूर्णबाण उद्यतेषुर्यो रामो नारायणतो नारायणात्प्रति तस्य प्रतिनिधिस्तत्सदृश इत्यर्थः ॥ "प्रतिः प्रतिनिधिप्रतिदानयोः" इति प्रतेः प्रतिनिधौ कर्मप्रवचनीयत्वम् ॥ "प्रतिनिधिप्रतिदाने च यस्मात्" इति द्वितीयापवादिनी पञ्चमी ॥ पञ्चम्यास्तसिः ॥

कुतोऽधि यास्यसि क्रूर निहतस्तेन पत्रिभिः ।
न सूक्तं भवतात्युग्रमति रामं[1] मदोद्धत ॥ ९० ॥

९०. कुत इति ॥ हे क्रूर तेन रामेण पत्रिभिर्बाणैः निहतः प्रहृतः सन् कुतोऽधि यास्यसि क्व यास्यसीत्यर्थः ॥ "अधिपरी अनर्थकौ" इत्यधेरनर्थकत्वाद्धात्वर्थातिरिक्तार्थरहितत्वात्कर्मप्रवचनीयत्वं गत्युपसर्गसंज्ञाबाधनार्थमन्यथा "गतिर्गतौ" इति निघातापातात् ॥ हे मदोद्धत भवता अत्युग्रं यथा तथा अति रामं राममतिक्रम्य ॥ "अतिरतिक्रमणे च" इति कर्मप्रवचनीयत्वे द्वितीया ॥ न सूक्तं साधु नोक्तम् ॥ "सुः

१ °मभिरामं D., B. | °मधिरामं E₈.

पूजायाम्" इति कर्मप्रवचनीयत्वम् ॥ सर्वस्यास्य फलमाशुभावीति भावः ॥

परिशेषं न नामापि स्थापयिष्यति ते विभुः ।
अपि स्थाणुं जयेद्रामो भवतो ग्रहणं कियत् ॥ ९१ ॥

९१. परीति ॥ विभुः प्रभुः रामः ते नाम्नोऽपि परिशेषमवशेषं न स्थापयिष्यति किमुत कायमित्यर्थः । अत्राप्रयुक्तकायपदार्थद्योतकत्वादपेः "अपिः पदार्थ—" इत्यादिना पदार्थे कर्मप्रवचनीयत्वम् । तथाहि रामः स्थाणुं रुद्रमपि जयेद्यस्ते शरणमिति भावः । तेनैव संभावनायां कर्मप्रवचनीयत्वम् । भवतो ग्रहणं बन्धनं कियत् । उभयत्रापि संज्ञाकरणस्योपसर्गसंज्ञानिवृत्त्यर्थत्वात् "उपसर्गात्सुनोति—" इत्यादिना न स्थासकारस्य षत्वम् ॥

अपि स्तुह्यपि सेधास्मांस्तथ्यमुक्तं नराशन ।
अपि सिञ्चेः कृशानौ त्वं दर्पं मय्यपि योऽभिकः ॥ ९२ ॥

९२. अपीति ॥ हे नराशन मनुष्यभक्षक अस्मानपि स्तुहि स्तुहि वा अपि सेध निषेध निन्द वेत्यर्थः । धातूनामनेकार्थत्वात् । अपेरन्ववसर्गे कामचारे तेनैव संज्ञा । तथ्यं 'परिशेषं न नाम्नोऽपि' इति वाक्यं यथार्थमुक्तोऽसि । 'अप्रधाने दुहादीनाम्' इत्यप्रधाने कर्मणि क्तः । किं च मय्यपि चाभीकः कामुकस्त्वम् ॥ "अनुकाभिकाभीकः कमिता" इति निपातनात्साधुः ॥ कृशानावपि दर्पं वीर्यं सिञ्चेः क्षारयेः । अत्र तेनैव गर्हायां संज्ञा । अत्र सर्वत्रोपसर्गसंज्ञानिवृत्त्यर्थत्वात् स्तौतिसेधतिसिञ्चतीनाम् "उपसर्गात्सुनोति—" इत्यादिना न षत्वम् । मत्कामुकस्त्वं कृशानौ वीर्यं सिञ्चेरित्यसंभवद्वस्तुसंबन्धो निदर्शनालङ्कारः ॥

---

१ नाम्नोऽपि D., T., G., Com.
२ प्रभुः E2.
३ ग्रहणे T2.
४ थ्यमुक्तो E2, T., G., Com.
५ रेतो D.

अधि रामे पराक्रान्तमधिकर्त्ता स ते क्षयम्।
इत्युक्त्वा मैथिली तूष्णीमासाञ्चक्रे दशाननम्॥ ९३॥

९३. अधीति॥ अधि रामे स्वामिनि पराक्रान्तं पराक्रमः संवर्त्तते इति शेषः। नपुंसके भावे क्तः॥ "अधिरीश्वरे" इति रामपराक्रमयोः स्वस्वामिभावसंबन्धे द्योत्ये अधेः कर्मप्रवचनीयत्वे "यस्मादधिकं यस्य चेश्वरवचनम्—" इत्यादिना द्वितीयापवादेन सप्तमी॥ अतः स पराक्रमस्वामी रामः ते तव क्षयं नाशमधिकर्त्ता करिष्यति॥ "विभाषा कृञि" इति संज्ञाभावपक्षे "कर्मणि द्वितीया"॥ संज्ञापक्षे उपसर्गसंज्ञाबाधात् "तिङि चोदात्तवति" इति निघाताभावः फलम्। मैथिली दशाननमित्युक्त्वा तूष्णीमासाञ्चक्रे जोषमास्त॥ "दयाया-सश्च" इत्याम्प्रत्ययः॥

ततः खड्गं समुद्यम्य रावणः क्रूरविग्रहः।
वैदेहीमन्तरा क्रुद्धः क्षणमूचे विनिश्वसन्॥ ९४॥

९४. अथानभिहिताधिकारः। तत इति॥ ततः सीतावचनानन्तरं क्रुद्धः अत एव क्रूरविग्रहो भीषणाकारो रावणः वैदेहीमात्मानं चेति शेषः। अन्तरा उभयोर्मध्य इत्यर्थः। खड्गमुद्यम्य क्षणं विनिश्वसन् रोषाद्दीर्घमुष्णं च निःश्वसन्नित्यर्थः ऊचे वक्ष्यमाणं वाक्यमुवाच। क्रमात्खड्गादिषु "कर्मणि द्वितीया" "अन्तरान्तरेण युक्ते" "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया॥

चिरेणानुगुणं प्रोक्ता प्रतिपत्तिपराङ्मुखी।
न मासे प्रतिपत्तासे मां चेन्मर्त्तासि मैथिलि॥ ९५॥

९५. चिरेणेति॥ मैथिलि चिरेण चिरकालेनानुगुणमनुकूलं प्रियं प्रोक्ता। दुहादित्वादप्रधाने कर्मणि क्तः। तथापि प्रतिपत्तेरङ्गीकारस्य पराङ्मुखी। चिरेणेत्यपवर्गतृतीयार्थेऽव्ययम्। मां मासे मासान्न प्रतिपत्तासे चेत् न प्राप्स्यसे चेत्। पद्यतेर्लुटि "थासः से" इति से

आदेशः। मर्तासि मरिष्यसि॥ "म्रियतेर्लुङ्लिङोश्च" इति नियमाल्लुटि परस्मैपदम्॥ त्वं मामिति कर्तृकर्मकारकमध्यगतत्वात् "सप्तमीपञ्चम्यौ कारकमध्ये" इति मासे इति सप्तमी॥

प्रायुङ्क्त राक्षसीर्भीमा मन्दिराय प्रतिव्रजन्।[1]
भयानि दत्त सीतायै सर्वा यूयं कृते मम॥ ९६॥[2]

९६. प्रेति॥ स रावणो मन्दिराय प्रतिव्रजन् मन्दिरं गच्छन्॥ "गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि" इति चतुर्थी॥ सर्वा यूयं मम कृते मदर्थं सीतायै भयानि दत्त भयान्युत्पादयतेत्यर्थः॥ "चतुर्थी संप्रदाने" इति चतुर्थी॥ भीमाः भयङ्करीः राक्षसीः प्रायुङ्क्त नियुक्तवान्॥

गते तस्मिन् समाजग्मुर्भयाय प्रति मैथिलीम्।[3]
राक्षस्यो रावणप्रीत्यै क्रूरं चोचुरलं मुहुः॥ ९७॥[4][5]

९७. कर्मप्रवचनीयादिसूत्रचतुष्टयं तदधिकार एवोदाहृतत्वादत्र नोदाहृतम्॥ गत इति॥ तस्मिन् रावणे गते सति राक्षस्यः भयाय भयमुत्पादयितुम्॥ "क्रियार्थोपपदस्य—" इत्यादिना चतुर्थी॥ मैथिलीं प्रति समाजग्मुः। रावणप्रीत्यै रावणं प्रीणयितुम्॥ "तुमर्थाच्च भाववचनात्" इति चतुर्थी॥ मुहुर्मुहुः क्रूरं वाक्यमूचुः॥

रावणाय नमस्कुर्याः स्यात्सीते स्वस्ति ते ध्रुवम्।[6][7]
अन्यथा प्रातराशाय कुर्याम त्वामलं वयम्॥ ९८॥

९८. रावणाय इति॥ हे सीते रावणाय नमस्कुर्याः प्रणम। तदा ते तुभ्यं स्वस्ति भद्रं स्यात्। अन्यथा अनमस्कारे वयं त्वां प्रातराशाय

---

१ परिव्रजन् E2, D.
२ भयं दद्ध्वं T2, T3, T4.
३ मैथिलीं प्रति B.
४ क्रूरमूचु° T2, T3, T4.
५ °चुर्मुहुर्मुहुः T., G., Com.
६ मनः कुर्याः T2, T4.
७ सीते स्यात् E3.

प्रातर्भोजनाय अलं पर्याप्तं कुर्याम । सर्वत्र "नमःस्वस्ति—" इत्यादिना चतुर्थी ॥

तृणाय मत्वा ताः सर्वा वदन्तीस्त्रिजटावदत् ।
आत्मानं हत दुर्वृत्ताः स्वमांसैः कुरुताशनम् ॥ ९९ ॥

९९. तृणायेति ॥ वदन्तीरेवं प्रलपन्तीस्ताः सर्वा राक्षसीः त्रिजटा तृणाय मत्वा तृणं मत्वा अवदत् ॥ "मन्यकर्मण्यनादरे विभाषाप्राणिषु" इति चतुर्थी ॥ हे दुर्वृत्ताः दुराचाराः आत्मानं हत युष्मानेव मारयतेत्यर्थः । हन्तेर्लोटि थस्य तादेशः । स्वमांसैः करणैः ॥ "कर्त्तृकरणयोस्तृतीया" ॥ अशनं भोजनं कुरुत ॥

अद्य सीता मया दृष्टा सूर्यं चन्द्रमसा सह ।
स्वप्ने[1] स्पृशन्ती मध्येन तनुः श्यामा सुलोचना ॥ १०० ॥

१००. अद्येति ॥ अद्यास्यां रात्रौ स्वप्ने मया । कर्त्तरि तृतीया । सीता चन्द्रमसा सह ॥ "सहयुक्तेऽप्रधाने" इति तृतीया ॥ सूर्यं स्पृशन्ती दृष्टा । लक्ष्मणेन सह रामं द्रक्ष्यतीति भावः । कीदृशी । मध्येनावलग्नेन तन्वी कृशा ॥ "येनाङ्गविकारः" इति तृतीया ॥ श्यामा युवती सुलोचना सुनेत्रा ॥

तास्तया तर्जिताः सर्वा मुखैर्भीमा यथायथम् ।
ययुः सुषुप्सवस्तल्पान् भीमैर्वचनकर्मभिः ॥ १०१ ॥

१०१. आप्तयेति ॥ आप्तया हितया त्रिजटया । कर्त्तरि तृतीया । तर्जिताः भर्त्सिताः मुखैर्भीमाः ॥ "येनाङ्गविकारः" इति तृतीया ॥ भीमैरितिपाठे "इत्थंभूतलक्षणे" इति तृतीया ॥ भीमैः वचनकर्मभिः उपलक्षिताः ॥ "इत्थंभूतलक्षणे" इत्यनेनैव तृतीया ॥ सर्वाः राक्षस्यः सुषुप्सवः स्वप्तुमिच्छवः सत्यः यथायथं यथास्वम् ॥ "यथास्वे यथायथम्" इति निपातः ॥ तल्पान् शय्याः ययुः ॥

१ स्वप्ने B., c., T3, T4.
२ दृष्टा c., B., T3, T4.
१ आप्तया T., G., Com.

गतासु तासु मैथिल्या[1] संजानानोऽनिलात्मजः ।
आयातेनै[2] दशास्यस्य संस्थितोऽन्तर्हितश्चिरम् ॥ १०२ ॥

१०२. अथ युग्मेनाह गतास्विति ॥ तासु राक्षसीषु गतासु सतीषु अनिलात्मजो हनूमान् मैथिल्या संजानानः एषेति मैथिलीं जानन् ॥ "संप्रतिभ्यामनाध्याने" इत्यात्मनेपदम् ॥ "संज्ञोऽन्यतरस्यां कर्मणि" इति विकल्पात्कर्मणि तृतीया ॥ दशास्यस्यायातेनागमनेन हेतुना ॥ "हेतौ" इति तृतीया ॥ चिरमन्तर्हितस्तिरोहितः सन् संस्थितः ॥

ऋणाद्बद्ध इवोन्मुक्तो वियोगेन क्रतुद्विषः ।
हेतोर्बोधस्य मैथिल्याः प्रास्तावीद्रामसंकथाम्[3] ॥ १०३ ॥

१०३. ऋणादिति ॥ ऋणाद्धेतोर्बद्ध इव रावणसंनिधानात्तदा निर्बद्धः ॥ "अकर्त्तर्यृणे पञ्चमी" इति पञ्चमी ॥ अथ क्रतुद्विषो रावणस्य वियोगेनापगमनेन हेतुना उन्मुक्तो निर्बन्धान्मुक्तः सन् "विभाषा गुणेऽस्त्रियाम्" इति पक्षे तृतीया ॥ मैथिल्याः कर्त्र्याः बोधस्य हेतोः बोधहेतौ सति बोधार्थमित्यर्थः ॥ "षष्ठी हेतुप्रयोगे" इति षष्ठी ॥ रामसंकथाः 'राजा दशरथो नाम रथकुञ्जरवाजिमान्' इत्यादिरामायणोक्ताः प्रास्तावीत् प्रारब्ध । स्तौतेर्लुङि सिचि वृद्धिः ॥ "इट ईटि" इति सलोपः ॥

तं दृष्ट्वाचिन्तयत्सीता हेतोः कस्यैष रावणः ।
अवरुह्य तरोरारादैर्ति[4] वानरविग्रहः ॥ १०४ ॥

१०४. तमिति ॥ सीता तं हनूमन्तं दृष्ट्वा एषः रावणः एव वानरविग्रहो वानराकारः सन् तरोर्वृक्षादवरुह्य कस्य हेतोः केन हेतुना ॥ "सर्वनाम्नस्तृतीया च" इति चकारात्षष्ठी ॥ आरात्समीपमैतीत्यचिन्तयत् ॥

---

१ मैथिल्याः C., c.
Last pâdas omitted in T₃.
२ आयानेन T₄.
३ °संकथाः T., G., Com.
४ °दैति T₃, T₄.

पूर्वस्मादन्यवद्भाति भावाद्दाशरथिं स्तुवन्[1] ।
ऋते क्रौर्यात्समायातो मां विश्वासयितुं नु किम्[2] ॥ १०५ ॥

१०५. पूर्वस्मादिति ॥ भावादनुरागाद्दाशरथिं रामं स्तुवन् पूर्वस्मात् क्षणं दृष्टाद्रावणादन्यवद्भाति अन्य इवावभासते । किं तु मां विश्वासयितुं क्रौर्यादृते क्रौर्यं विहाय समायातो नु किम् ॥ "अन्यारादितरर्ते—" इत्यादिनोभयत्र पञ्चमी ॥

इतरो रावणादेष राघवानुचरो[3] यदि ।
सफलानि निमित्तानि प्राक् प्रभातात्ततो मम ॥ १०६ ॥

१०६. इतर इति ॥ एष रावणादितरो रावणप्रतियोगी राघवार्थपरो रामकार्यतत्परो यदि ततस्तर्हि मम प्रभातात्प्राक् दृष्टानीति शेषः निमित्तानि वामाक्षिस्पन्दादीनि सफलानि । तेनैव सूत्रेणेतरपदाञ्चूत्तरपदयोगात्पञ्चम्यौ ॥

उत्तराहि वसन् रामः समुद्राद्रक्षसां पुरम्[4] ।
अवैल्लवणतोयस्य स्थितां दक्षिणतः कथम् ॥ १०७ ॥

१०७. उत्तराहीति ॥ समुद्रादुत्तराहि उत्तरदिग्भागे दूरे ॥ "आहि च दूरे" "उत्तराच्च" इत्याहिप्रत्ययः ॥ तद्योगात् "अन्यारात्—" इत्यादिना पञ्चमी ॥ वसन् रामो लवणतोयस्य लवणोदस्य दक्षिणतो दक्षिणदिग्भागे ॥ "दक्षिणोत्तराभ्यामतसुच्" इत्यतसुच् ॥ तद्योगे "षष्ठ्यतसर्थप्रत्ययेन" इति षष्ठी ॥ स्थितां रक्षसां पुरीं लङ्कां कथमवैत् अवगतवान् ॥

दण्डकां दक्षिणेनाहं सरितोऽद्रीन् वनानि च ।
अतिक्रम्याम्बुधिं[5] चैवं[6] पुंसामगममाहृता ॥ १०८ ॥

१ स्मरन् T3.
२ न किम् T2, T4.
३ राघवार्थकरो D.
राघवार्थपरो T2, T4, T., G., Com.
राघवार्थचरो T3.
४ पुरीम् T2, T3, T4, T., G., Com.
५ अतिक्रम्योदधिं T., G., Com.
६ चैवं T3.
चैषा T2, T4.

१०८. दण्डकामिति ॥ किं चाहं दण्डकां दक्षिणेन दण्डकाया दक्षिणतः ॥ "एनबन्यतरस्यामदूरेऽपञ्चम्याः" इत्येनप् ॥ "एनपा द्वितीया" इति द्वितीया ॥ सरितोऽद्रीन्वनानि चोदधिं चैवातिक्रम्य पुंसामगममगम्यं देशम् ॥ "ग्रहवृदनिश्चिगमश्च" इति कर्मण्यप्प्रत्ययः ॥ तद्योगात्पुंसामिति कर्मणि षष्ठी । आहृता आनीता ॥

पृथग्नभस्वतश्चण्डाद्वैनतेयेन वा[1] विना ।
गन्तुमुत्सहते नैवं[2] कश्चित् किमुत वानरः ॥ १०९ ॥

१०९. पृथगिति ॥ चण्डान्नभस्वतश्चण्डमारुतात्पृथक् पृथग्भूतं वैनतेयेन गरुडेन वा विना ॥ "पृथग्विनानानाभिस्तृतीयान्यतरस्याम्" इति विकल्पात्पञ्चमी तृतीया च ॥ कश्चिदिदं दुर्गं गन्तुं नोत्सहते न शक्नोति ॥ "शकधृष—" इत्यादिना तुमुन्प्रत्ययः ॥ वानरः किमुत नोत्सहत इति किमु वक्तव्यमित्यर्थः ॥

इति चिन्तावतीं कृच्छ्रात्समासाद्य कपिद्विपः ।
मुक्तां स्तोकेन रक्षोभिः प्रोचेऽहं रामकिङ्करः ॥ ११० ॥

११०. इतीति ॥ इतीत्थं चिन्तावतीं चिन्ताक्रान्तां रक्षोभिः कर्तृभिः स्तोकेन लेशेनापि मुक्तां सीतां कृच्छ्रात्समासाद्य ॥ "करणे च स्तोकाल्पकृच्छ्र—" इत्यादिना विकल्पात्पञ्चमी तृतीया च ॥ कपिद्विपः कपिश्रेष्ठः अहं रामकिङ्करो रामदूत इति प्रोचे प्रोवाच ॥

विप्रकृष्टं[3] महेन्द्रस्य न दूरं[4] विन्ध्यपर्वतात् ।
नानभ्यासे[5] समुद्रस्य तव माल्यवति[6] प्रियः ॥ १११ ॥

१११. विप्रकृष्टमिति ॥ महेन्द्रस्य समुद्रतीरवर्तिनो महेन्द्रपर्वतस्य न विप्रकृष्टं न दूरं विन्ध्यपर्वताद्दूराद्दूरम् ॥ "दूरान्तिकार्थैः षष्ठ्यन्यतर-

१ वारिणा B.
२ नेदं T., G., Com.
३ न प्रकृष्टं D., $T_3$, $T_4$.
४ दूराद्दि° T., G., Com.
५ नानभ्याशे N., T., G., Com. नात्याभ्याशे $T_3$.
६ माल्यवतः C.

स्याम्" इति विकल्पान्महेन्द्रविन्ध्यपर्वतशब्दाभ्यां षष्ठीपञ्चम्यौ ॥ "दूरान्तिकार्थेभ्यो द्वितीया च" इति विप्रकृष्टदूरशब्दाभ्यामसत्त्ववचनाभ्यां प्रातिपदिकार्थे विकल्पाद्द्वितीयापञ्चम्यौ ॥ समुद्रस्य पूर्ववत् "दूरान्तिकार्थैः—" इत्यादिना वैकल्पिकी षष्ठी ॥ नानभ्याशे अभ्याशे समीप इत्यर्थः । नञ्द्वयप्रयोगस्य प्रकृतार्थगमकत्वात् ॥ "सप्तम्यधिकरणे च" इति चकारात्पूर्ववदसत्त्ववचनादन्तिकार्थात्प्रातिपदिकार्थे सप्तमी ॥ एवंभूतः अत्र माल्यवति पर्वते तव प्रियो रामः वसतीति शेषः ॥

असंप्राप्ते दशग्रीवे प्रविष्टोऽहमिदं वनम् ।
तस्मिन्प्रतिगते द्रष्टुं त्वामुपाक्रंस्यचेतितः ॥ ११२ ॥

११२. असंप्राप्त इति ॥ दशग्रीवे असंप्राप्ते सति ततः प्रागेवेत्यर्थः । अहमचेतितोऽप्रज्ञातः सन्निदं वनं प्रविष्टः । तस्मिन्प्रतिगते सति ॥ "यस्य च भावेन भावलक्षणम्" इत्युभयत्र भावलक्षणसप्तमी ॥ त्वां द्रष्टुमुपाक्रंसि अप्रतिबन्धमुपक्रान्तवानस्मि ॥ "उपपराभ्याम्" इति वृत्तौ क्रमेर्लुङि तङि रूपम् ॥ "स्नुक्रमोः—" इत्यादिना इट्प्रतिषेधः ॥

तस्मिन्वदति रुष्टोऽपि नाकार्षं देवि विक्रमम् ।
अविनाशाय कार्यस्य विचिन्वानः परापरम् ॥ ११३ ॥

११३. तस्मिन्निति ॥ हे देवि तस्मिन् राक्षसे वदति तथा प्रलपति सति रुष्टः क्रुद्धोऽपि अनादृत्येत्यर्थः ॥ "षष्ठी चानादरे" इत्यनादरे सप्तमी ॥ कार्यस्यागमनप्रयोजनस्याविनाशायाविघाताय परापरं पूर्वापरम् । द्वन्द्वैकवद्भावः । विचिन्वानो विचारयन् । चिनोतेर्लटः शानच् । विक्रमं पराक्रमं नाकार्षम् । करोतेर्लुङि मिपि सिचि वृद्धिः मिपश्चामादेशः ॥

वानरेषु कपिः स्वामी नरेष्वधिपतेः सखा ।
जातो रामस्य सुग्रीवस्ततो दूतोऽहमागतः ॥ ११४ ॥

---

१ °मुपाक्रम्य° C.
२ वदतस्तस्य C.
३ ततोऽहं दूत आगतः E.

११४. वानरेष्विति ॥ वानरेषु स्वामी वानराणामीश्वरः सुग्रीवो नाम कपिः नरेष्वधिपतेर्नरेन्द्रस्य रामस्य सखा जातः ॥ "स्वामीश्वर—" इत्यादिना विकल्पादुभयत्र सप्तमी ॥ ततस्तयोः । सार्वविभक्तिकस्तसिः । अहं दूतः आगतः ॥

ईश्वरस्य निशाटानां विलोक्य निखिलां[1] पुरीम्[2] ।
कुशलोऽन्वेषणस्याहमायुक्तो दूतकर्मणि ॥ ११५ ॥

११५. अथ त्रिभिः कुलकेनाह ईश्वरस्येति ॥ अन्वेषणस्य कुशलोऽन्वेषणे निपुणो दूतकर्मण्यायुक्तो व्यापृतोऽहम् ॥ "आयुक्तकुशलाभ्यां चासेवायाम्" इति वैकल्पिक्यौ षष्ठीसप्तम्यौ ॥ निशाटानां निशाचराणामीश्वरस्य ॥ "स्वामीश्वर—" इत्यादिना षष्ठी ॥ निखिलां पुरीं विलोक्य ॥

दर्शनीयतमाः पश्यन् स्त्रीषु दिव्यास्वपि स्त्रियः ।
प्राप्तो व्यालतमान् व्यस्यन् भुजङ्गेभ्योऽपि राक्षसान् ॥ ११६ ॥

११६. दर्शनीयेति ॥ दिव्यास्वपि स्त्रीषु तासां मध्येऽपि दर्शनीयतमाः अतिशयेन दर्शनीयाः अतिरमणीयाः ॥ "यतश्च निर्धारणम्" इति विकल्पान्निर्धारणे सप्तमी ॥ स्त्रियः स्त्रीः पश्यन् भुजङ्गेभ्यः सर्पेभ्योऽपि व्यालतमान् क्रूरतमान् ॥ "पञ्चमी विभक्ते" इति निर्धारणावधिविभागाश्रयात् पञ्चमी ॥ राक्षसान् व्यस्यन्निरस्यन् प्राप्तः ॥

भवत्यामुत्सुको रामः प्रसितः सङ्गमेन ते ।
मघासु कृतनिर्वापः[3] पितृभ्यो मां व्यसर्जयत्[4] ॥ ११७ ॥

११७. भवत्यामिति ॥ भवत्यामुत्सुकस्त्वय्युत्कण्ठितस्ते तव सङ्गमेन प्रसितः संगतावासक्तो रामः ॥ "प्रसितोत्सुकाभ्यां तृतीया च" इति विकल्पात्तृतीयासप्तम्यौ ॥ मघासु मघायुक्तकाले ॥ "नक्षत्रेण युक्तः

---

१ निखिलं पुरम् E₂.
२ पुरम् E₂, D.
३ कृतनिवापः T., G., Com.
४ व्यवर्जयत् T₂.

कालः" इत्यणि "लुबविशेषे" इति तस्य लुपि "लुपि युक्तवद्व्यक्तिवचने" इति प्रकृतिलिङ्गवचनत्वात् स्त्रीलिङ्गबहुत्वे "नक्षत्रे च लुपि" इति लुबन्तान्नक्षत्रवाचकशब्दाद्वैकल्पिकी सप्तमी॥ पितृभ्यः कृतनिवापः कृतपिण्डोदकक्रियः सन्। 'पितृदानं निवापः स्यात्' इत्यमरः। अत्र 'पितृभ्यः कृतनीवापः' इति पाठान्तरम्। तदा "उपसर्गस्य घञ्यमनुष्ये बहुलम्" इत्युपसर्गस्य दीर्घः। मां व्यसर्जयत् इतः प्रेषितवानित्यर्थः॥

इदं[1] मैथिल्यभिज्ञानं काकुत्स्थस्याङ्गुलीयकम्[2]।
भवत्याः स्मरतात्यर्थमर्पितं[3] सादरं मर्म[4]॥ ११८॥

११८. इदमिति॥ हे मैथिलि॥ "संबोधने च" इति प्रथमा॥ इदं काकुत्स्थस्य रामस्य संबन्धि॥ "षष्ठी शेषे" इति षष्ठी॥ अङ्गुलौ भवमङ्गुलीयम्॥ "जिह्वामूलाङ्गुलेश्छः" इति छः॥ तदेवाङ्गुलीयकमूर्मिका। स्वार्थे कः। 'अङ्गुलीयकमूर्मिका' इत्यमरः॥ "प्रातिपदिकार्थ—" इत्यादिना प्रथमा॥ प्रत्यभिज्ञायतेऽनेनेति प्रत्यभिज्ञानं चिह्नमत्यर्थं भवत्याः स्मरता भवतीमेव ध्यायता॥ "अधीगर्थ—" इत्यादिना कर्मणि शेषे षष्ठी॥ रामेण ममार्पितं मद्धस्ते न्यस्तमित्यर्थः॥ शेषे षष्ठी॥

जानीष्व प्रत्यभिज्ञानस्यातस्त्वमपि देवि ते।
आस्ते भर्त्तेति मां दृष्ट्वा भर्त्तुर्दूतं प्रियं कपिम्॥ ११९॥

११९. जानीष्वेति॥ हे देवि अतः अभिज्ञानाहर्त्तृत्वाद्भर्त्तुः प्रियं दूतं कपिमेनं मां दृष्ट्वा ते तव भर्त्ता राम आस्ते सुखेन तिष्ठतीति विश्वसेत्यर्थः। त्वमपि प्रत्यभिज्ञानस्य प्रत्यायकस्याभिज्ञानस्य अभिज्ञानेने-

---

१ अयं N., C., T1, B., D., E2, c.
२ °स्याङ्गुलीयकः N., C., T1, B., D., E2. °स्याङ्गुरीयकः c.
३ °मर्पितः N., C., T1, B., D., E2, c.
४ मयि E2.

त्यर्थः॥ "ज्ञोऽविदर्थस्य करणे" इति जानातेरवेदनार्थस्य करणे षष्ठी॥ सततं जानीष्व अनन्तरकर्त्तव्येऽभिज्ञानदानादौ प्रवर्त्तस्वेत्यर्थः। प्रवृत्तिवचनो जानातिरविदर्थ इति काशिका॥

रामस्य दयमानोऽसावध्येति तव लक्ष्मणः।
उपास्कृषातां राजेन्द्रावागमस्येह मा त्रसीः॥ १२०॥

१२०. रामस्येति॥ रामस्य दयमानो रामे दयां कुर्वन् तद्दुःखापनोदक इत्यर्थः। असौ लक्ष्मणस्तवाध्येति त्वां स्मारयतीत्यर्थः। इक् स्मरण इत्यस्माल्लट्। उभयत्र "अधीगर्थ—" इत्यादिना कर्मणि षष्ठी। राजेन्द्रौ रामलक्ष्मणौ इहागमस्योपास्कृषातामागमनमुपस्कृतवन्तौ दृढीकृतवन्तावित्यर्थः। "कृञः प्रतियत्ने" इति कर्मणि शेषे षष्ठी। सतो गुणान्तराधानं प्रतियत्नः। दार्ढ्यं च गुणः। कृञो लुङि "गन्धन—" इत्यादिना प्रतियत्ने तङि च्लेः सिच्॥ "उपात्प्रतियत्न—" इत्यादिना सुट् ककारात्पूर्वः॥ ततस्तस्मान्मा त्रसीः मा भैषीः। त्रस्यतेर्लुङि सिचि "नेटि" इति वृद्धिप्रतिषेधः। "इट ईटि" इति सलोपः॥

रावणस्येह[1] रोक्ष्यन्ति कपयो[2] भीमविक्रमाः।
नाथस्व धृत्या[3] वैदेहि मन्योरुज्जासयात्मनः॥ १२१॥

१२१. रावणस्येति॥ हे भीरु कपीनां विक्रमाः पराक्रमाः। क्रमेर्भावे घञ्॥ "नोदात्तोपदेशस्य—" इत्यादिना वृद्धिप्रतिषेधः॥ इह लङ्कायां रावणस्य रोक्ष्यन्ति रावणं भङ्क्ष्यन्तीत्यर्थः। रुजो भङ्ग इत्यस्माल्लृट्॥ "रुजार्थानां भाववचनानामज्वरेः" इति भावकर्तृकरुजार्थयोगाद्रावणस्येति कर्मणि शेषे षष्ठी॥ भाववचनानां भावकर्तृकाणामित्यर्थः। विक्रमाश्चात्र भावाः कर्त्तारः। हे वैदेहि धृत्याः धृतेर्नाथस्व आशास्व। धैर्यमवलम्बस्वेत्यर्थः॥ "आशिषि नाथः" इत्युपसंख्यानात्तङ्॥ आत्मनो मन्योः शोकस्योज्जासय मन्युं हिन्धीत्यर्थः॥ "जासिनिप्रहण—" इत्यादिना कर्मणि षष्ठी॥ जसु हिंसायामिति चौरादिको धातुः॥

---

१ रावणस्य च $T_3$.
२ कपीनां भीरु विक्रमाः T., G., Com.
३ धृत्या नाथस्व N., C., T., G., $E_2$, $E_3$, B.

राक्षसानां मयि गते रामः प्रणिहनिष्यति ।
प्राणानामपर्णिष्टा[1]यं रावणस्त्वामिहानयन्[2] ॥ १२२ ॥

१२२. राक्षसानामिति ॥ मयि गते इतो गते सति रामो राक्षसानां प्रणिहनिष्यति राक्षसान् हनिष्यतीत्यर्थः ॥ "जासिनिप्रहण—" इत्यादिना कर्मणि षष्ठी ॥ संघातविगृहीतविपर्यस्तग्रहणादिह विपर्यासः ॥ "नेर्गदनद—" इत्यादिना णत्वम् ॥ त्वामिहानयन्नयं रावणः प्राणानामपणिष्ट प्राणान्विक्रीतवानित्यर्थः । पणेर्व्यवहारार्थाल्लुङि तङ् । अस्तुत्यर्थत्वात् "गुपूधूप—" इत्यादिना नायप्रत्ययः ॥ "व्यवहृपणोः समर्थयोः" इति कर्मणि शेषे षष्ठी ॥

अदेवीद्बन्धुभोगानां प्रादेवीदात्म[3]संपदम् ।
शतकृत्वस्तवैकस्याः स्मरत्यह्नो[4] रघूत्तमः ॥ १२३ ॥

१२३. अदेवीदिति ॥ किं चायं रावणो बन्धुभोगानामदेवीत् तानपि विक्रीतवानित्यर्थः ॥ "दिवस्तदर्थस्य" इति कर्मणि षष्ठी ॥ आत्मसंपदं स्वलक्ष्मीं प्रादेवीद्विक्रीतवान् ॥ "विभाषोपसर्गे" इति वैकल्पिकी द्वितीया ॥ पुनरपि रामानुरागं वर्णयति । रघूत्तमो राम एकस्याह्न एकस्मिन्नहनि ॥ "कृत्वोऽर्थप्रयोगे कालेऽधिकरणे" इत्यधिकरणार्थे षष्ठी ॥ शतकृत्वः शतवारं तव स्मरति त्वां स्मरति ॥ "अधीगर्थ—" इत्यादिना कर्मणि षष्ठी ॥

तवोपशायिका यावद्राक्षस्यश्चेतयन्ति न[5] ।
प्रतिसंदिश्यतां तावद्भर्तुः शार्ङ्गस्य[6] मैथिलि[7] ॥ १२४ ॥

१२४. तवेति ॥ हे मैथिलि तवोपशायिकाः पर्यायशायिन्यः ॥ "पर्यायार्हणोत्पत्तिषु ण्वुच्" इति पर्यायार्थे ण्वुच् ॥ राक्षस्यो यावन्न चेत-

---

१ °मपनिष्टासौ D., c.
°मपणिष्टासौ C., $T_1$, $T_3$.
°मपनिष्टायं $E_2$, $E_3$.
२ °हानयत् $T_3$.
३ °वीदर्थसंपदम् $E_3$.
°वीदात्मसंपदः c., B.
°वीदात्मसंभवम् $T_3$.
४ स्मरत्याह्नि $E_3$.
५ नः $T_4$.
६ मार्गस्य $E_3$.
७ मैथिली c.

यन्ति न प्रबुध्यन्ते तावदेव शृङ्गस्य विकारः शार्ङ्गं धनुस्तस्य भर्त्तुः धारकस्य धनुर्धरस्य रामस्य प्रतिसंदिश्यताम् । संदेष्टुस्तस्य प्रतिसंदेशः क्रियतामित्यर्थः । भर्त्तुरिति शेषे षष्ठी । अन्यत्र कृद्योगात्कर्मणि षष्ठी ॥

पुरः प्रवेशमाश्चर्यं बुद्ध्वा शाखामृगेण सा ।
चूडामणिमभिज्ञानं ददौ रामस्य संमतम् ॥ १२५ ॥

१२५. पुर इति ॥ सा सीता शाखामृगेण कपिना कर्त्रा पुरो लङ्कानगरस्य प्रवेशम् ॥ "उभयप्राप्तौ कर्मणि" इति कर्मणि षष्ठी ॥ आश्चर्यमद्भुतं बुद्ध्वा रामस्य संमतं रामेण संमन्यमानम् ॥ "मतिबुद्धि—" इत्यादिना वर्त्तमाने क्तः ॥ "क्तस्य च वर्त्तमाने" इति "न लोक—" आदिप्रतिषेधबाधेन षष्ठी ॥ चूडामणिं शिरोमाणिक्यमेवाभिज्ञानं ददौ दत्तवती ॥

रामस्य शयितं भुक्तं जल्पितं हसितं स्थितम् ।
प्रक्रान्तं च मुहुः पृष्ट्वा हनूमन्तं व्यसर्जयत् ॥ १२६ ॥

१२६. रामस्येति ॥ रामस्य शेतेऽस्मिन्निति शयितं शयनस्थानं तथा भुङ्क्तेऽस्मिन्निति भुक्तं भोजनस्थानं जल्पितं जल्पनं हसितं हसनं स्मितं तिष्ठत्यस्मिन्निति स्थितं निवासस्थानं प्रक्रामति गच्छत्यस्मिन्निति प्रक्रान्तं चङ्क्रमणस्थानं च मुहुः पृष्ट्वा हनूमन्तं व्यसर्जयत् । अत्र जल्पितहसितयोः किं जल्पन् हसन् तिष्ठतीति सत्ताप्रश्नः ॥ "नपुंसके भावे क्तः" इति भावे क्तः ॥ तद्योगात् "नपुंसके भाव उपसंख्यानम्" इति षष्ठी । अन्यत्र क शेते क भुङ्क्ते इत्यादिस्थानप्रश्नः ॥ "क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः" इत्यधिकरणे क्तः ॥ तद्योगात् "अधिकरणवाचिनश्च" इति षष्ठी ॥ ध्रौव्यकर्मत्वम् ॥

---

१ मत्वा E₃.
दृष्ट्वा T₂, T₃, T₄.
२ सम्मदम् T₃.
३ हसितं T₃.
४ शायितं T₃.
५ व्यवर्जयत् T₃.

असौ दधदभिज्ञानं चिकीर्षुः कर्म दारुणम्[1]।
गामुकोऽप्यन्तिकं[2] भर्त्तुर्मनसाचिन्तयत्क्षणम्[3]॥ १२७ ॥

१२७. असाविति॥ अभिज्ञानं चिह्नं शिरोरत्नं दधत् दधानः। दधातेर्लटः शत्रादेशः। भर्त्तुः स्वामिनो रामस्यान्तिकं गामुको गमनशीलोऽपि॥ "लषपत—" इत्यादिना गमेरुकञ्॥ असौ हनूमान् दारुणं कर्म वनभङ्गादिभीषणकर्म चिकीर्षुः कर्त्तुमिच्छुः। करोतेः सन्नन्तादुप्रत्ययः। क्षणं मनसा अचिन्तयत् वक्ष्यमाणमालोचितवान्। सर्वत्र "न लोक—" इत्यादिना कृद्योगषष्ठीप्रतिषेधात् कर्मणि द्वितीया॥

कृत्वा कर्म यथादिष्टं[4] पूर्वकार्याविरोधि[5] यः।
करोत्यभ्यधिकं[6] कृत्यं तमाहुर्दूतमुत्तमम्॥ १२८ ॥

१२८. अथ त्रिभिश्चिन्ताप्रकारमेवाह कृत्वेति॥ यो दूतो यथोद्दिष्टं स्वामिना यथोपदिष्टं कर्म कृत्वा। अव्यययोगात् "न लोकाव्यय—" इत्यादिना षष्ठीप्रतिषेधः। पूर्वकार्याविरोधि प्रागनुष्ठितकर्मवैफल्यानापादकमभ्यधिकं स्वाम्यनुक्तं कृत्यं कार्यं करोति तमुत्तमं दूतमाहुः। लयोगात्षष्ठीप्रतिषेधः॥

वैदेहीं दृष्टवान् कर्म कृत्वान्यैरतिदुष्करम्[7]।
यशो यास्याम्युपादाता वार्त्तामाख्यायकः प्रभोः॥ १२९ ॥

१२९. वैदेहीमिति॥ वैदेहीं दृष्टवान् अन्यदपि स्वामिनिर्दिष्टादधिकं च दुष्करं कर्म कृत्वा यशः कीर्त्तिमुपादाता साधु संपादयिता सन्। साधुकारिणि तृन्। प्रभोः रामस्य वार्त्तां सीतादर्शनवृत्तान्तमाख्यायकः आख्यास्यन्॥ "तुमुन्ण्वुलौ—" इत्यादिना भविष्यदर्थे ण्वुल्-

---

१ दुष्करम् T2.
२ °प्यन्तिके B.
३ क्षणात् E8.
४ यथोद्दिष्टं T2, T3, T4, Com.
५ पूर्वकर्माविरोधि T2, T3, T4.
६ भृत्यस्त° T3.
७ कृत्वान्यदपि दुष्करम् T., G., Com.
८ °रपि दुष्करम् N., C., T1.

प्रत्ययः ॥ "अकेनोः—" इत्यादिना षष्ठीप्रतिषेधः ॥ यास्यामि गमिष्यामि ॥

राक्षसेन्द्रस्य संरक्ष्यं मया लव्यमिदं वनम् ।
इति संचिन्त्य सदृशं नन्दनस्याभनक् कपिः ॥ १३० ॥

१३०. राक्षसेति ॥ राक्षसेन्द्रस्य रावणस्य संरक्ष्यम् ॥ "कृत्यानां कर्त्तरि वा" इति विकल्पात्कर्त्तरि षष्ठी ॥ नन्दनस्य सदृशं तेन तुल्यमित्यर्थः ॥ "तुल्यार्थैः—" इत्यादिना विकल्पात्षष्ठी ॥ इदं वनं मया लव्यं छेद्यम् ॥ "कृत्यानां कर्त्तरि वा" इति विकल्पात् तृतीया ॥ इति संचिन्त्यालोच्य कपिरभनक् बभञ्ज । भञ्जेर्लङि "हल्ङ्याब्भ्यः—" इत्यादिना तिलोपः । चोः कुत्वम् ॥

राघवाभ्यां शिवं दूतस्तयोरहमिति ब्रुवन् ।
हितो[1] भनज्मि रामस्य कः[2] किं ब्रूतेऽत्र राक्षसः ॥ १३१ ॥

१३१. राघवाभ्यामिति ॥ राघवाभ्यां रामलक्ष्मणाभ्यां शिवं भद्रमस्त्विति शेषः । अहं तयोर्दूतः रामस्य हितः आप्तः इति ब्रुवन् भनज्मि भङ्क्ष्यामीत्यर्थः । भञ्जेः सामीप्ये लटि मिप् । को राक्षसः किं ब्रूते रामकार्यप्रवृत्तस्य मे न कश्चित्प्रतिबन्धक इत्यर्थः । इति निश्चित्य बभञ्जेत्युत्तरेण संबन्धः । अत्र "चतुर्थी चाशिषि—" इत्यादिना शिवादिशब्दयोगे वैकल्पिक्यौ चतुर्थीषष्ठ्यौ ॥

विलुलित[3]पुष्परेणुकपिशं प्रशान्तकलिकापलाशकुसुमम् ।
कुसुमनिपात[4]विचित्रवसुधं सशब्दनिपतद्द्रुमोत्कशकुनम् ॥
शकुननिनादनादि[5]ककुब्विलोलविपलायमानहरिणम् ।
हरिणविलोचनाधिवसतिं बभञ्ज पवनात्मजो रिपुवनम् ॥१३२॥

---

१ हितं हिनस्मि $T_3$.
२ कं $T_3$.
३ विगलित $T_2$.
४ °निपातचित्रवसुधं T., G., Com.
५ °नादितदिशं $T_2$, T., G., Com. नादितककु° $E_3$, c.

१३२. अथ सर्गान्तत्वाद्भिन्नवृत्तं श्लोकमाह । विलुलितेति ॥ विलुलितैर्विक्षिप्तैः पुष्परेणुभिः कपिशं पिशङ्गं प्रशान्तानि प्रसन्नानि कलिकाः कोरकाः पलाशानि पर्णानि कुसुमानि यस्मिन् तत् कुसुमनिपाते चित्रा चित्ररूपा वसुधा यस्मिन् तत् सशब्दाः शब्दायमाना निपतन्तः प्रचरन्तो द्रुमोत्काः निवासवृक्षोत्सुकाश्च शकुनाः पक्षिणो यस्मिन् तत् तथा शकुननिनादैः पक्ष्यारावैः नादिताः प्रतिध्वानिता दिशाः दश दिशो येन तत् । 'टाबन्तत्वं हलन्तानां यथा वाचा निशा दिशा' इति वचनात् टाबन्तस्योपसर्जनह्रस्वत्वम् । विलोलाश्चपलाः विपलायमाना भयात्पलाय्य गच्छन्तो हरिणा मृगाः यस्मिन् तत् हरिणविलोचनायाः सीतायाः अधिवसतिं निवासस्थानं रिपुवनं रावणोद्यानं पवनात्मजो हनूमान् बभञ्ज ॥ वैकृतमश्वललितं वृत्तम् । 'यदिह नजौ भजौ जभलगास्तदाश्वललितं शिवार्कयति तद्' इति लक्षणात् । अत्र विलुलितेत्यादि स्वभावोक्तिः हरिणविलोचनेत्युपमा । यमकविशेषस्तु शब्दालङ्कारः ॥

इति भट्टिकाव्येऽधिकारकाण्डेऽशोकवनिकाभङ्गनामाष्टमः सर्गः ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते भट्टिकाव्यव्याख्याने सर्वपथीनाख्याने अष्टमः सर्गः ॥

---

॥ श्रीः ॥

# अथ नवमः सर्गः ।

द्रुभङ्गध्वनिसंविग्नाः कुर्वत्पक्षिकुलाकुलाः ।
अकार्षुः क्षणदाचर्यो रावणस्य निवेदनम् ॥ १ ॥

१. द्रुभङ्गेति ॥ द्रुभङ्गो द्रुमभङ्गः । 'पलाशी द्रुद्रुमागमाः' इत्यमरः । तेन यो ध्वनिस्तेन संविग्नाः संत्रस्ताः रुदद्भिः क्रन्दद्भिः पक्षिकुलैराकुलास्तदारवव्याकुलचित्ता इत्यर्थः क्षणदाचर्यो राक्षस्यो रावणस्य निवेदनं वक्ष्यमाणप्रकारेण विज्ञापनमकार्षुः । रावणस्येति शेषे षष्ठी ॥

यदताप्सीच्छनैर्भानुर्यत्रावासीन्मितं मरुत् ।
यदाप्यानं हिमोस्रेण भनक्त्युपवनं कपिः ॥ २ ॥

२. यदिति ॥ यद्वनं भानुः सूर्यः शनैरताप्सीत् तदाज्ञया स्तोकं तपति स्म । तपेर्लुङि सिचि हलन्तलक्षणा वृद्धिः । यत्र मरुद्वायुर्मितं मन्दमवासीद्वाति स्म । वातेर्लुङि सिचीट् । हिमोस्रेण हिमकिरणेन । 'किरणोस्रमयूख—' इत्यमरः । आप्यानमाप्यायितं वर्धितम् । प्यायः कर्मणि क्तः ॥ "ओदितश्च" इति निष्ठानत्वे "लोपो व्योर्वलि" इति यलोपः । तदुपवनं कपिः कोऽपि भनक्ति रुजति । भञ्जेर्लट् ॥

ततोऽशीतिसहस्राणि किङ्कराणां समादिशत् ।
इन्द्रजित्सूर्विनाशाय मारुतेः क्रोधमूर्च्छितः ॥ ३ ॥

३. तत इति ॥ ततो निवेदनानन्तरमिन्द्रजितं सूत इतीन्द्रजित्सूः रावणः । सूतेः "सत्सूद्विष—" इत्यादिना क्विप् । क्रोधमूर्च्छितः क्रोधान्धः सन् मारुतेर्हनूमतः विनाशाय वधाय किं कुर्वन्तीति

---

१ कूजत्प° D., E2, E3.
रुवत्प° T2, T3, T4.
रुदत्प° T., G., Com.
२ °सीन्मरुन्मितम् D.
३ तदा° T2, T3, T., G., Com.
४ वभञ्जोप° T4.
५ कोप E3.

किङ्कराः भृत्याः ॥ "दिवाविभा—" इत्यादिना करोतेष्टः ॥ तेषां किङ्कराणामष्टौ दश दशकाः परिमाणमेषामशीतिमशीतिर्संख्याकानि। "पङ्क्ति—" आदिसूत्रेऽष्टदशशब्दस्याशीति वा भवतीति प्रत्ययनिपातनात्साधुः। 'विंशत्याद्याः सदैकत्वे संख्याः संख्येयसंख्ययोः' इत्यमरः। सहस्राणि समादिशत् समादिष्टवान् ॥

शक्त्यृष्टिपरिघप्रासगदामुद्गरपाणयः।
व्यश्नुवाना दिशः प्रापुर्वनं दृष्टिविषोपमाः ॥ ४ ॥

४. शक्तीति ॥ शक्त्यादयः प्रहरणविशेषाः पाणौ येषां ते तथोक्ताः ॥ "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः" इति सप्तम्याः परनिपातः ॥ दृष्टौ विषं यस्य तेन सर्पविशेषेणोपमा सादृश्यं येषां ते तदुपमाः तद्वद्दृष्ट्यैव परप्राणहारिणस्ते रावणकिङ्कराः दिशो व्यश्नुवानाः व्याप्नुवन्तः वनं प्रापुः ॥

दध्वान मेघवद्भीममादाय परिघं कपिः।
नेदुर्दीप्तायुधास्तेऽपि तडित्वन्त इवाम्बुदाः ॥ ५ ॥

५. दध्वानेति ॥ तदा कपिर्हनूमान् भीमं परिघमर्गलमादाय। 'परिघोऽर्गलदण्डयोः' इति विश्वः। मेघवन्मेघेन तुल्यं दध्वान जगर्ज। दीप्तायुधास्ते किङ्करा अपि तडित्वन्तो विद्युत्वन्तोऽम्बुदाः मेघा इव नेदुर्जगर्जुः। उपमालङ्कारः ॥

कपिनाम्भोधिधीरेण समगंसत राक्षसाः।
वर्षास्वुद्धततोयौघाः समुद्रेणेव सिन्धवः ॥ ६ ॥

६. कपिनेति ॥ अथ राक्षसा अम्भोधिधीरेण तद्वद्दुरवगाहेन कपिना हनूमता वर्षासु प्रावृट्सु उद्धततोयौघाः उद्रिक्तजलप्रवाहाः सिन्धवो

१ प्रासा D.
२ दिशं C.
दिश आपुः D.
३ °दीप्ता यथा तेऽपि T3, T4.
४ समुद्रेणैव D., T2

नद्यः समुद्रेणेव समगंसत संगताः । संपूर्वाद्गमेर्लुङि "समो गम्यृच्छि—" इत्यादिना तङि च्लेः सिच् । उपमालङ्कारः ॥

लाङ्गूलमुद्धतं धुन्वन्[1]नुद्वहन्[2] परिघं गुरुम्[3] ।
तस्थौ तोरणमारुह्य[4] पूर्वं[5] न प्रजहार सः ॥ ७ ॥

७. लाङ्गूलमिति ॥ स हनूमान् उद्धतमुत्क्षिप्तं लाङ्गूलं वालधिं धुन्वंश्चालयन् गुरुं परिघमर्गलमुद्धृत्योद्यम्य तोरणमारुह्य तस्थौ । स्वयं पूर्वं न प्रजहार । वीरधर्मत्वात् 'नायुध्यमानम्' इति निषेधाच्चेति भावः ॥

## अथ सिचि वृद्ध्यधिकारः ।

अक्षारिषुः[6] शराम्भांसि तस्मिन् रक्षःपयोधराः[7] ।
न[8] चाह्वालीन्न चात्राजीत्त्रासं कपिमहीधरः ॥ ८ ॥

८. अक्षारिषुरिति ॥ रक्षांस्येव पयोधराः मेघास्तस्मिन् कपिमहीधरे शरानेवाम्भांसि अक्षारिषुः ववृषुरित्यर्थः । क्षरतिरयं सकर्मकोऽपि भवति 'तेषु क्षरत्सु बहुधा मदवारिधाराः' इत्यादिप्रयोगदर्शनात् । कपिरेव महीधरोऽद्रिः नाह्वालीत् न चचाल । ह्वल चलने । उभयत्रापि "अतो हलादेर्लघोः" इति विकल्पे प्राप्ते "अतो ल्रान्तस्य" इति नित्यं सिचि वृद्धिः । त्रासं भयं च नात्राजीन्नागमत् । पूर्ववद्विकल्पापवादेन "वदव्रज—" इत्यादिना नित्यं वृद्धिः । रूपकालङ्कारः । प्रचलनादिसाधकसद्भावात् ॥

अवादीत्तिष्ठतेत्युच्चैः प्रादेवीत्परिघं ततः ।
तथा[10] यथा रणे प्राणान् बहूनाम[11]ग्रहीद् द्विषाम् ॥ ९ ॥

---

१ धून्व° T2, T4.
२ °दुद्धृत्य T., G., Com.
३ कपिः E2.
४ प्रासाद्य C.
५ न पूर्वं T2.
६ अक्षाविषुः E2.
७ °पयोमुचः T2, T4.
८ अह्वालीन्नच नात्रा° C., D., T2, T4.
अह्वालीन्नैव चा° E2.
९ कपिः N., C., T1.
१० यथा तथा B.
११ बहूनां न्यग्रहीद् T4.

९. अवादीदिति ॥ कपिर्हनूमान् हे मूर्खास्तिष्ठत क यास्यथेत्युच्चैरवादीत् ॥ "वदव्रज—" इत्यादिना नित्यं वृद्धिः ॥ परिघं परिघेण ॥ "दिवः कर्म च" इति वैकल्पिकी साधकतमस्य कर्मसंज्ञा ॥ तथा तेन प्रकारेण प्रादेवीत् विजिगीषितवान् प्रहृतवानित्यर्थः। दीव्यतेर्लुङि "नेटि" इति वृद्धिप्रतिषेधः। यथा येन प्रकारेण बहूनां द्विषां प्राणानग्रहीत् स्वयं गृहीतवान् परिघेणैव बहूनि जघानेत्यर्थः। ग्रहेर्लुङि "ह्यन्तक्षण—" इत्यादिना वृद्धिप्रतिषेधः ॥

व्रणैरवमिषू रक्तं देहैः प्रौर्णाविषुर्भुवम्।
दिशः प्रौर्णविषुश्चान्ये यातुधाना भवद्भियः ॥ १० ॥

१०. व्रणैरिति ॥ यातुधानाः केचिद्राक्षसाः व्रणैः प्रहारमार्गैः रक्तं रुधिरमवमिषुर्वमन्ति स्म। वमेर्लुङि "ह्यन्त—" इत्यादिना वृद्धिप्रतिषेधः। देहैर्भुवं भूमिं प्रौर्णाविषुराच्छादयन् मम्रुरित्यर्थः। अन्ये भवद्भियो जायमानभयाः सन्तः दिशः प्रौर्णविषुराच्छादयन् पलायिता इत्यर्थः ॥ "विभाषोर्णोः" इतीडादेरङित्त्वपक्षे "ऊर्णोतेर्विभाषा" इति विभाषावृद्धिप्रतिषेधादेकत्र सिचिवृद्धिरन्यत्र गुणः। उभयत्राडृद्धिसहिता वृद्धिः ॥

अराणिषुश्च्युतोत्साहा भिन्नदेहाः प्रियासवः।
कपेर्त्रासिषुर्नादान् मृगाः सिंहध्वनेरिव ॥ ११ ॥

११. अराणिषुरिति ॥ प्रियासवः प्रियप्राणाः केचित् भिन्नदेहा अत एव च्युतोत्साहा नष्टोत्साहाः सन्तः अराणिषुः केवलमाक्रन्दन्। किं च कपेर्नादात्सिंहनादाद्गजाः सिंहध्वनेः सिंहघोषादिव अत्रसिषुरभैषुः। उभयत्रापि "अतो हलादेर्लघोः" इति वैकल्पिकौ वृद्धितदभावौ ॥

---

१ प्राणे° T4.
२ प्रोर्णविषु° B.
३ अकाणिषुः C., c., E2, E3, B., T1.
४ °त्रासिषु° T., G., Com.
५ गावः T4.
गजाः T., G., Com.

## अथेट्प्रतिषेधाधिकारः ।

मायानामीश्वरास्तेऽथ[1] शस्त्रहस्ता रथैः कपिम् ।
प्रत्याववृतिरे हन्तुं हन्तव्या मारुतेः पुनः ॥ १२ ॥

१२. मायानामिति ॥ अथ मायानां कपटानामीश्वराः प्रभवाः ॥ "स्थेशभास—" इत्यादिना ईशेर्वरचि "नेड्वशि कृति" इतीट्प्रतिषेधः ॥ शस्त्रहस्ताः शस्त्रपाणयः मारुतेर्हनूमतो हन्तव्याः वध्याः ॥ "कृत्यानां कर्त्तरि वा" इति कर्त्तरि षष्ठी ॥ "एकाच उपदेशेऽनुदात्तात्" इति हन्तेरिट्प्रतिषेधः ॥ ते राक्षसाः रथैः साधनैः कपिं मारुतिं हन्तुं पुनः प्रत्याववृतिरे भूयः प्रतिनिवृत्ताः ॥ "दाम्नीशस—" इत्यादिना शसेष्ट्रनि शस्त्रम् ॥ "हसिमृग—" इत्यादिना हसेरौणादिके तन्प्रत्यये हस्ताः ॥ "हनिकुश—" इत्यादिना कथन्प्रत्यये रथः ॥ "तितुत्र—" इत्यादिना सर्वत्रेट्प्रतिषेधः ॥

तांश्चेतव्यान् क्षितौ श्रित्वा वानरस्तोरणं युतान् ।
जघानाधूय परिघं विजिघृक्षून् समागतान् ॥ १३ ॥

१३. तानिति ॥ वानरो हनूमान् क्षियन्ति निवसन्त्यस्यामिति क्षितिः क्षोणिः । स्त्रियां क्तिन् ॥ "तितुत्र—" इत्यादिना इट्प्रतिषेधः ॥ तस्यां चेतव्यान् चेतुमर्हान् हत्वा राशीकर्त्तव्यानित्यर्थः । चिनोतेस्तव्यः ॥ "एकाच उपदेशेऽनुदात्तात्" इतीट्प्रतिषेधः ॥ युतानेकार्थतया मिथः संगतान् । यौतेः कर्त्तरि क्तः । विजिघृक्षून् विग्रहीतुमिच्छून् विरुरुत्सून् । ग्रहेः सन्नन्तादुप्रत्ययः ॥ "रुदविद—" इत्यादिना सनः कित्वात्संप्रसारणादिकार्यम् ॥ "सनि ग्रहगुहोश्च" इतीट्प्रतिषेधः ॥ समागतान् युयुत्सया प्राप्तांस्तान्राक्षसान् तोरणं श्रित्वा आश्रित्य ॥ "श्र्युकः किति" इतीट्प्रतिषेधः ॥ युतानित्युक उदाहरणम् । परिघमाधूय परिभ्राम्य जघान ॥

---

१ °स्तेऽपि N., C., T1.

संजुघुक्षव आयूंषि ततः प्रतिरुरूषवः ।
रावणान्तिकमाजग्मुर्हतशेषा निशाचराः ॥ १४ ॥

१४. समिति ॥ ततो वधानन्तरं हतेषु शेषाः शिष्टाः निशाचरा आयूंषि जीवितानि संजुघुक्षवः संगूहितुं संगोप्तुमिच्छवः सन्तः । गुहेः सन्नन्तादुप्रत्ययः ॥ "सनि ग्रहगुहोश्च" इतीट्प्रतिषेधः । प्रतिरुरूषवः प्रतिरवितुं प्रत्याख्यातुमिच्छवः । रौतेः सन्नन्तादुप्रत्ययः ॥ "सनि ग्रहगुहोश्च" इति चकारादुगन्तसमुच्चयनादिट्प्रतिषेधः । रावणान्तिकमाजग्मुः ॥

एकेन बहवः शूराः साविष्काराः प्रमत्तवत् ।
वैमुख्यं चकृमेत्युच्चैरूचुर्दशमुखान्तिके ॥ १५ ॥

१५. एकेनेति ॥ एकेन कपिना निमित्तेन बहवः शूराः साविष्काराः सात्मश्लाघा वयं प्रमत्तवत् प्रमत्तैस्तुल्यं वैमुख्यं युद्धपराङ्मुखत्वं चकृम अकार्ष्म । करोतेर्लिटि मसो मादेशः । क्रादिनियमादिड्भावः । अत्र राक्षसानां चित्तविक्षेपात्स्वव्यापारेऽपि व्यामोहात्परोक्षता समस्तीत्युत्तमपुरुषेऽपि न क्षतिः । अत एवोत्तमपुरुषविषयेऽपि चित्तव्याक्षेपात्परोक्षता संभवत्येवेति काशिका । इति दशमुखान्तिके उच्चैरूचुः ॥

मांसोपभोगैसंशूनानुद्विग्नांस्तानवेक्ष्य सः ।
उद्वृत्तनयनो भिन्नान् मन्त्रिणः स्वान् व्यसर्जयत् ॥ १६ ॥

१६. मांसेति ॥ सः रावणः तान् राक्षसान् उद्विग्नान्भीतानवेत्य ज्ञात्वा उद्वृत्तनयनः क्रोधात्प्रलुठिताक्षितारकः सन् ॥ "यस्य विभाषा" इति वृतेर्निष्ठायामिडागमाभावः ॥ मांसोपभोगेन मांसभक्षणेन संशूनान् सम्यक् पीनान् । श्वयतेः कर्तरि क्तः ॥ "ओदितश्च" इति निष्ठानत्वम् ॥ यजादित्वात्संप्रसारणे "संप्रसारणाच्च" इति पूर्वरूपत्वम् ॥ "हलः"

१ प्रतिरुरुत्सवः $E_3$.
२ °मासेदुर्ह° $E_3$.
३ °पयोग $T_2$, $T_4$.
४ °नुद्विग्नस्ता° D.
५ मन्त्रिणोऽस्मान्व्य $E_2$.
६ व्यसर्जयत् $T_3$.

इति दीर्घः ॥ "श्वीदितो निष्ठायाम्" इतीडभावः ॥ एवमुद्धिग्नेऽपि निष्ठानत्वे इट्प्रतिषेधः । मिन्नान् स्निग्धान् मांसाहारमसृणगात्रानित्यर्थः । ञिमिदा स्नेहन इत्यस्मात्कर्त्तरि क्तः ॥ "रदाभ्याम्—" इत्यादिना निष्ठानत्वम् ॥ "ओदितश्च" इतीट्प्रतिषेधः ॥ स्वान्मन्त्रिणः सचिवान्व्यसर्जयत् ॥

प्रमेदिताः[1] सपुत्रास्ते सुस्वान्ता[2] बाढविक्रमाः ।
अम्लिष्टनादा निरगुः फाण्टचित्रास्त्रपाणयः ॥ १७ ॥

१७. प्रमेदिता इति ॥ प्रागेव मिन्ना अपि तत्कालोचितान्नपानैः पुनः प्रकर्षेण मेदितुं प्रवृत्ताः प्रमेदिताः प्रस्निग्धगात्रा इत्यर्थः ॥ "आदिकर्मणि क्तः कर्त्तरि च" इति क्तः ॥ "विभाषा भावादिकर्मणोः" इति निषेधविकल्पादिडागमः ॥ सुस्वान्ताः समरोत्साहेन शोभनचित्ताः अम्लिष्टनादाः वाग्मित्वाद्विस्पष्टवाचः बाढविक्रमाः भृशपौरुषाः फाण्टेनानायासकृतेन रञ्जकद्रव्यविशेषेण चित्राण्यस्त्राणि पाणिषु येषां ते तथोक्ताः । 'अनायासकृतं फाण्टम्' इत्यमरः । ते मन्त्रिणः सपुत्राः निरगुर्निर्गताः ॥ "क्षुब्धस्वान्त—" इत्यादिना निपातनात्स्वान्तादीनां निष्ठान्तानामनिट्त्वादिकार्यं सिद्धम् ॥

तान् दृष्ट्वातिदृढान्[3] धृष्टान् प्राप्तान् परिवृढाज्ञया ।
कष्टं विनर्दतः[4] क्रूरान् शस्त्रघुष्टकरान्[5] कपिः ॥ १८ ॥

१८. अथ युग्मेनाह तानित्यादिना ॥ धृष्टो वियातः "धृषिशसी वैयात्ये" इति धृषेर्निष्ठायामिट्प्रतिषेधः ॥ कपिर्हनूमान् अतिदृढानतिबलिष्ठान् परिवृढस्य प्रभोः रावणस्य आज्ञया प्राप्तान् ॥ "दृढः स्थूलबलयोः" ॥ "प्रभौ परिवृढः" इति च निपातनादुभयत्रानिट्त्वम् ॥ कष्टं कृच्छ्रं यथा भवति तथा विनर्दतो गर्जतः ॥ "कृच्छ्रगहनयोः कषः" इति

१ प्रामोदिताः T2. प्रमोदिताः E2.
२ सुस्विन्ना T2.
३ धृष्टोऽतिदृढान् दृष्ट्वा T3, T4, Com.
४ संनर्दतः T3.
५ शस्त्राघुष्ट° D.

कषेर्निष्ठायामिडभावः ॥ क्रूरान् हिंस्रान् शस्त्रैः शस्त्रघर्षणैर्घुष्टकरान् शब्दायमानपाणीन् ॥ "घुषिरविशब्दने" इति घुषेर्विशब्दनात्स्वाभिप्रायाविष्करणादन्यत्र शब्दनमात्रे निष्ठायामिट्प्रतिषेधः। तान् राक्षसान् दृष्ट्वा आर्दिददित्युत्तरेण संबन्धः ॥

अन्यर्णो[1] गिरिकूटाभानभ्यर्णानार्दिदद्द्रुतम् ।
वृत्तशस्त्रान्[2] महारम्भानदान्तांस्त्रिदशैरपि ॥ १९ ॥

१९. अन्यर्ण इति ॥ नितरामर्दितो न्यर्णः स न भवतीत्यन्यर्णः स्वयं परैरहिंसितः। अर्द हिंसायामिति धातोर्निष्ठा ॥ "अर्दैः सन्निविभ्यः" इतीट्प्रतिषेधः ॥ "रदाभ्याम्—" इत्यादिना निष्ठानत्वे णत्वम् । वृत्तशस्त्रोऽधीतास्त्रवेदः ॥ "णेरध्ययने वृत्तम्" इति वृतेर्ण्यन्तान्निष्ठायामिडभावणिलोपयोर्निपातः ॥ स हनूमान् अभ्यर्णानविदूरान् ॥ "अभेश्चाविदूर्ये" इति निष्ठायामाविदूर्यार्थे इट्प्रतिषेधः । शेषं न्यर्णवत् । महारम्भान्महोद्योगांस्त्रिदशैर्देवैरप्यदान्तानदमितान् ॥ "वा दान्त—" इत्यादिना दमेर्ण्यन्तान्निष्ठायामिडभावणिलोपनिपातः ॥ गिरिकूटाभान्पर्वतशिखरोपमांस्तान्राक्षसान् द्रुतं शीघ्रमार्दिददवधीत् । अर्देर्हिंसार्थाण्णौ चङ् ॥

दमितारिः प्रशान्तौजा[3] नादापूरितदिङ्मुखः ।
जघान रुषितो रुष्टांस्त्वरितस्तूर्णमागतान् ॥ २० ॥

२०. दमितारिरिति ॥ दमितारिः शिक्षितारिः प्रशान्तौजाः प्रशमिताखिलः । प्रशान्तोर्जे इति पाठान्तरम् । नादेन सिंहनादेन आपूरितानि दिङ्मुखानि येन सः रुषितः क्रुद्धः स हनूमान् रुष्टान् क्रुद्धान् तूर्णमागतान् मन्त्रिणस्त्वरितस्त्वरावान् जघान । दमिशमिपूरीणां ण्यन्तानां "वा दान्त—" इत्यादिना निष्ठायां विकल्पेनेट्प्रतिषेधनिपातनादुभयरूपता ॥ "रुष्यमत्वरसंघुषास्वनाम्" इति विकल्पाद्रुषेरुभयरूपता ॥

---

१ अभ्यर्णो $E_3$.
अन्यर्णो T., G., Com.

२ वृत्तशस्त्रो $T_4$, T., G., Com.

३ प्रशान्तोर्जान् C., D., $T_1$, $T_2$, $T_3$.

तेषां निर्हन्यमानानां संघुष्टैः कर्णभेदिभिः ।
अभूदभ्यमितत्रासमास्वान्ताशेषदिग्जगत् ॥ २१ ॥

२१. तेषामिति ॥ विहन्यमानानां प्रह्रियमाणानां तेषां राक्षसानां संबन्धिभिः कर्णभेदिभिः कर्णविदारिभिः संघुष्टैः संघुषितैः आक्रन्दनैरित्यर्थः । जगत् अभ्यमितत्रासं प्राप्तभयमास्वान्ताः आस्वानिताः प्रतिध्वानिताः ककुभो यस्य तथाभूत् ॥ "अच् प्रत्यन्ववपूर्वात्सामलोम्नः" इत्यत्र "अच्" इति योगविभागात्पद्मनाभादिवत्समासान्तः ॥ "रुष्यमत्वरसंघुषास्वनाम्" इतीट्प्रतिषेधविकल्पात्संघुष्टादिषूभयरूपता । संपूर्वस्य घुषेरविशब्दनेऽपि परत्वाद्विकल्प एव । स्वनतेरनुपसृष्टात् "क्षुब्धस्वान्त—" इत्यादिना निपातनान्मनसि नित्यमनिट्त्वे आङुपसृष्टस्यायं विकल्पः ॥

भयसंहृष्टरोमाणस्ततस्तेऽपचितद्विषः ।
क्षणेन क्षीणविक्रान्ताः कपिनानेषत क्षयम् ॥ २२ ॥

२२. भयेति ॥ ततस्त्रासानन्तरं भयेन संहृष्टरोमाणः पुलकिताङ्गाः । सात्त्विकानां सर्वरससाधारणत्वाद् भयेऽपि रोमहर्षः ॥ "हृषेर्लोमसु" इति विकल्पादनिट्त्वम् । अपचितत्विषोऽपचायितत्विषो नष्टतेजस इत्यर्थः ॥ "अपचितश्च" इति निपातनाच्चायतेर्निष्ठायां विकल्पादनिट्त्वं चायश्चिभावश्च । क्षीणविक्रान्ता नष्टपराक्रमास्ते सपुत्रा मन्त्रिणः कपिना हनूमता क्षणेन क्षयं नाशमनेषत नीताः । नयतेः कर्मणि लुङि चिण्वदिडभावपक्षे च्लेः सिचि गुणः झस्यादादेशः ॥

## अथ इडधिकारः ।

हत्वा रक्षांसि लवितुमक्रमीन्मारुतिः पुनः ।
अशोकवनिकामेव निगृहीतारिशासनः ॥ २३ ॥

१ विहन्यमानानां T., G., Com.
२ कण्ठभे° T₃.
३ °मास्वान्तककुभं T., G., Com.
४ संकृष्ट E₂.
५ °त्विषः T₂, T₄, T., G., Com.

२३. हत्वेति ॥ मारुतिर्हनूमान् रक्षांसि हत्वा निगृहीतारिशासनो निरस्तरावणाज्ञः सन् ॥ "ग्रहोऽलिटि दीर्घः" इति दीर्घश्च ॥ पुनरशोकवनिकामेव लवितुं छेत्तुम् ॥ "आर्धधातुकस्येड्वलादेः" इतीडागमः ॥ अक्रमीद्गत इत्यर्थः । क्रमेर्लुङि "स्नुक्रमोरनात्मनेपदनिमित्ते" इतीट् ॥ "ह्मयन्त—" इत्यादिना सिचि वृद्धिप्रतिषेधः ॥

आवरीतुमिवाकाशं वरितुं[1] वीनिवोत्थितम् ।
वनं प्रभञ्जनसुतो नादयिष्ट विनाशयन् ॥ २४ ॥

२४. आवरीतुमिति ॥ प्रभञ्जनसुतो वायुनन्दनः आकाशमावरीतुमाच्छादयितुमिव वीन् पतत्रीन् । 'विविष्किरपतत्रिणः' इत्यमरः । वरीतुं ग्रहीतुमिव चेत्युभयत्र फलोत्प्रेक्षा ॥ "वृतो वा" इति वृञ्वृञोरिटो दीर्घविकल्पः । उत्थितमुच्छ्रितं वनं विनाशयन्निर्मूलयन्नादयिष्ट न दयामास निर्दयं बभञ्जेत्यर्थः । दयतेर्लुङि तङि सिचीट् ॥

वरिषीष्ट शिवं क्षिप्यन् मैथिल्याः कल्पशाखिनः ।
प्रावारिषुरिव क्षोर्णीं[2] क्षिप्ता वृक्षाः समन्ततः ॥ २५ ॥

२५. वरिषीष्टेति ॥ कल्पशाखिनः कल्पवृक्षान् क्षिप्यन् उत्पाट्य स्वर्गं प्रति प्रेरयन् । क्षिपेर्दैवादिकाल्लटः शत्रादेशः । मैथिल्याः शिवं कल्याणं वरिषीष्ट तेभ्यः सीताकल्याणं वरं वृणोत्वित्यर्थः । अत्रातिप्रभूतार्थे वृतवानिति वक्तव्ये भविष्यत्तोपचारादाशीःप्रयोगः। वृणोतेराशीर्लिङि ञित्वात्तङि सीयुट् ॥ "लिङ्सिचोरात्मनेपदेषु" इति विकल्पादिट् ॥ "न लिङि" इति दीर्घप्रतिषेधः ॥ "सुट्तिथोः" इति सुट् । षत्वष्टुत्वे ॥ किं च समन्ततः क्षिप्ताः वृक्षाः कल्पशाखिनः क्षोर्णीं भूमिं प्रावारिषुरिव प्रावृतामुत्तरासङ्गवतीमिव चक्रुरित्युत्प्रेक्षार्थः । 'द्वौ प्रावारोत्तरासङ्गौ' इत्यमरः । वृणोतेर्लुङि सिचि वृद्धिः । उदात्तत्वाद्वलादीट् ॥ "वृतो वा" इति दीर्घे प्राप्ते "सिचि च परस्मैपदेषु" इति प्रतिषेधः ॥

---

१ वरीतुं E₃, T., G., Com.
२ क्षौर्णीं C. क्षोर्णिं T₁, T₃, T₄.

संवुवूर्षुः स्वमाकूतमाज्ञां विवरिषुर्द्रुतम्[१] ।
अवरिष्टाक्षमक्षम्यं कपिं हन्तुं दशाननः ॥ २६ ॥

२६. समिति ॥ अथ दशाननः स्वमाकूतं विषादलिङ्गमिङ्गितं संवुवूर्षुः संवरीतुमाच्छादयितुमिच्छुः आज्ञां शासकत्वं विवरिषुर्विवरितुं प्रकटयितुमिच्छुः सन् । उभयत्र वृणोतेः सन्नन्तादुप्रत्ययः ॥ "इट् सनि वा" इतीट्पक्षे गुणो रपरः अनिट्पक्षे "उदोष्ठ्यपूर्वस्य" इति उकारो रपरः ॥ "इको झल्" इति सनः कित्वान्न गुणः ॥ कपिं हनूमन्तं हन्तुमक्षम्यं क्षन्तुमशक्यमसह्यविक्रममित्यर्थः ॥ "पोरदुपधात्" इति यत्प्रत्ययः ॥ अक्षमक्षकुमारं द्रुतं क्षिप्रमवरिष्ट वृतवान् नियुक्तवानित्यर्थः । वृञो लुङि कर्त्रभिप्राये तङि "लिङ्सिचोरात्मनेपदेषु" इतीट् ॥

ऊचे संवरिषीष्ठास्त्वं गच्छ शत्रोः पराक्रमम् ।
ह्वृषीष्ठा[२] युधि मायाभिः स्वरिता शत्रुसंमुखम्[३] ॥ २७ ॥

२७. ऊच इति ॥ हे वत्स त्वं गच्छ शत्रोः पराक्रमं संवरिषीष्ठाः संवृणुष्व तिरस्कुरुष्वेत्यर्थः । वृञः संपूर्वादाशीर्लिङि थासि "लिङ्सिचोरात्मनेपदेषु" इति विकल्पादिट् । शत्रुसंमुखं शत्रुसमक्षं स्वरिता क्ष्वेलिता उपतापयिता वा सन् । स्वृशब्दोपतापयोरित्यस्मात्तृच् ॥ "स्वरतिसूति—" इत्यादिना विकल्पाद्वलादीट् ॥ युधि मायाभिः ह्वृषीष्ठाः कुटिलचारी भव । ह्वृ कौटिल्य इत्यस्मादाशीर्लिङि "ऋतश्च संयोगादेः" इति पाक्षिक इडभावः ॥ "उश्च" इति लिङ्सिचोः कित्त्वान्न गुणः ॥

द्रुतं संस्वरिषीष्ठास्त्वं[४] निर्भयैः[५] मधनोत्तमे ।
स मायानामगात्सोता कपेर्विधवितुं द्युतिम् ॥ २८ ॥

---

१ विवरिषुं E₈.
२ ह्वृषीष्ठा T., G., Com. कृषीष्ठा D.
३ सन्मुखम् E₂.
४ संस्वरिषीष्ठाश्च T₂, T₃, T₄, T., G., Com.
५ निर्दयैः C., T₁, T₃.

२८. द्रुतमिति ॥ किं च प्रधनोत्तमे महारणे निर्भयः सन् द्रुतं संस्वरिषीष्ठाश्च सम्यक् शब्दायस्व च। स्वरतेराशीर्लिङ् ॥ "समो गम्यृच्छि—" इत्यादिना तङ् ॥ "स्वरतिसूति—" इत्यादिना विकल्पादिट् ॥ इत्यूचे इति संबन्धः। अथ मायानां सोता प्रसविता। सूतेः सूयतेर्वा तृच्। सोऽक्षः कपेर्द्युतिं तेजो विधवितुं विचालयितुमपनेतुमगाद्गतः ॥ "स्वरतिसूति—" इत्यादिना सूधूञो विकल्पादिट्तदभावौ ॥

विगाढारं[1] वनस्यासौ शत्रूणां गाहिता कपिः[2]।
अक्षं रधितुमारेभे रेद्धा[3] लङ्कानिवासिनाम् ॥ २९ ॥

२९. विगाढेति ॥ वनस्यालं विगाढा विलोडयिता शत्रूणां च गाहिता। उभयत्र गाहेस्तृचि ऊदित्वादिड्विकल्पादिडभावपक्षे ढत्वादिकार्यम्। लङ्कानिवासिनां रक्षसां रद्धा हिंसिता। रध हिंसायां तृचि "रधादिभ्यश्च" इति विकल्पादनिट्पक्षे "झषस्तथोः—" इत्यादिना तस्य धत्वम्। असौ कपिः हनूमान् अक्षं रधितुं हिंसितुम्। रधेस्तुमुनि पक्षे इट्। आरेभे आरब्धवान् ॥

निष्कोषितव्यान्निष्कोष्टुं प्राणान् दशमुखात्मजात्।
आदाय परिघं तस्थौ वनान्निष्कुषितद्रुमः ॥ ३० ॥

३०. निरिति ॥ वनान्निष्कुषितद्रुमो निष्कृष्टवृक्षः कपिः ॥ "इण्निष्ठायाम्" इति कुषेर्निष्ठायां नित्यमिट् ॥ दशमुखात्मजात् अक्षात् निष्कोषितव्यान् निष्कृष्टव्यान् प्राणान् निष्कोष्टुं निष्कष्टुम् ॥ "निरः कुषः" इतीड्विकल्पः ॥ परिघमादाय तस्थौ स्थितवान् ॥

एष्टारमेषिता संख्ये[4] सोढारं सहिता भृशम्।
रेष्टारं रेषितुं[5] व्यस्यद्[6]द्रोष्टाक्षः शस्त्रसंहतीः ॥ ३१ ॥

---

१ विगाढालं T., G., Com.
२ शत्रूणामाहितं कपिः T₄.
३ रोद्धा T₃.
४ रणे T₃.
५ वेष्टारं वेषितुं E₃.
६ व्यस्य E₃.

३१. एष्टारमिति ॥ एषिता प्रतिभटान्वेषणशीलः संख्ये युद्धे भृशं सहिता विमर्दसहः रोष्टा रोषणशीलोऽक्षस्तादृशमेष्टारं सोढारं रेष्टारं हिंसितारं हनूमन्तं रेषितुं शस्त्रसंहतीर्व्यास्यत् क्षिप्तवान्। विपूर्वादस्यतेर्लङ्याड्वृद्धी। एष्टारमित्यादौ सर्वत्र ताच्छील्ये तृन् ॥ "तीषसह—" इत्यादिना सर्वत्रेड्विकल्पः ॥

शस्त्रैर्दिदेविषुं संख्ये दुद्यूषुः परिघं कपिः।
अर्दिधिषुर्यशः कीर्त्तिमीर्त्सुं वृक्षैरताडयत् ॥ ३२ ॥

३२. शस्त्रैरिति ॥ संख्ये युद्धे शस्त्रैर्दिदेविषुं देवितुमिच्छुं विजिगीषुमित्यर्थः। कीर्त्तिमीर्त्सुमर्धितुमर्धयितुं वर्धयितुमिच्छुम्। अन्तर्भावितणिजर्थोऽयं निर्देशः। अन्यथा सकर्मकत्वायोगात्। ईदृशमक्षं कपिः स्वयमपि परिघं दुद्यूषुः परिघेण दिदेविषुः ॥ "दिवः कर्म च" इति पक्षे कर्मसंज्ञा। तथा यशांस्यर्दिधिषुः सन्। ईर्त्सुवद्धिग्रहार्थौ। वृक्षैरताडयत्। स्थितेऽपि परिघे कियच्चिरं वृक्षताडनैः चिक्रीडेत्यर्थः। अत्र दीव्यतेर्ऋध्नोतेश्च सन्नन्तादुप्रत्यये "सनीवन्तर्ध—" इत्यादिना इड्विकल्पात्प्रत्येकं द्वैरूप्यम्। तत्रेट्पक्षे इवन्तस्य दिवो लघूपधगुणः। अनिट्पक्षे "हलन्ताच्च" इति सनः कित्त्वे "च्छ्वोः शूडनुनासिके च" इत्यूडादेशे यणादेशे दुद्यूषुः। ऋधेश्चेट्पक्षे लघूपधगुणे रपरे "न न्द्राः—" इत्यादिना निषेधाद्रेफवर्जितस्य धिशब्दस्य द्विर्वचने अभ्यासस्य जश्त्वे अर्दिधिषुः। अनिट्पक्षे "आप्ज्ञप्यृधामीत्" इत्यकारस्य रपर ईकारः। ततो द्विर्वचने "अत्र लोपोऽभ्यासस्य" इत्यभ्यासलोपे ईर्त्सुः ॥

भूयस्तं धिप्सुमाहूय राजपुत्रं दिदम्भिषुः।
अहंस्ततः स मूर्च्छावान् संशिश्रीषुरभूद्‌द्रुमम् ॥ ३३ ॥

३३. भूय इति ॥ भूयस्ताडितोऽपि पुनः धिप्सुं दम्भितुं स्तम्भयितुमिच्छुम्। दम्भु स्तम्भ इति धातोः सन्नन्तादुप्रत्ययः ॥ "सनी-

१ यशांस्यर्दिधिषुः कीर्तिं' T., G., Com. | २ 'माकूय D.

वन्त—" इत्यादिना विकल्पादनिट्पक्षे "दम्भ इच" इति दम्भेरच इकारः । पूर्ववदभ्यासलोपः ॥ "हलन्ताच" इत्यत्र हल्ग्रहणस्य जातिवचनत्वात्सनः कित्त्वे "अनिदिताम्—" इत्यादिना उपधानकारलोपः । दकारस्य भष्भावे धकारः ॥ "खरि च" इति चर्त्वे भकारस्य पकारः । तं राजपुत्रमक्षं दिदम्भिषुः स्वयं स्तम्भयितुमिच्छुः । दम्भेरिट्पक्षे रूपम् । आहूय अहन् हतवान् । हन्तेर्लङि हल्ङ्यादिलोपः । ततो घातानन्तरं सोऽक्षो मूर्च्छावान् मूर्च्छितो ध्वजं ध्वजस्तम्भं संशिश्रीषुः संश्रयितुमिच्छुः अभूत् संश्रित इत्यर्थः । श्रयतेः सन्नन्तादुप्रत्ययः ॥ श्रयतेः "सनीवन्त—" इत्यादिना विकल्पादनिट्पक्षे "अज्झनगमां सनि" इति दीर्घः ॥

आश्वस्याक्षः क्षणाल्लोकान् बिभ्रक्षुरिव तेजसा ।
रुषा बिभ्रज्जिषुमख्यं कपिं बाणैरवाकिरत् ॥ ३४ ॥

३४. आश्वस्येति ॥ सोऽक्षः क्षणादाश्वस्य पुनरुज्जीव्य तेजसा स्वप्रतापेन लोकान् बिभ्रक्षुः भ्रष्टुं पक्तुमिच्छुरिव दिधक्षुरिवेति यावत् । उत्प्रेक्षालंकारः । रुषा रोषेण बिभ्रज्जिषुः । पूर्ववद्विग्रहार्थौ । भ्रस्ज पाक इति धातोः सन्नन्तादुप्रत्ययः ॥ "सनीवन्त—" इत्यादिना इट्पक्षे "भ्रस्जो रोपधयोः—" इत्यादिना रमागमाभावपक्षे सकारस्य श्चुत्वजश्त्वे । उभयाभावपक्षे "स्कोः—" इत्यादिना सलोपः ॥ "व्रश्च—" इत्यादिना षत्वम् ॥ "षढोः कः सि" इति कत्वम् ॥ "इण्कोः" इति षत्वे बिभ्रक्षुः । बिभ्रज्जिषुः दिधक्षुरग्निः तत्प्रख्यं तत्कल्पं कपिं बाणैरवाकिरत् अवकीर्णवान् ॥

संयुयूषुं दिशो बाणैरक्षं यियविषुर्द्रुमैः ।
कपिर्मायामिवाकार्षीद्दर्शयन् विक्रमं रणे ॥ ३५ ॥

३५. समिति ॥ बाणैर्दिशः संयुयूषुं संयवितुं मिश्रयितुमिच्छुम् । यातेः सन्नन्तादुप्रत्ययः ॥ "सनीवन्त—" इत्यादिना अनिट्पक्षे

१ क्रोधाग्नि° D.

"अज्झनगमां सनि" इति दीर्घः ॥ अक्षं द्रुमैर्यियविषुः । इट्पक्षे गुणावादेशौ । कपिः रणे विक्रमं दर्शयन् मायामिन्द्रजालमिवाकार्षीत् । तथा सान्द्रं द्रुमान्ववर्षेत्यर्थः ॥

वानरं प्रोर्णुनविषुः शस्त्रैरक्षो विदिद्युते ।
तं प्रोर्णुनूषुरुपलैः स वृक्षैराबभौ कपिः ॥ ३६ ॥

३६. वानरमिति ॥ अक्षो वानरं शस्त्रैः प्रोर्णुनविषुराच्छादयितुमिच्छुर्विदिद्युते विदिदीपे ॥ "द्युतिस्वाप्योः संप्रसारणम्" इत्यभ्यासस्य संप्रसारणम् ॥ तमक्षमुपलैर्वृक्षैश्च प्रोर्णुनूषुः प्रोर्णवितुमिच्छुः कपिराबभौ । इच्छोक्तेरविरामः सूचितः । उभयत्रोर्णोतेः सन्नन्तादुप्रत्यये पूर्ववदनिट्पक्षे "अज्झनगमां सनि" इति दीर्घः । इट्पक्षे तु "विभाषोर्णोः" इतीडादिप्रत्ययस्य ङित्त्वे उवङादेशः । अङित्त्वे गुणावादेशौ ॥

स्वां जिज्ञापयिषू शक्तिं बुभूर्षू नु जगन्ति किम् ।
शस्त्रैरियक्रुषातां तौ पश्यतां बद्धिमाहवे ॥ ३७ ॥

३७. स्वामिति ॥ तौ कपिराक्षसौ स्वां शक्तिं सामर्थ्यं जिज्ञापयिषू लोके प्रकटीचिकीर्षू नु किं वा जगन्ति शस्त्रैर्बुभूर्षू भर्तुं पूरयितुमिच्छू नु । भरज्ञाप्योः पूर्ववदिड्विकल्पः । आहवे पश्यतां जनानामिति बुद्धिं वितर्कमक्रुषातां कृतवन्तौ ॥

मायाभिः सुचिरं क्लिष्ट्वा राक्षसोऽक्लिशितक्रियम् ।
संप्राप्य वानरं भूमौ पपात परिघाहतः ॥ ३८ ॥

३८. मायाभिरिति ॥ राक्षसोऽक्षः सुचिरं मायाभिः क्लिष्ट्वा क्लिशित्वा चिरं युद्ध्वेत्यर्थः अक्लिशितक्रियमक्लिष्टकर्माणमखण्डितपौरुषं वानरं संप्राप्यासाद्य परिघेणाहतो भूमौ पपात ममारेत्यर्थः ॥ "क्लिशः क्त्वानिष्ठयोः" इतीड्विकल्पः ॥

---

१ संबुभूर्षू ज° T₂. | २ पश्यतो विस्मा° D.

पवितोऽनुगुणैर्वातैः शीतैः पूत्वा पयोनिधौ।
बभञ्जाध्युषितं भूयः क्षुधित्वा पत्रिभिर्वनम्॥ ३९॥

३९. पवित इति॥ अथ स हनूमान् पयोनिधौ पूत्वा स्नानेन पवित्वा शुद्ध्वा शीतैरनुगुणैर्वातैरनुकूलवातैः पावितः पूतः सन्॥ "पूङश्च" इति क्त्वानिष्ठयोरिड्विकल्पः॥ पत्रिभिः पक्षिभिः क्षुधित्वा बुभुक्षित्वा अध्युषितमधिष्ठितं वनम्॥ "वसतिक्षुधोरिट्" इति क्त्वानिष्ठयोर्नित्यमिडागमः॥ भूयो बभञ्ज॥

उच्चैरञ्चितलाङ्गूलः शिरोऽञ्चित्वैव संवहन्।
दधद्विलुभितं वातैः केसरं वह्निपिङ्गलम्॥ ४०॥

४०. उच्चैरिति॥ उच्चैर्यथा तथा अञ्चितलाङ्गूलः उदञ्चितवालधिः शिरोऽञ्चित्वैव उदञ्चयैव संवहन्। विजयोत्साहादुदञ्चितशिरःपुच्छ इत्यर्थः॥ "अञ्चेः पूजायाम्" इति पूजार्थे नित्यमिट्। इयमेवानयोः पूजा यदुन्नमनम्। वातैर्विलुभितम्॥ "लुभो विमोहने" इति विमोहने क्त्वानिष्ठयोर्नित्यमिट्॥ विमोहनं व्याकुलीकरणमिति काशिका। वह्निपिङ्गलं केसरं किञ्जल्कं दधत्कपिः बभञ्जेति पूर्वेणान्वयः॥

जरित्वेव जवेनान्ये निपेतुस्तस्य शाखिनः।
व्रश्चित्वा विवशानन्यान् बलेनापातयत्तरून्॥ ४१॥

४१. जरित्वेति॥ अन्ये शाखिनस्तरवो जरित्वेव जीर्णा भूत्वेव तस्य कपेः जवेन वेगेनैव निपेतुः। यथा जीर्णा वायुवेगेनेति भावः। अन्याननतिरूढमूलांस्तरूंस्तलेन पाणितलेन व्रश्चित्वा छित्त्वा विवशान्निरालम्बानपातयत्॥ "जॄव्रश्च्योः क्त्वि" इति क्त्वाप्रत्यये नित्यमिट्॥

१ कपिः पूत्वा प° C.
पूत्वा शीतैः प° B., E₂.
२ °ञ्चित्वैव T., G., Com.
३ दधद्विलुलितं E₂.
४ केसरं B., T., G., Com.
५ पेतुश्चान्येऽस्य शाखिनः T₄.
६ तलेना° T., G., Com., D.

दमित्वार्प्यरिसंघातानश्रान्त्वा कपिकेशरी ।
वनं चचार कर्त्तिष्यन्नर्त्स्यन्निव निरङ्कुशः ॥ ४२ ॥

४२. दमित्वेति ॥ कपिकेसरी रिपुसंघातान् दमित्वा दान्त्वापि हत्वापीत्यर्थः अश्रान्त्वा अश्रमित्वा ॥ "उदितो वा" इति दमेः श्रमेश्च क्त्वायां विकल्पादिट् ॥ कर्त्तिष्यन् पुनश्छेत्स्यन् नर्त्स्यन् नर्त्तिष्यन्निव ॥ "सेऽसिचि कृतचृतछृदतृदनृतः" इति सकाराद्यार्धधातुके विकल्पादिट् ॥ निरङ्कुशो दुर्वारः सन् वनं चचार । निर्भीको वने बभ्रामेत्यर्थः ॥

पारं जिगमिषन् सोऽथ पुनरावर्त्स्यतां द्विषाम् ।
मत्तद्विरदवद्रेमे वने लङ्कानिवासिनाम् ॥ ४३ ॥

४३. पारमिति ॥ अथ स कपिः पुनरावर्त्स्यतामावर्त्तिष्यमाणानामागमिष्यतामित्यर्थः ॥ "न वृद्भ्यश्चतुर्भ्यः" इतीट्प्रतिषेधः ॥ द्विषां पारमन्तं जिगमिषन् गन्तुमिच्छन् ॥ "गमेरिट् परस्मैपदेषु" इतीडागमः ॥ लङ्कानिवासिनां संबन्धिनि वने मत्तद्विरदवत् मत्तगजेन तुल्यं रेमे चिक्रीड ॥

यद्यकल्प्स्यदभिप्रायो योद्धुं रक्षःपतेः स्वयम् ।
तमप्यकर्त्स्यमद्याहं वदन्निसचरत्कपिः ॥ ४४ ॥

४४. यदीति ॥ यदि रक्षःपतेः रावणस्य स्वयं स्वत एव योद्धुमभिप्रायो युयुत्सा अकल्प्स्यत् अकल्पिष्यत स्याश्चेदित्यर्थः । कृपेः क्रियातिपत्तौ लङि "लुटि च क्लृपः" इति चकारात्परस्मैपदम् ॥ "तासि च क्लृपः" इति चकारात्सकाराद्यार्धधातुकेऽपि परस्मैपदेष्विट्प्रतिषेधः ॥ अद्याहं तमप्यभिप्रायं तं रावणं वा अकर्त्स्यमकर्त्तिष्यम् ॥ कृती छेदने । पूर्ववल्लृङि "सेऽसिचि कृत—" इत्यादिना सकाराद्यार्धधातुकस्यं नेट् । इति वदन् कपिरचरत् ॥

---

१ दमित्वा रिपुसं° T., G., Com.
२ °केसरी T., G., Com., E₃.
३ जिगमिषुः D., E₃.

हते तस्मिन् प्रियं श्रुत्वा कल्प्ता प्रीतिं परां प्रभुः।
तोषोऽद्यैव च सीतायाः परश्चेतसि कल्प्स्यति ॥ ४५ ॥

४५. हत इति ॥ किं च तस्मिन् रावणे हते सति प्रियं प्रियोदन्तं श्रुत्वा प्रभुः स्वामी रामः परां प्रीतिं कल्प्ता कल्पयिता संपादयिता। अन्तर्भावितणिजर्थोऽयम्। कृपेरकर्मकत्वात्। अद्यैव च सीतायाश्चेतसि परं भृशं तोषो हर्षः कल्प्स्यति कल्पिष्यते भविष्यतीत्यर्थः ॥ "तासि च कृपः" इतीट्प्रतिषेधः। "लुटि च कृपः" इति परस्मैपदम् ॥

आहूय रावणोऽवोचदथेन्द्रजितमन्तिकात्।
वने मत्त इव क्रुद्धो गजेन्द्रः प्रधनेष्वटन् ॥ ४६ ॥

४६. आहूयेति ॥ अथाक्षवधश्रवणानन्तरं रावणः इन्द्रजितमन्तिकादन्तिकं प्रत्याहूय ॥ "दूरान्तिकार्थेभ्यो द्वितीया च" इति चकारात्पञ्चमी ॥ अवोचत्। यदवोचत्तदेव सार्धश्लोकचतुष्टयेनाह। वन इति। वने मत्तो गजेन्द्र इव क्रुद्धः प्रधनेषु युद्धेष्वटन् संचरन् ॥

ययाथ त्वं द्विषामन्तं भूयो यातासि चासकृत्।
शशकथ जेतुं त्वं देवान् मायाः सस्मर्थ संयति ॥ ४७ ॥

४७. ययाथेति ॥ असकृद् द्विषतामन्तं पारं ययाथ अयासीः। यातेस्तासौ नित्यमनिट्त्वात् "अचस्तास्वत्थल्यनिटो नित्यम्" इतीट्प्रतिषेधः। भूयो यातासि यास्यसि च। तासावनिट्त्वं चेदमुदाहृतम्। त्वं देवान् जेतुं शशकथ अशकः। शकेर्लिटि थासि "उपदेशेऽत्वतः" इतीट्प्रतिषेधः। किं च संयति मायाः सस्मर्थ अस्मार्षीः ॥ "ऋतो भारद्वाजस्य" इतीट्प्रतिषेधः ॥

त्वं ससर्जिथ शस्त्राणि दद्रष्ठारींश्च दुःसहान्।
शस्त्रैरादिथ शस्त्राणि त्वमेव महतामपि ॥ ४८ ॥

१ तोषश्चाद्यैव सीतायाः C., D.
२ °मन्तिकं D., $T_3$.
३ द्विषतामन्तं T., G., Com., $T_3$.
४ संयति C., $T_3$.
५ °रीन्सुदुःसहान् C., D.

४८. त्वमिति ॥ किं च त्वं शस्त्राणिससर्जिथ सस्रष्ठ दुःसहान् दुर्धर्षानरींश्च दद्रष्ठ ददर्शिथ । अनिदंपूर्वस्ते रणाभियोग इत्यर्थः ॥ "विभाषा सृजिदृशोः" इतीड्विकल्पः ॥ त्वमेव महतां महेन्द्रादीनामपि शस्त्राणि शस्त्रैरादिथ भक्षयसि स्म ॥ "इडत्यर्तिव्ययतीनाम्" इतीट् ॥

स त्वं हनिष्यन् दुर्बुद्धिं कपिं व्रज ममाज्ञया ।
मा नाञ्जी राक्षसीर्मायाः[1] प्रस्तावीर्मा न विक्रमम् ॥ ४९ ॥

४९. स इति ॥ स पूर्वोक्तगुणविशिष्टस्त्वं दुर्बुद्धिमनुचितकर्मारम्भित्वादिति भावः कपिं हनिष्यन् ॥ "ऋद्धनोः स्ये" इतीट् ॥ ममाज्ञया व्रज । राक्षसीं मायां मा नाञ्जीः मा न व्यक्तीकुरु । किं तु व्यक्तीकुर्वित्यर्थः ॥ "अञ्जेः सिचि" इतीट् ॥ विक्रमं मा न प्रस्तावीः । किं तु प्रस्तुहीत्यर्थः ॥ "स्तुसुधूञ्भ्यः परस्मैपदेषु" इतीट् ॥ "इट ईटि" इत्युभयत्र सलोपः ॥ "न माङ्योगे" इत्यट्प्रतिषेधः । प्रतिषेधद्वयस्य प्रकृतार्थपरत्वम् ॥

मा न सावीर्महास्त्राणि मा न धावीरारीं[2] रणे ।
वानरं मा न संयंसीर्[3]व्रज तूर्णमशङ्कितः ॥ ५० ॥

५०. मेति ॥ महास्त्राणि मा न सावीः मा न प्रसुहि किं तु प्रसुहि प्रयुङ्क्ष्वेत्यर्थः । षु प्रसवैश्वर्ययोः इति धातोरदादिकाल्लुङ् । रणेऽरीन् मा न धावीर्मा न कम्पय । किं तु कम्पय भीषयस्वेत्यर्थः । धूञो लुङ् । उभयत्र "स्तुसुधूञ्भ्यः—" इत्यादिना इट् । शेषं पूर्ववत् । वानरं मा न संयंसीः मा न संयच्छ किन्तु संयच्छ बधानेत्यर्थः । यमेर्लुङि "यमरमनमातां सक् च" इति सगिडागमौ । शेषं पूर्ववत् । अशङ्कितस्तूर्णम् ॥ "रुष्यमत्वर—" इत्यादिना विकल्पादनिट्पक्षे "ज्वरत्वर—" इत्यादिना ऊठ् ॥ व्रज गच्छ ॥

---

१ राक्षसीं मायां T₃, T., G., Com.
२ °रीन् रणे D., T., G., Com.
३ संयासी° T₂.

अनंसीच्चरणौ तस्य मन्दिरादिन्द्रजिद्व्रजन्।
अवाप्य चाशिषस्तस्माद[२]यासीत्प्रीतिमुत्तमाम्॥ ५१॥

५१. अनंसीदिति॥ अथेन्द्रजित् मन्दिराद्व्रजन् निर्गच्छंस्तस्य रावणस्य चरणावनंसीत् ननाम। तस्मात्पितुराशिषश्चावाप्योत्तमां महतीं प्रीतिमयासीत्॥ नमियात्योर्लुङि "यमरमनमातां सक् च" इति सगिडागमौ। गतमन्यत्॥

ग[३]ते तस्मिन्नुपारंसीत् संरम्भाद्रक्षसांपतिः।
इन्द्रजिद्विक्रमाभिज्ञो मन्वानो वानरं जितम्॥ ५२॥

५२. गत इति॥ इन्द्रजिद्विक्रमाभिज्ञो रक्षसां पतिः रावणो वानरं जितं मन्वानः तस्मिन्निन्द्रजिति गते सति संरम्भात्कोपात्। 'संरम्भः संभ्रमे कोपे' इति विश्वः। उपारंसीदुपरतः। रमेर्लुङि "उपाच्च" इति परस्मैपदम्। सगिडागमादि॥

सं[४]सिस्मयिषमाणोऽगान्मायां व्यञ्जिजिषुर्द्विषः।
जगत् पिपविषु[६]र्वायुः कल्पान्त इव दुर्धरः॥ ५३॥

५३. स इति॥ स इन्द्रजित् द्विषः शत्रून् सिस्मयिषमाणः स्मेतुं परिहसितुमिच्छन्। स्मयतेः सन्नन्ताल्लटः शानच्। मायां व्यञ्जिजिषुर्व्यङ्क्तुमिच्छन्। अञ्जेः सन्नन्तादुप्रत्ययः। कल्पान्ते जगत्पिपविषुः पवितुमिच्छुः प्रमार्ष्टुकामः। पूङः सन्नन्तादुप्रत्ययः॥ "स्मिपूङ्रञ्ज्वशां

---

१. The latter half of the verse is found only in T., G., Com., T2, T3, T4, D. other Mss., read it thus:—
अनंसी° . . . . . . . . . ।
गते तस्मि° . . . . . . . ॥

२ °दायासी° N.

३ All Mss., and books except T2, T3, T4, D., T., G., and Com., read it as under:—
इन्द्रजि° . . . . . . . . . ।
संसि° . . . . . . . . . . ॥
D. reads it as under:—
इन्द्रजि°
गते त°

४ स सि° T., G., Com.
All Mss., except T2, T3, T4, D., T., G., and Com., read thus:—
जगत्° . . . . . . . . . . ।
लोका° . . . . . . . . . . ॥

५ °र्दुर्द्धतम् D.

६ °पिपरिषु° E2.

सनि" इति सर्वत्रेट् ॥ कल्पान्ते वायुः प्रलयकालमारुत इव दुर्धरो दुर्धर्षः सन्नगात् ॥

लोकानशिशिषोस्तुल्यः कृतान्तस्य विपर्यये ।
वने चिकरिषोर्वृक्षान् बलं जिगरिषुः कपेः ॥ ५४ ॥

५४. लोकानिति ॥ विपर्यये कल्पान्ते लोकानशिशिषोरशितुमिच्छोर्बुभुक्षोः । अश्नातेः सन्नन्तादुप्रत्ययः । पूर्वेणैवेट् । कृतान्तस्यान्तकस्य तुल्यः स इन्द्रजिद्वने वृक्षांश्चिकरिषोः विचिक्षिप्सोः कपेः बलं जिगरिषुः जिग्रसिषुः ॥ "किरश्च पञ्चभ्यः" इत्युभयत्रापीट् ॥ अन्यद्गतम् ॥

रोदिति स्मेव चायाति तस्मिन्पक्षिगणः शुचा ।
मुक्तकण्ठं हतान्वृक्षान् बन्धून्बन्धोरिवागमे ॥ ५५ ॥

५५. रोदितीति ॥ तस्मिन्निन्द्रजित्यायात्यागच्छति सति पक्षिगणः शुचा शोकेन हतान् वृक्षान् बन्धोरागमे मृतान्बन्धूनिवेत्युपमा । मुक्तकण्ठं सशब्दं रोदिति स्मेवेत्युत्प्रेक्षा ॥ "रुदादिभ्यः सार्वधातुके" इतीट् ॥

आश्वसीदिव चायाति तद्वेगपवनाहतम् ।
विचित्रस्तवकोद्भासि वनं लुलितपल्लवम् ॥ ५६ ॥

५६. आश्वसीदिति ॥ तस्मिन्नायाति सति तस्य वेगपवनेनाहतमाधूतं विचित्रैः स्तवकैः उद्भासि प्रकाशमानं लुलितपल्लवं विक्षिप्तविटपं वनमाश्वसीदिव उज्जीवितमिवेत्युत्प्रेक्षा । श्वसेर्लुङि "रुदश्च पञ्चभ्यः" इतीट् ॥

---

१ लोकानाशि° N., C., T2, T3, T4, E2, E3, B.
All Mss., and books except T2, T3, T4, D., T., G., and Com. read the verse as under :—
वने चि° . . . . . . . . . . ।
लसद्विचित्रशाखौघः संग्रामो मूर्तिमानिव ॥
२ °पवनाशितम् T2.
३ ललित° T2, T3.

न प्राणिषि दुराचार मायानामीशिषे [1]न च ।
नेडिषे यदि काकुत्स्थं [2]तमूचे वानरो वचः ॥ ५७ ॥

५७. नेति ॥ हे दुराचार न प्राणिषि न जीवसि मरिष्यसीत्यर्थः । अन प्राणन इति धातोः सार्वधातुके लटि सिपि रुदादित्वादिट् । मायानां च नेशिषे न प्रभवसि । मयि मायाश्च न प्रभवन्तीत्यर्थः ॥ "ईशः से" इतीट् ॥ "अधीगर्थ—" इत्यादिना षष्ठी ॥ काकुत्स्थं रामं नेडिषे यदि न स्तौषि चेत् शरणं न गमिष्यसि चेदित्यर्थः ॥ "ईड-जनोर्ध्वे च" इति चकारात्सेशब्दस्य इट् ॥ इति वचो वानरस्तमिन्द्र-जितमूचे ॥ इतीडधिकारः ॥

अथ सत्वाधिकारः ।

ससैन्यश्छादयन् संख्ये प्रावर्तिष्ट तमिन्द्रजित् ।
शरैः क्षु[3]रप्रैर्मायाभि[4]ः शत[5]शः सर्वतो मुहुः ॥ ५८ ॥

५८. ससैन्य इति ॥ इन्द्रजित् संख्ये युद्धे ससैन्यः सेनासमवेतः सन् तं कपीन्द्रं शरैः साधारणैर्बाणैः क्षुरप्रैरर्धचन्द्रैः । 'अर्धचन्द्रः क्षुरप्रः स्यात्' इति यादवः । मायाभिरिन्द्रजालैश्च शतशः सर्वतो मुहुश्छा-दयन् आच्छादयन् प्रावर्तिष्ट प्रवृत्तः । ससैन्यः इत्यत्र "विसर्जनी-यस्य सः" इति सत्वे श्चुत्वम् । शरैः क्षुरप्रैः इत्यत्र "शर्परे विस-र्जनीयः" इति विसर्जनीयस्य विसर्जनीयादेशः । अन्यत्र "वा शरि" इति विकल्पात्सत्वे शर्परस्य श्चुत्वम् ॥

वानरः[6] कुलशैलाभः[7] प्रसह्यायुधशीकरम्[8] ।
रक्षस्पाशान् यशस्काम्यंस्तमस्कल्पानदुद्रुवत् ॥ ५९ ॥

५९. वानर इति ॥ कुलशैलाभः तद्वद्रणे स्थिर इत्यर्थः वानरो मारुतिः आयुधानि शीकरा इवेति उपमितसमासः । तद्वदकिञ्चित्कराणीत्यर्थः ।

१ च न C.
२ काकुत्स्थमूचे तं B., $T_2$, $T_3$, $T_4$.
३ खुरप्रैः $E_2$.
४ °भिरशात° T., G., Com.
५ °तशस्सर्वे° T., G., Com.
६ वानर○कु° Com.
७ °शैलाभः○प्र° Com.
८ शीकरः $T_2$, T.
शीकरान् $T_3$, Com.

प्रसह्याभिभूय यश आत्मन इच्छन् यशस्काम्यन् ॥ "काम्यच" इति काम्यचप्रत्यये तदन्तात्सनाद्यन्तधातोर्लटः शत्रादेशः । ईषदसमाप्तानि तमांसि तमस्कल्पान् । ईषदसमाप्तौ कल्पप्प्रत्ययः । कुत्सितानि रक्षांसि रक्षःपाशाः तान् क्षुद्रराक्षसान् ॥ "याप्ये पाशप्" इति याप्यार्थे पाशप्प्रत्ययः । याप्यः कुत्सितः । प्रकृत्यर्थविशेषकाश्च स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्त इति नपुंसकत्वे सिद्धे पुल्लिङ्गता चिन्त्या । अत्र वानरः शैलाभः इत्युभयत्रापि "कुप्वोः ≍क≍पौ च" इति यथाक्रमं विसर्जनीयस्य जिह्वामूलीयोपध्मानीयौ । पाशबादिप्रत्ययस्थयोः कुप्वोरपदादित्वात् "सोऽपदादौ" इति सर्वत्र विसर्जनीयस्य सत्वम् । अदुद्रुवत् तानभिद्रुत इत्यर्थः । द्रुगताविंत्यस्माल्लुङि "णिश्रिद्रुस्रुभ्यः—" इत्यादिना चङ्युवङादेशः ॥

धनुष्पाशभृतः संख्ये ज्योतिष्कल्पोरुकेशरः[1,2] ।
दुधाव निर्नमस्कारान् राक्षसेन्द्रपुरस्कृतान् ॥ ६० ॥

६०. धनुरिति ॥ ज्योतिष्कल्पोरुकेसरः ज्वालातुल्यमहासटः कपीन्द्रो धनुष्पाशानि कुत्सितधनूंषि बिभ्रतीति तद्भृतः । पूर्ववत् पाशकल्पपोः "इणः षः" इति विसर्जनीयस्य षत्वम् । निर्नमस्कारान् दर्पात्कस्याप्यकृतनमस्कारान् राक्षसेन्द्रेणेन्द्रजिता पुरस्कृतानग्रतः कृतान् राक्षसान् ॥ "नमस्पुरसोर्गत्योः" इति विसर्जनीयस्य सत्वम् ॥ "साक्षात्प्रभृतीनि च" ॥ "पुरोऽव्ययम्" इति च गतित्वम् । संख्ये रणे दुधाव धुनोति स्म ॥

स्वामिनो निष्क्रयं गन्तुमाविष्कृतबलः कपिः ।
रराज समरे शत्रून् घ्नन् दुष्कृतबहिष्कृतः ॥ ६१ ॥

६१. स्वामिन इति ॥ स्वामिनो रामस्य निष्क्रयमानृण्यं गन्तुं प्राप्तुमाविष्कृतबलः प्रकाशितशक्तिः तथा दुष्कृतबहिष्कृतो बहिष्कृतदुष्कृतः पलायनपापरहित इत्यर्थः । यथाह मनुः । 'यस्तु भीतः परावृत्तः

१ थ्योतिष्कल्पो° ०. | २ °केसरः B., E₂, T., G., Com.

संग्रामे हन्यते परैः। भर्तुर्यद् दुष्कृतं किंचित्तत्सर्वं प्रतिपद्यते॥ यच्चास्य सुकृतं किंचिदमुत्रार्थमुपार्जितम्। भर्ता तत्सर्वमादत्ते परावृत्तहतस्य तु'॥ इति। आहिताग्न्यादित्वान्निष्ठायाः परनिपातः। कपिः समरे शत्रून् घ्नन् रराज॥ "इदुदुपधस्य चाप्रत्ययस्य" इति सर्वत्र विसर्जनीयस्य षत्वम्॥

> चतुष्काष्ठं क्षिपन् वृक्षांस्तिरस्कुर्वन्नरीन्[1] रणे।
> तिरस्कृत[2]दिगाभोगो[3] बहुधा ददृशे भ्रमन्[4]॥ ६२॥

६२. चतुरिति॥ वृक्षान् चतस्रः काष्ठाः दिशः समाहृताश्चतुष्काष्ठम्। समाहारद्विगौ "आबन्तो वा" इति विकल्पान्नपुंसकत्वम्॥ "इदुदुपधस्य—" इत्यादिना विसर्जनीयस्य षत्वम्॥ चतुष्काष्ठं क्षिपन् तदुद्दिश्य क्षिपन् तत्र क्षिपन्नित्यर्थः। गम्यमानोद्देशक्रियापेक्षया कर्मत्वम्। बहुव्रीहौ क्षेपणक्रियाविशेषणमेतदिति केचित्। रणे रिपूंस्तिरस्कुर्वन्नभिभवन् तिरःकृतदिगाभोगः स्वकायेन वृक्षैश्चाच्छादितदिग्विस्तारः॥ "तिरसोऽन्यतरस्याम्" इति सत्वविकल्पः। कपिर्भ्रमन् रणे नानाविधं चरन् बहुधा ददृशे। एकोऽप्यनेक इव दृष्ट इत्यर्थः। एकस्य बहुत्वासंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिः॥

> द्विष्कुर्वतां चतुष्कुर्वन्नभिघातं[5] नगैर्द्विषाम्।
> बहिष्करिष्यन् संग्रामादरीन्[6] ज्वलनपिङ्गलः॥ ६३॥

६३. अथ सार्धश्लोकेन मारुतिं वर्णयति॥ द्विरित्यादिना॥ ज्वलनपिङ्गलोऽग्निपिशङ्गोऽसौ मारुतिः नगैर्वृक्षैरभिघातं द्विर्द्विर्वारं कुर्वतां द्विषां चतुश्चतुर्वारं कुर्वन्॥ "द्वित्रिचतुर्भ्यः सुच्" इति कृत्वोऽर्थे सुच्॥ "द्विस्त्रिश्चतुरिति कृत्वोऽर्थे" इति विसर्जनीयस्य विकल्पात्षत्वम्। संग्रामादरीन् बहिष्करिष्यन् निराकरिष्यन्। इदुदुपधत्वान्नित्यं षत्वम्॥

---

१ °कुर्वन्रिपूनरणे T., G., Com.
२ तिरःकृत° T., G., Com.
३ दिशाभोगो T₃.
४ ददृशे बहुधा भ्रमन् c., N., C., T., G. बहुशो ददृशे भ्रमन् T₄.
५ °भिघाते D.
६ संग्रामाद्रिपून् N., C., T₁, T₃, E₂.

ज्योतिष्कुर्वन्निवैकोऽसावाटीत् संख्ये परार्ध्यवत् ।
तमनायुष्करं प्राप शक्रशत्रुर्धनुष्करः ॥ ६४ ॥

६४. ज्योतिरिति ॥ ज्योतिष्कुर्वन्निव तेजः सुवान इवेत्यर्थः । क्रियासामान्यवाचिना विशेषो लक्ष्यते । एकोऽपि परार्धवत् । परार्धशब्दोऽत्र संख्येयवचनः । परार्धसंख्याक इवेत्युत्प्रेक्षा । संख्ये युद्धे आटीदचारीत् ॥ "इट ईटि" इति सलोपः ॥ आयुष्करो न भवतीत्यनायुष्करं जीवितहारिणं मारुतिं धनुः करे यस्य स धनुष्करः ॥ "नित्यं समासेऽनुत्तरपदस्थस्य" इत्युभयत्रापि नित्यं षत्वम् ॥ शक्रशत्रुरिन्द्रजित् प्राप अभियात इत्यर्थः ॥

अस्यन्नरुष्करान् बाणान् ज्योतिष्करसमद्युतिः ।
यशस्करो यशस्कामं कपिं बाणैरवाकिरत् ॥ ६५ ॥

६५. अस्यन्निति ॥ अरुष्करान् व्रणकरान् । 'व्रणोऽस्त्रियामीर्ममरुः' इत्यमरः । बाणानस्यन् क्षिपन् ज्योतिष्करसमद्युतिर्भास्करसमप्रभः । अत्रोभयत्रापि "नित्यं समासे—" इत्यादिना षत्वम् । यशस्करः शत्रुक्षयेनात्मनः कीर्त्तिसम्पादकः स राक्षसो यशस्कामं तद्वत्कीर्त्तिकामम् ॥ "अतः कृकमि—" इत्यादिना सत्वम् ॥ कपिं बाणैरवाकिरद्विक्षेप ॥

चकाराधस्पदं नासौ चरन् वियति मारुतिः ।
मर्माविद्भिस्तमस्काण्डैर्भिद्यमानोऽप्यनेकधा ॥ ६६ ॥

६६. चकारेति ॥ असौ मारुतिः वियति आकाशे चरन् मर्माविद्भिः मर्मभेदिभिः । विध्यतेः क्विप् ॥ "नहिवृति—" इत्यादिना दीर्घः ॥ तमस्काण्डैरयोमयत्वात्तमःसवर्णैः । कस्कादित्वात्सत्वम् । अनेकधा

---

१ ज्योतिःकुर्व° E2.
२ परार्ध T., G., Com.
३ तथानायु° T4.
४ °धनुर्धरः D., E2.
५ द्योतिष्कर° E2.
६ °रताडयत् N., C., T1, E2, E3, B.
७ °विध्यमानो° N., C., T1, T3, T4. वध्यमानो T2.

भिद्यमानोऽप्यधस्पदं भूतले पादविक्षेपं न चकार । मयूरव्यंसकादित्वात्समासे "अधःशिरसी पदे" इति सत्वम् ॥ इति सत्वाधिकारः ॥

## अथ मूर्धन्याधिकारे षत्वाधिकारः ।

पुरुहूतद्विषो धूर्षु युक्तान् यानस्य वाजिनः ।
आयूंषि त्वक्षु निर्भिद्य माभञ्जनिरमोचयत् ॥ ६७ ॥

६७. पृतनाषाडिति ॥ प्रभञ्जनस्यापत्यं पुमान् प्राभञ्जनिः मारुतिः ॥ "अत इञ्" ॥ पृतनां सहत इति पृतनाषाडिन्द्रः ॥ "सहेः साढः सः" इति षत्वम् ॥ तद्द्विष इन्द्रजितः । अत्र "छन्दसि सहः" इति ण्विप्रत्ययस्य छन्दसि विधानात् पुरुहूतद्विष इति पाठं भिन्दन्ति । अन्ये तु 'तुरासाहं पुरोधाय' इत्यादि प्रयोगदर्शनाद्भाषायामपीच्छन्ति । यानस्य रथस्य धूर्षु युगाग्रेषु ॥ "आदेशप्रत्यययोः" इति षत्वम् ॥ युक्तान् बद्धान् वाजिनोऽश्वान् त्वक्षु चर्मसु । पूर्ववत् षत्वम् । निर्भिद्य विदार्य आयूंषि जीवितानि ॥ "नुम्विसर्जनीयस्य शर्व्यवायेऽपि" इति षत्वम् ॥ अमोचयदत्याजयत् ॥

सुषुपुस्ते यदा भूमौ रावणिः सारथिं तदा ।
आहर्त्तुमन्यानशिषत् प्रोषितत्रासकर्कशः ॥ ६८ ॥

६८. सुषुपुरिति ॥ ते वाजिनः यदा भूमौ सुषुपुः दीर्घं निद्द्रुः ॥ "आदेशप्रत्यययोः" इति षत्वम् ॥ तदा प्रोषितत्रासो निर्गतभयोऽत एव कर्कशः कठिनचित्तो रावणिरिन्द्रजित् अन्यानश्वानाहर्त्तुं सारथिमशिषत् आज्ञापयत् ॥ "शासिवसिघसीनां च" इत्युभयत्र षत्वम् ॥

प्रतुष्टूषुः पुनर्युद्धमासिषञ्जयिषुर्भयम् ।
आतस्थौ रथमात्मीयानुत्सिसाहयिषन्निव ॥ ६९ ॥

---

१ पृतनाषाड्द्विषो T., G., Com. Noticed also by E2.
२ युक्तानक्षस्य C., c., T1, T2, T3, T4.
३ पुनर्यानमा° T2, T4.
४ °मात्मीयमुत्सि° B.

६९. प्रतुष्टूषुरिति ॥ पुनः युद्धं प्रतुष्टूषुः प्रस्तोतुं प्रारब्धुमिच्छुः । स्तौतेः सन्नन्तादुप्रत्ययः ॥ "अज्झनगमां सनि" इति दीर्घः । भयमासिषञ्जयिषुः शत्रुचित्ते भयमासञ्जयितुमिच्छुः । सञ्जयतेः सन्नन्तादुप्रत्ययः ॥ "स्तौतिण्योरेव षण्यभ्यासात्" इति धातुसकारस्य षत्वम् ॥ आत्मीयानुत्सिसाहयिषन्नुत्साहयितुमिच्छन्निव । साहयतेः सन्नन्ताल्लटः शत्रादेशः ॥ "सः स्विदिस्वदिसहीनां च" इति धातुसकारस्य षत्वापवादिसकारः । रथमश्वान्तरयुक्तमातस्थौ आरुरोहेत्यर्थः ॥

बलान्यभिषिषिक्षन्तं तरुभिः कपिवारिदम् ।
विजिगीषुः पुनश्चक्रे व्यूहं दुर्जयमिन्द्रजित् ॥ ७० ॥

७०. बलानीति ॥ बलानि सैन्यानि तरुभिर्वृक्षैरभिषिषिक्षन्तमभिषेक्तुमिच्छन्तम् । अभिपूर्वात् सिञ्चतेः सन्नन्ताल्लटः शत्रादेशः ॥ "स्थादिष्वभ्यासेन चाभ्यासस्य" इति धात्वभ्याससकारयोः षत्वम् ॥ कपिमेव वारिदं विजिगीषुरिन्द्रजित् पुनर्व्यूहं बलानां चक्रगोमूत्रकादिसंस्थानविशेषं चक्रे निर्ममे ॥

अभिष्यन्तः[1] कपिं क्रोधादभ्यषिञ्चन्निवात्मनः[2] ।
संप्रहारसमुद्भूतै रक्तैः कोष्णैररुश्च्युतैः[3] ॥ ७१ ॥

७१. अभीति ॥ अभिष्यन्तमन्तयन्तं मारयन्तमित्यर्थः ॥ षोऽन्तकर्मणीत्यस्माद् दैवादिकाल्लटः शत्रादेशः ॥ "ओतः श्यनि" इत्योकारलोपः ॥ "उपसर्गात्सुनोति—" इत्यादिना षत्वम् ॥ कपिं मारुतिमात्मनः स्वस्य संप्रहारसमुद्भूतैः कपिकृतप्रहारजन्यैररुश्च्युतैः व्रणच्युतैः कोष्णैरीषदुष्णैः रक्तैः क्रोधादभिषुण्वन्निव तस्योपरि क्षिपन्निवेत्यर्थः । इन्द्रजिदिति पूर्वेण संबन्धः ॥ "उपसर्गात्सुनोति—" इत्यादिना षत्वम् । अभ्यषुण्वन्निवेति पाठान्तरे राक्षसा इति शेषः ॥ "प्राक्सितादड्व्यवायेऽपि" इति षत्वम् ॥

---

१ अभिष्यन्तं T₄, T., G., Com. | क्रोधादभिषिञ्चन्निवा॰ T₃.
२ क्रोधादभिषुण्वन्निवात्मनः T., G., Com. | ३ ॰ररुश्च्युतः E₃.

संग्रामे तानधिष्ठास्यन् निषद्य पुरतोरणम् ।
अविषीदन्नवष्टब्धान् व्यष्टभ्नान्नरविष्वणान् ॥ ७२ ॥

७२. संग्राम इति ॥ संग्रामे रणे अवष्टब्धानविदूरस्थान् ॥ "अवाच्चालम्बनाविदूर्ययोः" इति षत्वम् ॥ तान्नरविष्वणान्नरभोजनान् राक्षसान् । पचाद्यच् ॥ "वेश्च स्वनो भोजने" इति षत्वम् ॥ अविषीदन् अखिन्नः सन् निषद्य तोरणे स्थित्वैव ॥ "सदिरप्रतेः" इत्युभयत्रापि सदेः षत्वम् ॥ अधिष्ठास्यन्नाक्रमिष्यन् ॥ "उपसर्गात्सुनोति—" इत्यादिना षत्वम् ॥ पुरस्य तोरणं व्यष्टभ्नात् अधिष्ठितवान् ॥ "स्तन्भेः" इत्युपसर्गादुत्तरस्य स्तन्भेः सकारस्य षत्वम् ॥

विषह्य राक्षसाः क्रुद्धाः शस्त्रजालमवा[1]किरन् ।
यन्न व्यषे[2]हतेन्द्रोऽपि कपिः पर्यष[3]हिष्ट तत् ॥ ७३ ॥

७३. विषह्येति ॥ अथ राक्षसाः क्रुद्धाः सन्तो विषह्य कपिविग्रहं सोढ्वा ॥ "परिनिविभ्यः—" इत्यादिना सहेः षत्वम् ॥ शस्त्रजालमवाकिरन् व्यक्षिपन् । यच्छस्त्रजालमिन्द्रोऽपि न व्यषहत न विसोढवान् । सहेर्लङि तङ् । तच्छस्त्रजालं कपिः पर्यसहिष्ट परिसोढवान् । सहेर्लुङि तङि पूर्वसूत्रानुवृत्तौ "सिवादीनां वाड्व्यवायेऽपि" इति सहेः सकारस्य वा षत्वम् ॥

वि[4]ष्यन्दमानरुधिरो रक्तवि[5]स्यन्दपाटलान् ।
वि[6]ष्कन्तॄन् परिघे[7]णाहन्नविस्कर्न्ता[8] कपिर्द्विषः ॥ ७४ ॥

७४. निष्यन्दमानेति ॥ निष्यन्दमानरुधिरः क्षरद्रक्तः कपिः रक्तनिस्यन्देन रक्तस्रावेण पाटलान् । प्रहारसहः प्रहर्त्ता चेति भावः ॥ "अनु-

१ °मिवाकिरन् T2.
२ व्यसहते° c.
३ पर्यषाहिष्ट N., C., T1, T2, T3.
४ निष्यन्द° T., G., Com., c.
५ निष्यन्द D., T.
विष्यन्द B.
निस्यन्द E2, Com.
परिविष्यन्द T2.
६ विस्कन्तॄन् E3.
विष्कन्दान् E2.
विष्कभीन् B.
७ परितो हन्ता T4.
८ विष्कन्ता E2, D.

विपर्यभिनिभ्यः स्यन्दतेरप्राणिषु" इति वा षत्वम् ॥ विष्कन्तॄन् विष्कन्दनशीलांश्चञ्चलान् । स्कन्देस्ताच्छील्ये तृच् । द्विषः शत्रून् अविस्कन्ता स्वयमचञ्चलः सन् । पूर्ववत्तृच् । अर्दि हर्दि स्कन्दिमिति पाठादनिट्त्वम् ॥ "वेः स्कन्देरनिष्ठायाम्" इत्युभयत्र वा षत्वम् ॥ परिवेणाहन् जघान । हन्तेर्लङ् ॥

मेघनादः परिष्कन्दन् परिस्कन्दन्तमाश्वरिम् ।
अबध्नादपरिस्कन्दं ब्रह्मपाशेन विस्फुरन् ॥ ७५ ॥

७५. मेघनाद इति ॥ मेघनाद इन्द्रजित् परिष्कन्दन् परितो भ्रमन् परिष्कन्दन्तं परितो भ्रमन्तम् ॥ "परेश्च" इत्युभयत्र षत्वम् ॥ 'मेघनादः परिष्कन्ता परिष्कन्तारमाश्वरिम्' इति क्वचित्पाठः । अरिं शत्रुं कपिमपरिस्कन्दमश्लथं यथा तथा ॥ "परिस्कन्दः प्राच्यभरतेषु" इति षत्वाभावनिपातः ॥ ब्रह्मपाशेन ब्रह्मास्त्रेण विस्फुरन् दीप्यमानः ॥ "स्फुरतिस्फुलत्योर्निर्निविभ्यः" इति वा षत्वम् ॥ आशु अबध्नाद्बबन्ध ॥

विस्फुलद्भिर्गृहीतोऽसौ निष्फुलः पुरुषाशनैः ।
विष्कम्भितुं समर्थोऽपि नाचलद्ब्रह्मगौरवात् ॥ ७६ ॥

७६. विष्फुलद्भिरिति ॥ विष्फुलद्भिरुत्साहाद्बलद्भिः पुरुषाशनैः राक्षसैर्गृहीतः तथापि विष्फुलतीति विष्फुलः स्फुरन् । पचाद्यच् । संज्ञापूर्वको विधिरनित्य इति गुणाभावः ॥ "स्फुरतिस्फुलत्योः—" इत्यादिना षत्वम् ॥ असौ हनूमान् विष्कम्भितुं विचालितुम् ॥ "वेः स्कभ्नातेर्नित्यम्" इति षत्वम् ॥ समर्थोऽपि ब्रह्मवरादेव शक्तोऽपि ब्रह्मणो गौरवादलङ्घ्यत्वान्नाचलत् न चचाल । बद्ध एव स्थित इत्यर्थः ॥

---

१ परिस्कन्दन् N., D., E2, E3.
२ परिष्कन्दन्त° N., E2, E3, T., G., Com.
३ विस्फुरद्भि° C., B., E2.; विष्फुलद्भि° T., G., Com.
४ विष्फुलः T., G., Com. विस्फुरः E3. निष्फुलं D. निस्फुरः E2. निष्फलैः T2.
५ विष्कम्भितुं C.

कृषीढ्वं भर्त्तुरानन्दं मा न प्रोढ्वं द्रुतं वियत्[1]।
वानरं नेतुमित्युच्चैरिन्द्राजित्प्रावदत् स्वकान् ॥ ७७ ॥

७७. कृषीढ्वमिति ॥ हे भटाः भर्त्तुः स्वामिनो रावणस्यानन्दं कृषीढ्वं कुरुध्वम्। जयघोषयेति भावः। करोतेराशीर्लिङि सीयुट् ॥ "इणः षीध्वम्—" इत्यादिना षीध्वमो धकारस्य मूर्धन्यो ढकारः ॥ वानरं नेतुं रावणान्तिके प्रापयितुं वियदाकाशं प्रति द्रुतं न मा प्लोढ्वम्। किन्तु प्लवध्वमित्यर्थः। प्रतिषेधद्वयस्य प्रकृतार्थविधिपरत्वात्। प्लुङ् गताविति धातोर्लुङि तङि ध्वमि "धि च" इति सलोपे गुणः ॥ "इणः षीध्वम्—" इत्यादिनैव लुङ्धकारस्य मूर्धन्यो ढः। इत्युच्चैरिन्द्रजित्स्वकान् स्वकीयान्भटान् प्रावदत् ॥

गतमङ्गुलिषङ्गं[3] त्वां भीरुष्ठानादिहागतम्।
खादिष्याम इति प्रोचुर्नयन्तो मारुतिं द्विषः ॥ ७८ ॥

७८. गतमिति ॥ अङ्गुलिषु सङ्गो यस्य सोऽङ्गुलिषङ्गः ॥ "समासेऽङ्गुलेः सङ्गः" इति षत्वम् ॥ तस्य भावस्तत्त्वं गतं हस्तगतमित्यर्थः। भीरवो मनुष्याः तेषां स्थानात् भीरुष्ठानात् ॥ "भीरोः स्थानम्" इति षत्वम् ॥ इहागतं लङ्कां प्राप्तं मारुतिं नयन्तो रावणान्तिकं प्रापयन्तो द्विषो राक्षसाः खादिष्याम एनं भक्षयिष्याम इति प्रोचुः ॥

अग्निष्टोमादिसंस्थेषु ज्योतिष्टोमादिषु द्विजान्।
योऽरक्षीत्तस्य दूतोऽयं मानुषस्येति चावदन् ॥ ७९ ॥

७९. अग्निष्टोमेति ॥ अग्निष्टोमादयः संस्थाः प्रकाराः येषां तेषु अग्निष्टोमादिसंस्थेषु ॥ "अग्नेः स्तुत्स्तोमसोमाः" इति षत्वम् ॥ ज्योतिष्टोमादिषु क्रतुषु यो मानुषो द्विजान्विश्वामित्रादीन् अरक्षीत्तस्य मानुषस्य रामस्यायं दूत इति चावदन् ॥

---

१ मा नो प्रोढ्वं D.
मा न प्रोढ्वं T., G., Com.

२ वियद्द्रुतम् T2.

३ °षङ्गत्वं T., G., Com., D.

नासां मातृष्वसेय्याश्च रावणस्य लुलाव यः ।
मातुःस्वसुश्च तनयान् खरादीन् [1]निजघान यः ॥ ८० ॥

८०. नासामिति ॥ यो मानुषो रावणस्य मातृष्वसुरपत्यं स्त्री मातृष्वसेयी ॥ "मातृष्वसुश्च" इति ढगन्त्यलोपश्च ॥ "मातृपितृभ्यां स्वसा" इति षत्वम् ॥ तस्याः शूर्पणखाया नासां लुलाव चिच्छेद च । मातुःस्वसुर्मातृभगिन्याः ॥ "विभाषा स्वसृपत्योः" इति षष्ठ्या विकल्पादलुक् ॥ "मातुः पितुर्भ्यामन्यतरस्याम्" इति वैकल्पिकषत्वाभावः चस्त्वर्थो भिन्नक्रमः । तस्यास्तनयान् खरादींस्तु जघान च ॥

प्रादुःषन्ति न संत्रासा यस्य [2]रक्षःसमागमे ।
[3]तस्य क्षत्रियदुःषूतेरयं प्रणिधिरागतः ॥ ८१ ॥

८१. प्रादुरिति ॥ किं च यस्य मनुष्यस्य राक्षसानां समागमे संप्रहारे संत्रासाः भयानि न प्रादुःषन्ति न प्रादुर्भवन्ति ॥ "उपसर्गप्रादुर्भ्यामस्तिर्यच्परः" इति अस्तिसकारस्य षत्वम् ॥ क्षत्रियदुःषूतेः क्षत्रियदुःसन्तानस्य । सूयतेः कर्मणि स्त्रियां क्तिन् ॥ "सुविनिर्दुर्भ्यः सुपिसूतिसमाः" इति षत्वम् ॥ तस्य मानुषस्यायं प्रणिधिश्चार आगतः । 'यथार्हवर्णप्रणिधिरपसर्पश्चरः स्पशः' इत्यमरः ॥

दृष्ट्वा सुषुप्तं राजेन्द्रं [5]पापोऽयं विषमाशयः ।
चारकर्मणि निष्णातः [4]प्रविष्टः प्रमदावनम् ॥ ८२ ॥

८२. दृष्ट्वेति ॥ चारकर्मणि निष्णातः कुशलः ॥ "निनदीभ्यां स्नातेः कौशले" इति षत्वम् ॥ विषमाशयः कपटचित्तोऽत एव पापः क्रूरकर्मायं वानरो राजेन्द्रं रावणं सुषुप्तं सुष्ठु सुप्तम् ॥ "सुविनिर्दुर्भ्यः—" इत्यादिना सुप्तसमयोः षत्वम् ॥ दृष्ट्वा ज्ञात्वा प्रमदावनं प्रविष्टः ॥

---

१ विजघान N., C., $T_1$, $E_2$.
२ रक्षांसि चापरे $E_3$.
३ तत्र $T_3$.
४ प्रविष्टः प्रमदावनम् D.
५ पापोऽयं विषमाशयः D.

सुप्रतिष्णातसूत्राणां कापिष्ठलसमत्विषाम् ।
स्थितां वृत्ते द्विजातीनां रात्रावैक्षत मैथिलीम् ॥ ८३ ॥

८३. स्विति ॥ सुष्ठु प्रतिष्णातं शुद्धं सूत्रं येषां तेषां सूत्रकृताम् ॥ "सूत्रं प्रतिष्णातम्" इति षत्वम् ॥ कपिष्ठलो नाम गोत्रप्रवर्त्तकः कश्चिदृषिः ॥ "कपिष्ठलो गोत्रे" इति निपातनात् षत्वम् ॥ तेन समत्विषां समानतेजसां द्विजातीनां ब्राह्मणानां वृत्ते स्थितां तथापवित्रचरित्रामित्यर्थः । मैथिलीं सीतां रात्रावैक्षत अद्राक्षीत् ॥

सर्वनारीगुणैः प्रष्ठां विष्टरस्थां गविष्ठिराम् ।
शयानां कुष्ठले तारां दिविष्ठामिव निर्मलाम् ॥ ८४ ॥

८४. श्लोकचतुष्टयेन मैथिलीं विशिनष्टि ॥ सर्वेति ॥ सर्वैः नारीगुणैः प्रतिष्ठत इति प्रष्ठां स्त्रीणामग्रगामिनीमुत्तमामित्यर्थः ॥ "आतश्चोपसर्गे" इति कप्रत्ययः ॥ "प्रष्ठोऽग्रगामिनि" इति षत्वनिपातः ॥ विष्टरस्थां पवित्रासनस्थाम् ॥ "वृक्षासनयोर्विष्टरः" इति षत्वनिपातः ॥ गवि वाचि स्थिरां गविष्ठिरां सत्यवाचमित्यर्थः ॥ "गवियुधिभ्यां स्थिरः" इति षत्वम् । एतस्मादेव निपातनात्सप्तम्या अलुक् । कुष्ठले भूतले ॥ "विकुशमिपरिभ्यः स्थलम्" इति षत्वम् ॥ शयानां दिवि तिष्ठतीति दिविष्ठां खस्थाम् ॥ "अम्बाम्ब—" इत्यादिना षत्वम् ॥ अत्र दिवीति निर्देशादलुक् । निर्मलां तारामिव स्थिताम् ॥

सुषाम्नीं सर्वतेजःसु तन्वीं ज्योतिष्टमां शुभाम् ।
निष्टपन्तीमिवात्मानं ज्योतिःसात्कुर्वतीं वनम् ॥ ८५ ॥

८५. सुषाम्नीति ॥ शोभनं साम सान्त्वं यस्यास्तां सुषाम्नीम् ॥ "अन उपधालोपिनोऽन्यतरस्याम्" इति ङीपि "सुषामादिषु च" इति षत्वम् ॥ सर्वतेजःसु सर्वतेजसां मध्ये ज्योतिष्टमामुत्कृष्टतेजोभूताम् ॥ "ह्रस्वात्तादौ तद्धिते" इति षत्वम् ॥ तन्वीं कृशां शुभां कल्याणीमात्मानं शरीरं निष्टपन्तीमिव तपोऽग्नौ संतापयन्तीमिव स्थिताम् ॥ "निसस्त-

१ गणैः T4.

एतावनासेवने" इति षत्वम् ॥ वनं ज्योतिःसात् कार्त्स्न्येन ज्योतिर्मयं कुर्वतीम् ॥ "विभाषा साति कार्त्स्न्ये" इति सातिप्रत्ययः ॥ "नुम्विसर्जनीय—" इत्यादिना षत्वे प्राप्ते "सात्पदाद्योः" इति षत्वनिषेधः ॥

मधुसाद्भूतकिञ्जल्कपिञ्जैरभ्रमराकुलाम् ।
उल्लसत्कुसुमां पुण्यां हेमरत्नलतामिव ॥ ८६ ॥

८६. मधुसादिति ॥ मधुसाद्भूताः कार्त्स्न्येन मधुभूताः मकरन्दप्रचुरा इत्यर्थः । पूर्ववत्कार्त्स्न्ये सातिप्रत्यये "आदेशप्रत्यययोः" इति षत्वे प्राप्ते पूर्ववत्प्रतिषेधः । तैः किञ्जल्कैः पिञ्जरैः भ्रमरैराकुलामुल्लसत्कुसुमां पुण्यां पवित्रां हेमरत्नलतां रत्नखचितहेममयकल्पवल्लीमिव स्थिताम् ॥

विलोचनाम्बु मुञ्चन्तीं कुर्वाणां परिसेसिचाम् ।
हृदयस्येव शोकाग्निसंतप्तस्योत्तमव्रताम् ॥ ८७ ॥

८७. विलोचनेति ॥ विलोचनाम्बु बाष्पं सिञ्चन्तीं क्षरन्तीम् । पदादित्वात् "सात्पदाद्योः" इत्यादेशसकारस्य षत्वप्रतिषेधः । अत एव शोकाग्निसन्तप्तस्य हृदयस्य परिसेसिचां परितः पौनःपुन्येन सेचनं कुर्वाणामिव स्थिताम् । सिञ्चतेर्यङन्तात्स्त्रियामप्रत्यये टाप् ॥ "उपसर्गात्सुनोति" इत्यादिना षत्वे प्राप्ते "सिचो यङि" इति प्रतिषेधः ॥ उत्तमव्रतां पतिव्रतामित्यर्थः मैथिलीमैक्षतेति पूर्वेणान्वयः ॥

दृष्ट्वा तामभनग् वृक्षान् द्विषो घ्नन् परिसेधतः ।
परितस्तान् विचिक्षेप क्रुद्धः स्वयमिवानिलः ॥ ८८ ॥

८८. दृष्ट्वेति ॥ तां सीतां दृष्ट्वा परिसेधतः परित आधावतः । षिधु गत्यामिति धातोः "सेधतेर्गतौ" इति षत्वप्रतिषेधः ॥ द्विषो राक्षसान् घ्नन्

१ पिङ्गल° D., T2, T4.
२ °त्कुङ्कुमां T3.
३ सिञ्चन्तीं T.,G., Com., T2, T4.
४ परितश्चापि चिक्षेप T3.
परितश्चोद्विचिक्षेप T4, T., G., Com.
५ °वानलः T2.

वृक्षानभनक् बभञ्ज। भञ्जेर्लङि तिलोपः कुत्वम्। स्वयं साक्षात् क्रुद्धोऽनिलो वायुरिव परित उद्विचिक्षेप च उद्विक्षिप्तवांश्च॥

अप्रतिस्तब्धविक्रान्तमनि¹स्तब्धो महाहवे।
वि²सोढवन्तमस्त्राणि व्यतस्तम्भद् घनध्वनिः॥ ८९॥

८९. अप्रतीति॥ घनध्वनिर्मेघनादो महाहवे अनिस्तब्धोऽप्रतिबन्धः सन्। अप्रतिस्तब्धविक्रान्तमप्रतिबन्धविक्रमम्॥ "प्रतिस्तब्धनिस्तब्धौ च" इति स्तम्भेः षत्वाभावनिपातः। अस्त्राणि निसोढवन्तम्॥ "परिनिविभ्यः—" इत्यादिना षत्वे प्राप्ते "सोढः" इति प्रतिषेधः॥ मारुतिं व्यतस्तम्भत् स्तम्भयति स्म। स्तम्भेर्णौ चङि "स्तम्भुसिवुसहां चङि" इति षत्वप्रतिषेधः॥

तेऽभि³ज्ञायाभि⁴सोष्यन्तं रक्तै रक्षांसि सव्यथाः।
अन्यैरप्यौ⁵यतं मे⁶बुर्वरत्राशृङ्खलादिभिः॥ ९०॥

९०. त इति॥ ते राक्षसाः रक्षांसि रक्तैरस्त्रैर्निसोष्यन्तं प्लावयिष्यन्तम्॥ "सुनोतेः स्यसनोः" इति षत्वप्रतिषेधः॥ अभिज्ञाय तत्काले व्यपचिकीर्षुं बुद्ध्वेत्यर्थः। सव्यथाः सभयाः सन्तः। अन्यैरप्यायतैर्द्राघिष्ठैर्वरत्राशृङ्खलादिभिः मेबुः बबन्धुः। मव बन्धन इत्यस्माल्लिट्॥ "अत एकहल्—" इत्यादिना एत्वाभ्यासलोपौ॥

विषसादेन्द्रजिद्बुद्ध्वा बन्धे⁷ बन्धान्तरक्रियाम्।
दिव्यबन्धो विषहते ना⁸परं बे⁹न्धनं यतः॥ ९१॥

९१. विषसादेति॥ इन्द्रजित् बद्धे दिव्यास्त्रबद्धे बन्धान्तरक्रियां बन्धान्तरकरणं बुद्ध्वा विषसाद॥ "सदेः परस्य लिटि" इति परस्य षत्व-

१ °मविस्तब्धो B.
२ निसोढ T₂, T., G., Com.
३ ते विज्ञाय° N., C., E₂, T₁, T₂, T₃, T₄.
४ °य निसोष्यन्तं T., G., Com.
५ °प्यायतैर्मे° T., G., Com., T₃.
६ मेहुः N., D., B.
७ बद्धे T., G., Com.
८ परं संयममायनः T₄.
९ संयमं T₃, c., D.

प्रतिषेधः । पूर्वस्य तु "सदिरप्रतेः" इति षत्वम् ॥ यतो यस्माद् दिव्यबन्धोऽपरनियमं नियन्त्रणं बन्धान्तरं न विषहते ॥ "परिनिविभ्यः—" इत्यादिना सहेः षत्वम् ॥

## अथ णत्वाधिकारः ॥

मुष्णन्तमिव तेजांसि विस्तीर्णोरस्थलं पुरः[1] ।
उपसेदुर्दशग्रीवं गृहीत्वा राक्षसाः कपिम् ॥ ९२ ॥

९२. मुष्णन्तमिति ॥ अथ राक्षसाः कपिं पुरोऽग्रे गृहीत्वा तेजांसि सूर्यादीनां मुष्णन्तं हरन्तमिवेत्युत्प्रेक्षा । विस्तीर्णोरस्थलम् ॥ "रषाभ्यां नो णः समानपदे" इत्युभयत्र णत्वम् ॥ दशग्रीवमुपसेदुरासेदुः ॥

बहुधा भिन्नमर्माणो[2] भीमाः खरणसादयः[3] ।
अग्रेर्वणं[4] वर्त्तमाने प्रतीच्यां चन्द्रमण्डले ॥ ९३ ॥

९३. अथ युग्मेनाह बहुधेति ॥ चन्द्रमण्डले प्रतीच्यां पश्चिमदिशि अग्रे वनस्य अग्रेवणं वनाग्रे । राजदन्तादित्वात्परनिपातः ॥ "वनं पुरगा—" इत्यादिना णत्वम् । सूत्रनिर्देशादलुक् ॥ वर्त्तमाने सति प्रभाते सतीत्यर्थः । बहुधा भिन्नमर्माणो विदारितमर्मस्थलाः ॥ "अट्कुपु—" इत्यादिना णत्वम् ॥ भीमाः भयंकराः खरस्येव नासिका येषां ते खरणसाः ॥ "अच् नासिकायाः संज्ञायां नसं चास्थूलात्" इति बहुव्रीहिसमासान्तोऽच्प्रत्ययो नसादेशश्च ॥ "पूर्वपदात्संज्ञायामगः" इति णत्वम् ॥ तदादयः द्विष इत्युत्तरेण संबन्धः ॥

निर्वणं[5] कृतमुद्यानमनेनाम्रवणादिभिः ।
देवदारुवनामिश्रैरित्यूचुर्वानरं[6] द्विषः ॥ ९४ ॥

९४. निर्वाणमिति ॥ द्विषः पूर्वोक्तविशेषणाः राक्षसाः देवदारुवनैरामिश्रैर्मिलितैः ॥ "विभाषौषधिवनस्पतिभ्यः" इत्यत्र "द्व्यक्षरत्र्यक्षरेभ्य

१ वपुः c.
२ भिन्नकर्माणो $T_3$.
३ खरनसा° c., $E_3$.
४ अग्रेरणं c.
५ निर्वाणं T., G., Com.
६ वानरं द्विषः T., G., Com.

इति वक्तव्यम्" इति नियमादिह चतुरक्षरात् वननकारस्य णत्वाभावः। आम्रवणादिभिरुपलक्षितम् ॥ "प्रनिरन्तर्—" इत्यादिना वननकारस्य णत्वम् । उद्यानमनेन वानरेण निर्वाणं प्रशान्तं लुप्तमिति यावत् । निःपूर्वाद्वातेः कर्त्तरि क्तः ॥ "निर्वाणोऽवाते" इति निपातनान्निष्ठानत्वे णत्वम् ॥ कृतमिति वानरमूचुः । अपराधित्वेनावोचन्नित्यर्थः ॥

उपास्थिषत संप्रीताः पूर्वाह्णे रोषवाहणम् ।
राक्षसाः[1] कपिमादाय पतिं रुधिरपायिणाम् ॥ ९५ ॥

९५. उपेति ॥ अथ पूर्वाह्णे प्रभाते ॥ "अह्नोऽह्न एतेभ्यः" इत्यह्नादेशे "अह्नोऽदन्तात्" इति णत्वम् ॥ संप्रीताः राक्षसाः कपिमादाय रोषस्य वाहनं रोषवाहणं रोषाश्रयमतिरुष्टमित्यर्थः ॥ "वाहनमाहितात्" इति णत्वम् ॥ रुधिरपायिणां रक्तपायिनां राक्षसानाम् । पिबतेस्ताच्छील्ये णिनिः ॥ "प्रातिपदिकान्तनुम्विभक्तिषु च" इति णत्वम् ॥ पतिं रावणमुपास्थिषतोपस्थिताः तेन संगता इत्यर्थः । उपपूर्वात्तिष्ठतेर्लुङि "उपाद्देवपूजा—" इत्यादिना संगतकरणे तङ् ॥

सुरापाण[2]परिक्षीवं रिपुदर्पहरोदयम् ।
परस्त्रीवाहिणं[3] प्रापुः साविष्कारं[4] सुरापिणः[5] ॥ ९६ ॥

९६. सुरेति ॥ सुरां पिबन्तीति सुरापाः ॥ "गापोष्टक्" इति टक् ॥ तद्वन्तः सुरापिणः तत्संसर्गिणो राक्षसाः । मत्वर्थीय इनि प्रत्ययः ॥ "एकाजुत्तरपदे णः" इति णत्वम् ॥ सुरापाणमिति भावे ल्युट् ॥ "वा भावकरणयोः" इति पक्षे णत्वम् ॥ तेन पर्याप्तं क्षीबो मत्तः परिक्षीबः तम् । क्षीबृ मद इति धातोः "अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः" इति निष्ठातकारस्य लोपनिपातः । अनुपसर्गादिति विशेषणादुप-

---

१ $E_2$, has असृक्पाणाधिपं तूर्णं कपिमादाय राक्षसाः as the 2nd half.

२ °पान C.

३ °वाहिनं N., $T_4$, B., $E_2$, $E_3$.

४ साविष्काराः C., $E_2$, B, $T_1$, $T_2$, $T_3$, $T_4$.

५ सुरापिणम् $E_2$.

सर्गस्य क्षीबेन समासो नोपसृष्टाल्लोपनिपातः । रिपुदर्पहरः उदयो वृद्धिर्यस्य तं परश्रियो वहति प्राप्नोतीति तद्वाहिणम् । प्रातिपदिकान्तमकारत्वात् "प्रातिपदिक—" इत्यादिना णत्वम् । साविष्कारं सान्निभाविमास्थाने प्रकाशमानं रावणं प्रापुः ॥

संघर्षयोगिणः पादौ प्रणेमुस्त्रिदशद्विषः ।
प्रहिण्वन्तो हनूमन्तं प्रमीणन्तं द्विषन्मतीः ॥ ९७ ॥

९७. संघर्षेति ॥ द्विषन्मतीः शत्रुबुद्धीः प्रमीणन्तं हिंसन्तं हरन्तमित्यर्थः । मीञ् हिंसायामिति धातोः क्रैयादिकाल्लटः शत्रादेशः । हनूमन्तं प्रहिण्वन्तः प्रापयन्तः । हि गताविति धातोः सौवादिकाल्लटः शत्रादेशः ॥ "हिनुमीना" इत्युभयत्र णत्वम् ॥ ते राक्षसाः संघर्षयोगिणः स्पर्धायोगिनो नित्यमत्सरिण इत्यर्थः ॥ "कुमति च" इति णत्वम् ॥ त्रिदशद्विषो रावणस्य पादौ प्रणेमुः प्रणताः ॥ "उपसर्गादसमासेऽपि णोपदेशस्य" इति णत्वम् ॥

प्रवपाणि शिरो भूमौ वानरस्य वनाच्छिदः ।
आमन्त्रयत संक्रुद्धः समितिं रक्षसां पतिः ॥ ९८ ॥

९८. प्रेति ॥ संक्रुद्धः रक्षसां पतिः रावणो वनच्छिदो वानरस्य शिरो भूमौ प्रवपाणि छित्त्वा भूमौ खनिष्यामि ॥ "आनि लोट्" इति नित्यं णत्वम् ॥ इति समितिं सभामामन्त्रयत अपृच्छत् ॥

प्रण्यगादीत् प्रणिघ्नन्तं घनैः प्रणिनदन्निव ।
ततः प्रणिहितैः स्वार्थे राक्षसेन्द्रं विभीषणः ॥ ९९ ॥

९९. प्रणीति ॥ तत आमन्त्रणानन्तरं पुनः प्रणिघ्नन्तं जिघांसन्तमित्यर्थः राक्षसेन्द्रं रावणं स्वार्थे स्वकार्ये प्रणिहितो युक्तो विभीषणः प्रणिनदन्निव गर्जन्निव प्रण्यगादीत् प्राणिगदितवान् ॥ "नेर्गदनद—" इत्यादिना सर्वत्र णत्वम् ॥

---

१ संहर्ष C., D., E2, E3, C., T1., T2, T3.
२ द्विषां मतीः T2, T3.
३ घनं D. पुनः T., G., Com.
४ प्रणिहितां वाचं D.

प्रणिशाम्य दशग्रीव प्रणियातुमलं रुषम् ।
प्रणिजानीहि हन्यन्ते दूता दोषे न सत्यपि ॥ १०० ॥

१००. प्रणिशाम्येति ॥ हे दशग्रीव प्रणिशाम्य प्रशान्तो भव । शाम्यतेर्लोट् । सिपि हिलोपः ॥ "शमामष्टानां दीर्घः श्यनि" इति दीर्घः ॥ रुषं प्रणियातुं प्राप्तुमलं रोषो न कर्त्तव्य इत्यर्थः ॥ "अलंखल्वोः—" इत्यादिना क्त्वाप्रत्ययविषये तुमुन्प्रयोगो देशविभाषानुसारात्कृतः कष्टः । दोषेऽपराधे सत्यपि दूता न हन्यन्त इति प्रणिजानीहि विद्धि ॥ "शेषे विभाषाकखादौ—" इत्यादिना नेर्णत्वम् ॥ अन्यत्र "नेर्गद-नद—" इत्यादिनैव ॥

प्राणयन्तमरिं[1] मोचे राक्षसेन्द्रो विभीषणम् ।
प्राणिणिषुर्न[2] पापोऽयं योऽभाङ्क्षीत्प्रमदावनम् ॥ १०१ ॥

१०१. प्राणयन्तमिति ॥ राक्षसेन्द्रो रावणः हरिं हनूमन्तं प्राणयन्तं जीवयन्तं दूतो न वध्य इति रक्षन्तमित्यर्थः । अन प्राणन इति धातोर्ण्यन्ताल्लटः शत्रादेशः ॥ "अनितेः" इति णत्वम् ॥ विभीषणं प्रोचे । यः प्रमदावनमभाङ्क्षीद्बभञ्ज । भञ्जेर्लुङि सिचि हलन्तलक्षणा वृद्धिः । सोऽयं कपिः प्राणिणिषुः प्राणितुं जीवितुमिच्छुः । न वा नैवेत्यर्थः । एवंविधापराधी कथं न वध्य इति भावः । अनितेः सन्नन्तादुप्रत्ययः ॥ "उभौ साभ्यासस्य" इति द्वयोर्णत्वम् ॥

प्राघानिषत[3] रक्षांसि येनाप्तानि वने[4] मम ।
न प्रहण्मः[5] कथं पापं[6] वद पूर्वापकारिणम् १०२ ॥

१०२. प्रेति ॥ किं च येनैतेन वने ममाप्तानि हितकारीणि रक्षांस्यघानिषत हतानि । हन्तेः कर्मणि लुङि चिण्वदिड्वृद्धी ॥ "हो हन्तेः—"

---

१ यन्तं हरिं T., G., Com.
२ न वा सोऽयं प्राणिणिषुर्योऽभा॰ T., G., Com.
३ प्रहण्यन्ते स्म C.
४ रणे C.
५ प्रहन्मः E2, E3, B.
६ पापं T., G., Com.

इत्यादिना कुत्वम् ॥ "हन्तेरत्पूर्वस्य" इत्यस्य प्रत्युदाहरणम् ॥ पूर्वापकारिणं प्रथमद्रोहिणं पापं क्रूरात्मानं कथं न प्रहण्मः वद कथय ॥ "वमोर्वा" इति हन्तेर्णत्वविकल्पः ॥

वेश्मान्तर्हणनं कोपान्मम शत्रोः करिष्यतः ।
मा कार्षीरन्तरयणं[1] प्रयाणार्हमवेह्यमुम् ॥ १०३ ॥

१०३. वेश्मेति ॥ कोपाच्छत्रोः वेश्मान्तर्हणनं गृहाभ्यन्तरे हननम् ॥ "अन्तरदेशे" इति णत्वम् ॥ करिष्यतो ममान्तरयणमन्तरायम् ॥ "अयनं च" इति णत्वम् ॥ मा कार्षीः । अमुं कपिं प्रयाणं दीर्घयात्रा ॥ "कृत्यचः" इति णत्वम् ॥ तदर्हं वध्यमवेहि ॥

प्रहीणजीवितं कुर्युर्ये न शत्रुमुपस्थितम् ।
न्याय्याया[2] अपि ते लक्ष्म्याः कुर्वन्त्याशु प्रहापणम् ॥ १०४ ॥

१०४. प्रहीणेति ॥ ये उपस्थितं प्राप्तं शत्रुं प्रहीणजीवितं त्यक्तजीवितम् । जहातेः कर्मणि क्तः ॥ "घुमास्था—" इत्यादिना ईकारः ॥ "ओदितश्च" इति निष्ठानत्वम् ॥ "कृत्यचः" इति णत्वम् ॥ न कुर्युः ते न्याय्यायाः न्यायादनपेतायाः कुलागताया अपीत्यर्थः ॥ "धर्मपथ्यर्थ—" इत्यादिना यत्प्रत्ययः ॥ लक्ष्म्याः आशु प्रहापणं त्याजनं कुर्वन्ति । जहातेर्ण्यन्ताल्ल्युटि पुगागमः ॥ "णेर्विभाषा" इति णत्वम् ॥

कः कृत्वा रावणामर्षप्रकोपणमवद्यधीः[3] ।
शक्तो जगति शक्रोऽपि कर्त्तुमायुःप्रगोपणम्[4] ॥ १०५ ॥

१०५. क इति ॥ जगति अवद्यधीर्दुर्बुद्धिः कः शक्रोऽपि रावणस्यामर्षप्रकोपणं कृत्वा आयुषः प्रगोपणं प्रकृष्टं गोपनं रक्षणं कर्त्तुं शक्तः । न कोऽपीत्यर्थः । कुपिगुप्योर्भावे ल्युट् ॥ "हलश्चेजुपधात्" इति णत्वम् ॥

---

१ °रयनं C.
२ न्याय्या अपि च ते° T₃, T₄.
३ प्रकोपन C., E₃.
४ आयुष्म° C.
°प्रगोपनम् E₂, E₃.

वनान्तप्रेङ्खणः[1] पापः फलानां परिणिंसकः[2] ।
प्रणिक्षिष्यति नो भूयः प्रणिन्द्यास्मान्मधून्ययम्[3] ॥ १०६ ॥

१०६. वनान्तेति ॥ वनान्ते वनप्रान्ते प्रेङ्खति चरतीति प्रेङ्खणः । कर्त्तरि ल्युट् ॥ "इजादेः सनुमः" इति णत्वम् ॥ पापः क्रूरः फलानां परिणिंसकश्चुम्बको भक्षक इत्यर्थः । णिसि चुम्बन इति धातोर्ण्वुल् । अयं कपिर्भूयोऽस्मान्प्रणिन्द्य परिभूय मधूनि मकरन्दान्नो प्रणिक्षिष्यति न चुम्बिष्यति न भक्षयिष्यतीत्यर्थः । णिक्ष चुम्बने लृट् । भूयो भक्षणवारणाय सर्वथायं मारणीय इत्यर्थः ॥ "वा निंसनिक्षनिन्दाम्" इति सर्वत्र णत्वम् ॥

हरेः प्रगमनं नास्ति न[4] प्रभानं हिमद्रुहः ।
नातिप्रवेपनं[5] वायोर्मया गोपायिते वने ॥ १०७ ॥

१०७. हरेरिति ॥ मया गोपायिते गुप्ते ॥ "आयादय आर्धधातुके वा" इति विकल्पादायप्रत्ययः ॥ वने प्रमदावने हरेरिन्द्रस्यापि प्रगमनं प्रचारो नास्ति । हिमद्रुहः सूर्यस्य प्रभानं प्रतापनं नास्ति । भातेर्भावे ल्युट् । वायोरतिप्रवेपनमत्यन्तचलनं नास्ति । किमुतान्येषामित्यर्थः ॥ "न भाभूपूकमिगमिप्यायिवेपाम्" इति सर्वत्र णत्वप्रतिषेधः ॥

दुष्पानः पुनरेतेन कपिना भृङ्गसम्भृतः ।
प्रनष्टविनयेनाग्र्यः[7][8] स्वादुः पुष्पासवो वने ॥ १०८ ॥

१०८. दुष्पान इति ॥ प्रनष्टविनयेन दुर्विनीतेन ॥ "नशेः षान्तस्य" इति णत्वप्रतिषेधः ॥ एतेन कपिना कर्त्रा वने भृङ्गसंभृतो भ्रमरसञ्चितोऽग्र्यः श्रेष्ठः स्वादुर्मधुरः पुष्पासवस्तद्विकारः क्षौद्रमित्यर्थः पुनर्भूयो दुःखेन पेयो दुष्पानः न पातव्य इत्यर्थः । खलर्थे आतो युच् ॥ "षात्पदान्तात्" इति णत्वप्रतिषेधः ॥

---

१ प्रेङ्खनः B.
२ परिनिंसकः D.
३ मधून्स्वयम् B.
४ प्रभानं न C.
५ प्रतानं B.
६ °वेपणं C.
७ प्रणष्ट B.
८ विजयेनासौ T₄.

रोषभीममुखेनैवं क्षुभ्नतोक्ते प्लवङ्गमः ।
प्रोचे सानुनयं वाक्यं रावणं स्वार्थसिद्धये ॥ १०९ ॥

१०९. रोषेति ॥ रोषाद्भीममुखेन । अत्र भीमपदेन निमित्तनिमित्ति-नोर्व्यवायात् "पदव्यवायेऽपि" इति विभक्तिनकारस्य णत्वप्रतिषेधः । क्षुभ्नता क्षुभ्यता ॥ "क्षुभ्नादिषु च" इति णत्वप्रतिषेधः ॥ रावणेनैव-मुक्ते प्लवङ्गमो हनूमान् स्वार्थसिद्धये सीताप्रत्यर्पणकार्यसिद्धये रावणं सानुनयमनुनययुक्तं वाक्यमूचे ॥

## पुनः प्रकीर्णकाः ।

दूतमेकं कपिं बद्धमानीतं वेश्म पश्यतः[१] ।
लोकत्रयपतेः क्रोधः कथं तृणलघुस्तव[२] ॥ ११० ॥

११०. दूतमिति ॥ दूतं संध्यादिकार्यकरं न तु साक्षात्प्रतिपक्षमवध्य-मित्यर्थः । एकमसहायं तत्रापि बद्धं वेश्म स्वगृहमानीतं तत्रापि कपिं पश्यतः सर्वं साक्षात्कुर्वत इत्यर्थः लोकत्रयपतेः परमाणुपर्वतयोरिवा-वयोर्महदन्तरमिति भावः । ईदृशस्य तव क्रोधः कथं तृणलघुः तद्व-त्तुच्छः अस्थानप्रवृत्तेरित्यर्थः ॥

अग्न्याहितजनप्रह्वे विजिगीषापराङ्मुखे ।
कस्माद्वा नीतितीक्ष्णस्य[३] संरम्भस्तव तापसे ॥ १११ ॥

१११. अग्नीति ॥ अग्न्याहिता आहिताग्नयः ॥ "वाहिताग्न्यादिषु" इति निष्ठायाः परनिपातः ॥ तेषु जनेषु सज्जनेषु प्रह्वे नम्रे विजिगीषापराङ्-मुखे विरक्ते तापसे तपस्विनि ॥ "अण्च" इति मत्वर्थीयोऽण्प्रत्ययः ॥ ईदृशे रामे नीतौ नितरां स्नातीति निष्णः कुशलः ॥ "आतश्चोपसर्गे" इति कर्त्तरि कः ॥ "निनदीभ्याम्—" इत्यादिना षत्वम् ॥ तस्य तव कस्मात्कारणात् संरम्भः क्रोधः । अकारणवैरमनुचितमिति भावः ॥

---

१ पश्य माम् $T_4$.
२ बहुतृणं तव $T_2$, $T_4$.
३ नीतिनिष्णस्य N., C., $T_1$, $T_3$, T., G., Com. नीतिविज्ञस्य B.

न सर्वरात्रकल्याण्यः[1] स्त्रियो नो[2] रत्नभूमयः ।
यं विनिर्जित्य लभ्यन्ते कः कुर्यात्तेन विग्रहम् ॥ ११२ ॥

११२. नेति ॥ किं च यं तापसं विनिर्जित्य सर्वा रात्रयः सर्वरात्राः ॥ "पूर्वकालैकसर्व—" इत्यादिना समासः ॥ "अहःसर्वैकदेश—" इत्यादिना समासान्तोऽच्प्रत्ययः ॥ "रात्राह्नाहाः पुंसि" इति पुल्लिङ्गता ॥ तान् कल्याण्यः सर्वरात्रकल्याण्यः नित्यमङ्गला इत्यर्थः ॥ अत्यन्तसंयोगे द्वितीया ॥ "अत्यन्तसंयोगे च" इति समासः ॥ ङीप् । ताः स्त्रियो न लभ्यन्ते रत्नानि भूमयश्च ता अपि न लभ्यन्ते तेन तापसेन विग्रहं कः कुर्यात् । न कोऽपि निष्फलत्वादित्यर्थः ॥

सङ्गच्छ रामसुग्रीवौ भुवनस्य समृद्धये ।
रत्नपूर्णाविवाम्भोधी हिमवान् पूर्वपश्चिमौ ॥ ११३ ॥

११३. संधिस्तु सफल इत्याह ॥ संगच्छेति ॥ भुवनस्य समृद्धये अभ्युदयाय रामसुग्रीवौ रत्नपूर्णौ पूर्वपश्चिमावम्भोधी हिमवानिव संगच्छ संधेहि । न लोकान्पीडयेत्यर्थः ॥

सुहृदौ रामसुग्रीवौ किङ्कराः कपियूथपाः ।
परदारार्पणेनैव लभ्यन्ते मुञ्च मैथिलीम् ॥ ११४ ॥

११४. ननु यद्विग्रहो निष्फलस्तत्संधानेऽपि किं फलं तत्राह ॥ सुहृदाविति ॥ रामसुग्रीवौ सुहृदौ मित्रे कपियूथपाः किङ्कराः ते च परदाराणामर्पणेनैव लभ्यन्ते न तु स्वार्थव्ययेनेत्यर्थः । हिरण्यभूमीलब्धेर्मित्रलब्धिर्वरायत इति भावः ॥ अतो मैथिलीं मुञ्च ॥

धर्मं प्रसर्पयन्[3] सीतामर्थं रामेण मित्रताम् ।
कामं विश्वासवासेन सीतां दत्त्वाप्नुहि त्रयम् ॥ ११५ ॥

---

१ कल्याणं T4.
२ वा N., C., D., T1, T., G., Com.
३ शक्तोऽपि किं कु° T4.

११५. नन्वकिंचित्करेण मैत्री कुत्रोपयुज्यते तत्राह। धर्ममिति॥ सीतां प्रत्यर्पयन् धर्मं परस्त्रीपरिहाररूपं रामेण सह मित्रतामेवार्थं विश्वासवासेन विश्रम्भवासेन कामं रतिसुखं चेति त्रयं त्रिवर्गं सीतां दत्त्वा आप्नुहि॥

विराधताडकावालिकबन्धखरदूषणैः।
न च ने ज्ञापितो यादृङ् मारीचेनापि ते रिपुः॥ ११६॥

११६. सीतानर्पणे रामः किं कर्तुं शक्त इत्याह॥ विराधेति॥ विराधादिभिः मारीचेनापि रिपुः रामो यादृक् यादृक्प्रभावो वा न ज्ञापित इति च न। किं तु ज्ञापित एवेत्यर्थः। सीतानर्पणे विराधादिगतिं गमिष्यसीति भावः॥

खरादिनिधनं चापि मा मंस्था वैरकारणम्।
आत्मानं रक्षितुं यस्मात् कृतं तन्न जिगीषया॥ ११७॥

११७. नन्वकारणमेव मद्बन्धुघातिना रामेण कथं मैत्रीत्याशङ्क्याह॥ खरेति॥ खरादीनां निधनं वधं चापि वैरकारणं मा मंस्थाः न मन्यस्व। मन्यतेर्लुङि थासि "न माङ्योगे" इत्यडागमप्रतिषेधः। यस्मात्कारणात् आत्मानं रक्षितुं कृतं विजिगीषया न कृतम्। ते हताः स्वापराधादेव हता इत्यर्थः॥

ततः क्रोधानिलापातकम्प्रास्याम्भोजसंहतिः।
महाह्रद इव क्षुभ्यन् कपिमाह स्म रावणः॥ ११८॥

११८. तत इति॥ ततो रावणः क्रोध एवानिलस्तस्यापातेन घातेन कम्प्रा आस्याम्भोजसंहतिर्मुखपद्मपङ्क्तिर्यस्य सोऽत एव महाह्रद इव क्षुभ्यन् व्याकुलीभवन् कपिमाह स्म॥

हतराक्षसयोधस्य विरुग्णोद्यानशाखिनः।
दूतोऽस्मीति ब्रुवाणस्य किं दूतसदृशं तव॥ ११९॥

---

१ ताटका T., G., Com.
२ विज्ञापितो D.
३ मारीचेन च T₂, T₄.
४ चैव C., T1, T₃.
५ न विजिगीषया T₄.
६ कोपानिला° T₂, T₄.

११९. यदुक्तं दूतमेकमिति तत्रोत्तरमाह । हतेति ॥ हताः राक्षसयोधाः येन तस्य विरुग्णाः भग्नाः उद्यानशाखिनो येन तस्य दूतोऽस्मीति ब्रुवाणस्य तव दूतसदृशं दूतानुरूपं किम् । संदेशमात्रहरा दूताः न योद्धार इति भावः ॥

पङ्गुबालस्त्रियो निघ्नन् कबन्धखरताडकाः[1] ।
तपस्वी यदि काकुत्स्थः कीदृक् कथय पातकी ॥ १२० ॥

१२०. यदुक्तं संरम्भस्तव तापस इति तत्रोत्तरमाह । पङ्ग्विति ॥ यथाक्रमं पङ्गुबालस्त्रियः कबन्धखरताटकाः निघ्नन् काकुत्स्थः तपस्वी यदि कीदृक् पातकी कथय । स्त्रीबालादिघाती तपस्वी चेति विप्रतिषिद्धमिति भावः ॥

अभिमानफलं जानन् महत्त्वं कथमुक्तवान् ।
रत्नादिलाभशून्यत्वान्निष्फलं रामविग्रहम् ॥ १२१ ॥

१२१. यदुक्तं न सर्वरात्रेत्यादिना रामविग्रहे फलं नास्ति इति तत्रोत्तरमाह । अभिमानेति ॥ महत्त्वं महावीरत्वमभिमानफलमहंकारैकफलं जानन् रामविग्रहं रत्नादिलाभशून्यत्वान्निष्फलं कथमुक्तवान् । मानैकधनाः जिगीषवो न धनान्तरगृध्नव इति भावः ॥

परस्त्रीभोगहरणं[2] धर्म एव नराशिनाम् ।
मुखमस्तीत्यभाषिष्ठाः[3] कां[4] मे साशङ्कतां त्वयि[5] ॥ १२२ ॥

१२२. यदुक्तं धर्मं प्रत्यर्पयन् सीतामित्यादि तत्रोत्तरमाह । परेति ॥ नराशिनां राक्षसानां परस्त्रीणां भोगश्च हरणं चेति धर्म एव । एवं स्थिते सीताप्रत्यर्पणोपदेशेन मयि रामे रामे विषये साशङ्कतां सशङ्कत्वं मुखमभिवदनसाधनं वदनमस्तीत्यभाषिष्ठाः । न तु विमृश्येत्यर्थः । रावणस्यापि कुतश्चिच्छङ्केत्यशक्यशङ्कत्वादिति भावः ॥

---

१ ताटकाः T., G., Com.
२ हरणे $T_2$, $T_3$, $T_4$.
३ मुख॰ D., $E_3$.
४ रामे T., G., Com.
५ साशङ्कतां मयि T., G., Com.

ब्रूहि दूरंविभिन्नानांमृद्धिशीलक्रियान्वयैः।
हनूमन् कीदृशं सख्यं नरवानररक्षसाम् ॥ १२३ ॥

१२३. यदुक्तं संगच्छ रामसुग्रीवावित्यादि तत्रोत्तरमाह। ब्रूहीति ॥ हे हनूमन् वृद्धिशीलक्रियान्वयैर्भूतिस्वभावसमाचारकुलैः दूरविभिन्नानामत्यन्तविलक्षणानां नरवानररक्षसां सख्यं कीदृशं किंविधं ब्रूहि कथय। प्रत्युत स्पर्धैव वर्धेत इति भावः ॥

एको द्वाभ्यां विरोधैस्तु जिताभ्यामविवक्षितः।
हतश्छलेन मूढोऽयं तेनापि तव कः स्मयः ॥ १२४ ॥

१२४. यद्वर्जितं विराधताटकेत्यादि तद्दूषयति। एक इति ॥ विराधस्त्वविवक्षितः अयं मे वध्य इत्यसंजातविवक्षः मूढः एकोऽहं द्वावेताविति विवेकशून्यः जिताभ्यां द्वाभ्यामेकोऽसहायश्छलेन कपटेन हत इति यत् तेन तादृग्वधेनापि तव ते कः स्मयः। अहो. ते मोह इति भावः ॥

मन्नियोगाच्च मारीचः पलायनपरायणः।
युयुत्सारहितो रामं ममारापहरन् वने ॥ १२५ ॥

१२५. मारीचवधस्तु विराधवधादपि गर्हित इत्याह। मदिति ॥ मन्नियोगान्मम शासनात्पलायनपरायणोऽन्यथा रामकर्षणासिद्धेरिति भावः अत एव युयुत्सा योद्धुमिच्छा तद्रहितः किन्तु वने राममपहरन् दूरमाकर्षन् मारीचो ममार। 'न भीतं न परावृत्तम्' इति निषिद्धपरावृत्तवधेनापि रामस्योत्कर्ष इत्यलं प्रलापेनेति भावः ॥

निजघानान्यसंसक्तं सत्यं रामो लतामृगम्।
त्वमेव ब्रूहि संचिन्त्य युक्तं तन्महतां यदि ॥ १२६ ॥

१२६. वालिवधस्तु कष्टादपि कष्ट इत्याह। निजघानेति ॥ रामोऽन्यसंसक्तं सुग्रीवेण सह युध्यमानं लतामृगं शाखामृगं वालिनं निजघान।

१ दूत वि° E3.
२ °नां वृद्धि° T., G., Com.
३ विराधस्तु T., G., Com., T4.
४ विस्मयः c., D., B., E2, T2, T4.
५ °न्यसंयुक्तं T3.

सत्यमस्त्यैवैतत् किं तु तत्परासक्तहननं महतां वीराणां युक्तं यदि युक्तं किं त्वमेव संचिन्त्य सम्यग्विमृश्य ब्रूहि । 'न परेण समासक्तम्' इति निषेधान्न युक्तमिति भावः ॥

पुंसा भक्ष्येण बन्धूनामात्मानं रक्षितुं वधः ।
क्षमिष्यते दशास्येन क्वेयं तव दुर्मतिः ॥ १२७ ॥

१२७. यदुक्तं खरादिनिधनं चापि मा मंस्था वैरकारणमिति तत्तु मया प्रतिविधेयमेवेत्याह । पुंसेति ॥ भक्ष्येणास्माकं खाद्येन पुंसा नराधमेन रामेण कर्त्रा आत्मानं रक्षितुं बन्धूनां खरादीनां वधः ॥ "उभयप्राप्तौ कर्मणि" इति कर्मणि षष्ठी ॥ दशास्येन क्षमिष्यते सहिष्यत इति तव दुर्मतिर्दुर्बुद्धिः क्व भवा क्वत्या कुत्रत्या । वृथा दुराशा न कार्येत्यर्थः ॥ "अव्ययात्त्यप्" इति क्वशब्दात् भवार्थे त्यप्प्रत्ययः । 'अमेहक्वतसित्रेभ्यस्त्यब्विधिर्योऽव्ययात्स्मृतः' इति परिगणनात् ॥

कपिर्जगाद दूतोऽहमुपायं तव दर्शने ।
द्रुमराक्षसविध्वंसमकार्षं बुद्धिपूर्वकम् ॥ १२८ ॥

१२८. कपिरिति ॥ अथ कपिर्जगाद तत्र यदुक्तं हतराक्षसयोधस्येत्यादिना दूत्यविरुद्धाचरणान्न त्वं दूत इति तत्रोत्तरमाह । अहं दूत एव किं तु द्रुमराक्षसविध्वंसं बुद्धिपूर्वकमेव तव दर्शने उपायं साधनमकार्षमद्राक्षं च त्वामतोऽहं दूत एवेत्यर्थः ॥

आत्रिकूटमकार्षुर्ये त्वत्का निर्जङ्गमं जगत् ।
दशमूर्धन् कथं ब्रूषे तानवध्यान् महीपतेः ॥ १२९ ॥

१२९. यत्तु पङ्गुबालस्त्रियो निघ्नन्नित्यादिना कबन्धादीनामवध्यत्वमुक्तं तत्राह । आत्रिकूटमिति ॥ त्वं ग्रामणीरेषां त्वत्कास्त्वत्प्रधानास्त्वदीया इत्यर्थः ॥ "स एषां ग्रामणीः" इति कन्प्रत्ययः ॥ ये कबन्धादयः आत्रिकूट-

---

१ मित्राणामा' E₂.
२ दर्शने तव T₁, T₃.
३ आद्रिकूट B.
४ दशमीव N., C., E₂, E₃, T₁.

मात्रिकूटात् । अभिविधावव्ययीभावः । जगम्भिर्जङ्गममकार्षुः हे दश-मूर्धन् तान् पापिष्ठान् महीपतेः राज्ञः रामस्य प्रजापालनाधिकृतस्य कथमवध्यान्ब्रूषे ॥

अभिमानफलं प्रोक्तं[1][2] यत्त्वया रामविग्रहे[3] ।
विनेशुस्तेन शतशः कुलान्यसुररक्षसाम् ॥ १३० ॥

१३०. अन्यदपि रावणोक्तमनूद्य दूषयति । अभिमान इति ॥ त्वया रामविग्रहे योऽभिमानः फलं प्रोक्तस्तेनाकारणविग्रहेणासुररक्षसां कुलानि शतशो विनेशुस्त्वं तु दर्पात्तन्न पश्यसीत्यर्थः ॥

यत्स्वधर्ममधर्मं[4] त्वं दुर्बलं प्रत्यपद्यथाः ।
रिपौ रामे च निःशङ्को नैतत् क्षेमङ्करं चिरम् ॥ १३१ ॥

१३१. अथ परस्त्रीभोगेत्यादिना यदुक्तं तद्दूषयति । यदिति ॥ दुर्बलमधर्मं स्वधर्मं स्वाचारं यत्प्रत्यपद्यथाः रिपौ रामे निःशङ्क इति च यत्प्रत्यपद्यथाः प्रतिपन्नोऽसि एतदुभयं चिरं क्षेमङ्करं श्रेयस्करं न किन्तु क्षिप्रमेव फलमनुभविष्यसीति भावः ॥ "क्षेमप्रियमद्रेऽण्च" इति चकारात्खचि मुमागमः ॥

अन्वयादिविभिन्नानां[5] यथा सख्यमनीप्सितम् ।
[6]मैषीर्विरोधमप्येवं सार्धं पुरुषवानरैः ॥ १३२ ॥

१३२. अन्यदपि त्वदुक्तं दुरुक्तमित्याह । अन्वयेति ॥ अन्वयादिभिर्विरुद्धानां विलक्षणानां नरवानररक्षसां यथा सख्यमनीप्सितमेवं पुरुषवानरैर्नरवानरैर्विरोधं विग्रहमपि मैषीर्नेच्छ । असमानसख्यवदसमानविग्रहस्यापि लघुत्वादिति भावः । एषीरितीच्छतेर्लुङि सिचि "इट ईटि" इति सलोपः ॥ "न माङ्योगे" इत्यडभावः ॥

---

१ अभिमानः T., G., Com.
२ प्रोक्तो T., G., Com.
३ रामविग्रहं D.
रामनिग्रहे B.
मम विग्रहे T2.
४ यदधर्मं स्वधर्मं त्वं E2.
५ विरुद्धानां T., G., Com.
६ नैषीः C., N., D., B., T1, T2, T4.

विराधं तपसां विघ्नं जघान विजितो यदि ।
वैरो धनुर्भृतां रामः स कथं न विवक्षितः ॥ १३३ ॥

१३३. यदुक्तमेको द्वाभ्यामित्यादि तदपि दूषयति । विराधमिति ॥ धनुर्भृतां वरः श्रेष्ठः रामस्तपसां विहन्यतेऽनेनेति विघ्नोऽन्तरायः ॥ 'घञर्थे कविधानम्' इति कप्रत्ययः ॥ "गमहन—" इत्यादिना उपधालोपः ॥ "हो हन्तेः—" इत्यादिना कुत्वम् ॥ तं विघ्नभूतविराधं विजितस्तेन पूर्वं जितो यदि जघान स विजेता विराधः कथं विवक्षितो न किं तु विवक्षित एव । एतेन न पूर्वोक्तदोषावकाश इत्यर्थः ॥

प्रणश्यन्नपि नाशक्नोद्देसेतुं बाणगोचरम् ।
त्वयैवोक्तं महामायो मारीचो रामहस्तिनः ॥ १३४ ॥

१३४. प्रेति ॥ महामायो मारीचः प्रणश्यन्नपि पलायमानोऽपि ॥ "उपसर्गादसमासेऽपि णोपदेशस्य" इति णत्वम् ॥ रामो हस्तीवेत्युपमितसमासः । तस्य रामहस्तिनो बाणगोचरं बाणविषयमत्येतुमतिक्रमितुं नाशक्नोत् शक्तो नाभूत् त्वयैवोक्तं ममारेति वदता । पलायमानस्यापि मायाविनो वधेन न कश्चिदपकर्ष इत्यर्थः ॥

अन्यासक्तस्य यद्वीर्यं न त्वं स्मरसि वालिनः ।
मूर्च्छावान् नमतः संध्यां ध्रुवं तद्बाहुपीडितः ॥ १३५ ॥

१३५. यदुक्तं निजघानान्यसंसक्तमिति तत्सोपहासं परिहरति ॥ अन्यासक्तस्येति ॥ संध्यां नमतो वन्दमानस्य अत एव अन्यसंसक्तस्य वालिनो वीर्यं यद्यस्मात्त्वं न स्मरसि तत्तद्बाहुना पीडितः कक्षे निक्षिप्य पीडितो निरुद्धोऽत एव मूर्च्छितो मूर्च्छावान् ध्रुवम् । अन्यथा कथं न स्मरसीत्यर्थः । अन्यसंसक्तवधदोषस्तु नास्त्येव रामस्य अन्यथा वालिना सुग्रीवे हते मित्रवधो विश्वासघातश्च स्यादिति भावः ॥

---

१ वीरो $T_4$.
२ °दभ्येतुं $E_2$.
३ वसतः संध्यां तद् ध्रुवं बाहुपीडितः B.
४ तद् ध्रुवं बा° $T_3$, $T_4$.

असद्बन्धुवधोपज्ञं विमुञ्च बलिविग्रहम् ।
सीतामर्पय नन्तव्ये कोशदण्डात्मभूमिभिः ॥ १३६ ॥

१३६. पुंसा भक्ष्येणेत्यादिना खरादिवधो न क्षमिष्यत इति तत्र बलावष्टम्भेनोत्तरं वदन् वाक्यमुपसंहरति । असदिति ॥ उप ज्ञायत इत्युपज्ञा ॥ "आतश्चोपसर्गे" इति कः ॥ असद्बन्धुवधः दुष्टबन्धुवधः । अतः बन्धुवधस्याचेतनस्योपज्ञाने कर्तृत्वासंभवात्तेन हतबन्धुश्चेतनो लक्ष्यते । तस्योपज्ञा तदुपज्ञम् । तेन त्वयैवादावुपज्ञातमित्यर्थः । असद्बन्धुवधोपज्ञम् ॥ "उपज्ञोपक्रमं तदाद्याचिख्यासायाम्" इति नपुंसकत्वम् ॥ बलिविग्रहं बलिना रामेण सह विग्रहं विरोधं विमुञ्च । नन्तव्ये वन्द्ये रामेऽधिकरणे कोशदण्डात्मभूमिभिः सह सीतामर्पय निधेहि ॥

स्फुटपरुषमसह्यमित्थमुच्चैः
सदसि मरुत्तनयेन भाष्यमाणः ।
परिजनमभितो विलोक्य दाहं
दशवदनः प्रदिदेश वानरस्य ॥ १३७ ॥

१३७. स्फुटेति ॥ स्फुटं व्यक्तं तच्च तत्परुषं निष्ठुरं च असह्यं दुःसहं च उच्चैस्तारं सदसि सभायां मरुत्तनयेन हनूमता भाष्यमाणः । वाक्यस्यासह्यत्वादुच्यमान एव न तु समाप्तावित्यर्थः । दशवदनोऽभित उभयतः परिजनं विलोक्य वानरस्य दाहं प्रदिदेश आदिष्टवान् । पुष्पिताग्रावृत्तम् ॥

इति भट्टिकाव्येऽधिकारकाण्डे नवमः सर्गः ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते भट्टिकाव्यव्याख्याने सर्वपथीनाख्याने रावणसंदर्शनं नाम नवमः सर्गः ॥

---

१ यत्नेन दण्डकोषार्थभूमिभिः C. यत्नेन कोश° D. नन्तव्ये दण्डकोशात्म° E₂.

२ कोष E₃, B.

३ °मथमुच्चै T₃, T₄.

# NOTES.

## CANTO I.

**Stanza 1—**

A Mahâkâvya must open with a benedictory stanza, or a salutation-stanza, or one specifying the subject-matter of it. 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' (*vide* Intro.). Premachandra in his commentary on Kâvyâdarśa explains वस्तुनिर्देश as meaning 'narration of the hero or one connected with him.' 'वसति प्रस्तुतवृत्तान्तोऽस्मिन्निति वस्तु प्रबन्धनायकः अपरो वा तत्सम्बन्धी तस्य निर्देश उपन्यासः' But Malli. takes it to mean 'narration of the subject-matter.' 'दशरथस्य सत्तारूपं वस्तु काव्यार्थबीजत्वेन निर्दिशति' (*vide* Com.). S'iśupâlavadha and Kumâra-sambhava also open with वस्तुनिर्देश. In his Sarvaṅkashâ (Com. on Mâgha) Malli. says 'काव्यफलं शिशुपालवधबीजभूतं भगवतः श्रीकृष्णस्य नारददर्शनरूपं वस्तु आदौ श्रीशब्दप्रयोगपूर्वकं निर्दिशन् कथामुपक्षिपति.' We do not think it necessary to take वस्तु in the sense of नायक or तत्सम्बन्धी.

The word **विबुध** is formed from the root बुध् by the Sûtra "इगुपधज्ञाप्रीकिरः कः" ३।१।१३५॥. Roots having इक् (इ, उ, ऋ, short or long and ऌ) for their penultimate, and ज्ञा, प्री and कृ take the termination क (*i. e.* अ, क् being इत् by "लशक्वतद्धिते" १।३।८॥) in the sense of the doer. The termination being कित् is weak, *e. g.* क्षिपतीति क्षिपः, लिखतीति लिखः, बुध्यतीति बुधः, कृशयतीति कृशः, जानातीति ज्ञः, प्रीणातीति प्रियः, किरतीति किरः. ण्वुल् (अक) and तृच् (तृ) are also added to these roots as to others in the same sense. They are strong terminations. *e. g.* क्षेपकः, क्षेप्ता; लेखकः, लेखिता; ज्ञायकः, ज्ञाता &c.

**द्विषन्तप** and **परन्तप.** To तापि, the causal base of तप्, खच् (अ) is affixed in the sense of the doer, when द्विषत् or पर is its उपपद (*i. e.* is prefixed to it). तापि shortens its penultimate and drops इ. अरुष्, द्विषत्, and words ending in a vowel have मुम् (म्) added to them when they are prefixed to a root to which खश् or खच् is to be added. अभ्रंलिह, अरुन्तुद, ललाटन्तप, प्रियंवद, वशंवद, वाचंयम, पुरन्दर, सर्वंसह, सर्वङ्कष, कूलङ्कष, अभ्रङ्कष, भयङ्कर, विश्वम्भर, अरिन्दम, and पतिंवरा are among the words thus formed.

**सनातनः.** तन is affixed to साय, चिर (changed to सायम् and चिरम्), प्राह्ण, प्रग (changed to प्राह्णे and प्रगे), and to adverbs shewing time, in the

sense of 'pertaining to'. सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ४।३।२३॥ प्राह्णप्रगयोरेदन्तत्वं निपात्यते. अव्ययेभ्य इत्युक्तावपि सायंचिरंशब्दयोः पृथग्ग्रहण-मकारान्तानव्ययसायंचिरशब्दयोर्मान्तत्वनिपातनं द्योतयति. *e. g.* सायन्तन, चिरन्तन, प्राह्णेतन (relating to the forenoon), प्रगेतन (relating to the morning), दोषातन, दिवातन, अद्यतन, इदानीन्तन &c.

**स्वयम्**=Of his own accord, without being incited by another. 'स्वय-मित्यात्मना न कर्मणान्येन वा प्रेरित इत्यर्थः' (जय०).

There is inconsistency between the two ideas conveyed by सनातनः (primeval, eternal) and पितरमुपागमत् (approached Daśaratha as father, was born of him); but this inconsistency is only apparent, as it can be explained away by the fact that the greatness of Vishṇu is incomprehensible. A figure of speech, in which there is apparent inconsistency which can be reconciled by some circumstance or by construing the passage in another way, is called विरोधाभास, which is defined by Vidyânâtha in Pratâparudra as 'आभासत्वे विरोधस्य विरोधाभास इष्यते.' Mammaṭa calls it विरोध and defines it as 'विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः'. In the present case the antithesis may be explained away by the fact that he was born to extricate the world from the thorn of Râvaṇa. (भुवनहितच्छलेन). The Gitâ says:—

'परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥'

जगण should not be used in the beginning of a composition; but if it is followed by भगण or if the first word be designative of a deity or auspiciousness, it is not objectionable to use it. The S'iśupâla-vadha also opens with जगण, but Malli. comments upon it as follows:—'तत्रादौ श्रीशब्दप्रयोगात् वर्णगणादिशुद्धेरभ्युदयः । तदुक्तम् । "देवता-वाचकाः शब्दा ये च भद्रादिवाचकाः । ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा ॥" इति.'

The metre of the verse is रुचिरा, also called प्रभावती, consisting of जगण, भगण, सगण, जगण and a long letter and having the *yati* or cæsura after four and nine letters. (चतुर्ग्रहैः).

## Stanza 2—

**त्रिदशा.** In the Sarvaṅkashâ, Malli. thus explains it:—'तिस्रो दशा बाल्यकौमारयौवनानि जन्मसत्तावृद्धयो वा येषां ते (that is, free from old age or destruction) यद्वा त्रिर्दश परिमाणमेषां ते त्रिदशाः' Other ways of explaining the word are as follows:—

'त्रीन् तापान् दशतीति त्रिदशः । घञर्थे संज्ञायां कर्त्तरि कः । अथवा व्यधिकात्रिरावृत्ताश्च दश परिमाणमेषां ते त्रिदशाः । डच् समासान्तः । शाकपार्थिवादित्वादधिकावृत्तशब्दलोपः । एकस्यैव त्रिशब्दस्य तन्त्रतयोच्चारणादुभयार्थपरत्वम् । अयमेव पक्षः श्रुत्यनुगुणः । त्री च दश चेति छान्दोग्येऽभिहितत्वात् । व्यधिकावृत्तपरताद्योतनार्थं त्री चेति द्विवचनान्ततया निर्देशः । ते च देवाः । अर्का द्वादश रुद्रा एकादश वसवोऽष्टौ अश्विनौ द्वाविति । अश्विनीकुमारौ विहाय इन्द्रः प्रजापतिश्चेति वा द्वाभ्यां पक्षान्तरे संख्यापूरणम् ॥'

**पितॄनपारीत्**=Satisfied the Manes. 'पितॄनपारीदाप्यायितवान् । पितरमुद्दिश्य यजनम् । "पॄ पालनपूरणयोः" इत्यस्मात्पूरणार्थाल्लुङि रूपम्' (जय॰). अपारीत् and अतार्प्सीत् are synonymous. Mark Malli.'s explanation of अतार्प्सीत् 'gratified the Manes by offerings, and by the progeny which was to result from them'. By studying the Vedas, performing sacrifices to Gods, and gratifying the Manes by generating children, Daśaratha became free from three debts, which all have to pay off, *viz.*, debt to sages, debt to Gods, and debt to the Manes. *cf.* 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येणर्षिभ्यः यज्ञेन देवेभ्यः प्रजया पितृभ्यः' (आश्व॰)

'ऋषिदेवगणस्वधाभुजां श्रुतयागप्रसवैः स पार्थिवः ।
अनृणत्वमुपेयिवान् बभौ परिधेर्मुक्त इवोष्णदीधितिः ॥' Raghu. 8. 30.

Bhaṭṭoji notices पितॄनतार्प्सीत्. On तृप प्रीणने he says 'प्रीणनं तृप्तिस्तर्पणा च । नाग्निस्तृप्यति काष्ठानाम् । पितॄनतार्प्सीदिति भट्टिः । इत्युभयत्र दर्शनात् ।

**सममंस्त.** 'येषां सिच इकार उच्चारणार्थस्तेषां "हनः सिच्" इति कित्करणज्ञापकान्नलोपाभावः । येषां तु इकार इत् तेषामिदित्त्वान्नकारलोपाभावः' (जय॰). Malli. takes the latter view, as also Bha. Dî. who says 'इचाविति' (सिद्धां॰ कौ॰), and 'इचाविति तत्रेदित्त्वे प्रयोजनममंस्तेत्यत्र "अनिदिताम्—" इत्युपधालोपाभावः' (मनो॰).

**षड्वर्ग**=The collection of six internal enemies of mankind, known as षड्रिपु. They are 'कामः क्रोधस्तथा लोभो मदमोहौ च मत्सरः' Bhâravi calls them अरिषड्वर्ग. See Kirâ.:—

'कृतारिषड्वर्गजयेन मानवीमगम्यरूपां पदवीं प्रपित्सुना ।
विभज्य नक्तंदिवमस्ततन्द्रिणा वितन्यते तेन नयेन पौरुषम् ॥' १. ९.

**नीतौ**=In the adoption of one of the four means of success or one of the six courses of action against an enemy. The *Upâyâs* are सामन् (conciliation), दान (bribery), भेद (sowing dissensions), and दण्ड (attack). The *Guṇas* are संधि (peace), विग्रह (war), यान (march), आसन (halt) संश्रय (taking shelter), and द्वैधीभाव (duplicity).

**समूलघातम्.** It is used as an adverb. It is formed by adding णमुल् ( अम् ) to हन् ( changed to घात् ) with समूल as a prefix as its object. The formation is according to the Sûtra "समूलाकृतजीवेषु हन्कृञ्ग्रहः" (३।४।३६।। ). णमुल् is affixed to हन्, कृ, and ग्रह् with समूल अकृत, and जीव as *Upapadas* respectively as their objects. समूलघातं हन्ति (समूलं हन्ति), अकृतकारं करोति (अकृतं करोति), जीवग्राहं गृह्णाति ( जीवं जीवन्तं गृह्णाति ).

Malli. says that in this work one *śabdâlaṅkâra* consisting of प्रयोगवैचित्र्य ( variety of peculiar grammatical forms ) is to be found in almost each and every verse. In his Sarvaṅkashá also he considers प्रयोगवैचित्र्य as an Alaṅkâra. 'अत्र कर्त्रभिप्राये "णिचश्च" इत्यात्मनेपदे सिद्धेऽपि प्रयोगवैचित्र्यस्याप्यलंकारत्वादकर्त्रभिप्रायेऽपि "णेरणौ यत्कर्मणौ चेत्स कर्त्तानाध्याने" इत्यात्मनेपदं वदन्ति' माघ. १२. ९. In his Ghantâpatha also he takes the same view. 'अत्र तादर्थ्यचतुर्थ्यामपि न दोषः तथापि प्रयोगवैचित्र्यविशेषस्याप्यलंकारत्वादेवं व्याचक्षते' किरा. १. ३. The *arthâlaṅkâra* in this verse is समुच्चय, which is defined by Vidyânâtha as 'गुणक्रियायौगपद्यं समुच्चय उदाहृतः' The simultaneity of properties and actions is called समुच्चय. The following instance is given to illustrate the simultaneousness of properties:—

'प्रतापरुद्रनृपतौ भद्रासनमुपेयुषि ।
सतां प्रसन्नं हृदयमसतां कलुषं मनः ।।'

Here प्रसाद and कालुष्य take place simultaneously. The following verse illustrates the simultaneousness of actions:—

'प्रेक्षते इमां नरेन्द्रो प्रविशति मदनो गलति मानश्च ।
घूर्णति मनश्च शून्यं किमेतत्पद्यत सख्यः ।।'

In the text the simultaneity of actions, studying the Vedas, performing sacrifices to gods &c., is described.

### Stanza 3—

**व्यकारीत्**=दत्तवान् विक्षिप्तवानिति वा.

**धनवत्.** The student should note that there are two terminations वत् used in two ways. One is the substitute of मत् and is generally a possessive termination. The word to which it is added is used as an adjective. "तदस्यास्त्यस्मिन्निति मतुप्" ५।२।९४।। गावोऽस्यास्मिन्वा सन्ति गोमान् । 'अस्तीति पुरुषवचनेऽविवक्षिते । कालस्तु विवक्षित एव । इतिशब्दो विषयविशेषलाभार्थः तथाहि

'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ।।'

'अस्तिविवक्षायां ये मतुबादयो विधीयन्ते ते भूमादिषु विषयेषु भवन्तीति वार्त्तिकार्थः। भूमा बहुत्वं तच्च आपेक्षिकम्। यस्य हि यावदुचितं तावदेव स्वशब्देनापि प्रतीयते यथा पञ्चषाभिरपि गोभिर्दरिद्रस्य बह्वयो गाव इति व्यवहारः राज्ञस्तु सहस्रगोभिरपि गावोऽल्पा इति ॥' (मनो॰).

यवमान्, ककुदावर्त्तिनी कन्या, रूपवान्, क्षीरिणो वृक्षाः, उदरिणी, and दण्डी are instances of मत् and other possessive terminations designating भूमन्, निन्दा, प्रशंसा, नित्ययोग, अतिशायन, and संसर्ग respectively.

भूम्नि। यवमान्। प्रचुरयवविशिष्ट इत्यर्थः। 'इह यवमतीभिरद्भिर्यूपं प्रोक्षतीत्यादौ जातिमात्रसंबन्धस्य विवक्षितत्वाद्भूमाभावेऽपि मतुप्। भूमादिग्रहणं हि प्रायेण भूमादयोऽपि प्रतीयन्त इत्येवंपरम्। निन्दायां ककुदावर्त्तिनी कन्या। प्रशंसायां रूपवान्। नित्ययोगे क्षीरिणो वृक्षाः। अतिशायने उदरिणी कन्या। संसर्गे दण्डी। संसर्गः संयोगः तेन संयुक्त एवोच्यते न तु गृहावस्थिते दण्डेऽपि'। (मनो॰)

Another वत् has three uses. It is used in the sense of 'like'. The word to which it is added is used as an adverb and is connected with a verb. "तेन तुल्यं क्रिया चेद्वतिः" ५।१।११५॥. 'तुल्यमिति सामान्ये नपुंसकं यत्तुल्यं सा चेत्क्रियेत्यर्थः।' *e. g.* ब्राह्मणवदधीते ब्राह्मणेन तुल्यमधीते। 'ब्राह्मणशब्दस्तत्कर्तृकेऽध्ययने लक्षणया वर्त्तते ब्राह्मणकर्तृकाध्ययनतुल्यमध्ययनं वाक्यार्थः'. Thus ब्राह्मणवदधीते means 'his study is like the study of a Brâhmaṇa', the word ब्राह्मण being used not in its primary sense, but in the secondary sense of the study of a Brâhmaṇa.' क्रिया चेदिति किम्। गुणतुल्ये मा भूत्। पुत्रेण तुल्यः स्थूलः. Here we can not say पुत्रवत् स्थूलः. On गुणतुल्ये मा भूत् Bha. Di. remarks in the Manoramâ:—'गुणतुल्ये इति अक्रियया तुल्य इत्यर्थः। अत एव महानसवदिति वतेः साधुत्वरक्षणार्थं प्रतिज्ञावाक्ये वह्निमान् भवितुमर्हतीत्यादिक्रियापदं प्रयुञ्जते वृद्धाः। अर्वाचीनास्तु महानससदृशपर्वत इति व्याचक्षाणाः सूत्रविरोधादुपेक्ष्याः' । It is not strictly correct to say पर्वतो वह्निमान् महानसवत्, for here महानसवत् is not connected with a verb. The correct expression is पर्वतो वह्निमान् भवितुमर्हति महानसवत्. Here महानसवत् will be connected with the verb भवितुमर्हति. The objection that the first sentence *viz.*, पर्वतो वह्निमान् महानसवत्, conveys the sense clearly, is thus refuted:—'ननु तद्रीत्या व्युत्पन्नस्य तादृशबोधोऽप्यनुभवसिद्ध इति चेत् सत्यं तादृशेऽर्थे साधुत्वमात्रं निराकुर्मो न तु बोधमपि। तथाहि भेद्यभेदकसंबन्धोपाधिभेदनियन्त्रितं साधुत्वं तदभावेऽपि बोधो नेह निवार्यते। अव्युत्पन्नस्य साधुभ्योऽप्यबोधात् तत्रैव व्युत्पन्नस्यासाधुभ्योऽपि बोधाच्च कस्मात् किं बुध्यते इति न नियन्तुं शक्यं किं तु किंविशेष्यके किंप्रकारके किंसंसर्गके बोधेऽनुद्देश्ये किं साधु किं नेत्येव शास्त्रीयविचारविषयः। उक्तं हि भगवता। समानायामर्थावगतौ शब्दैश्चापशब्दैश्च भक्ष्याभक्ष्यादिवन्नियमः क्रियत इति ॥'

Another use of वत् is that it is added to a word in the sense of 'like in', or 'like of'. Here also the word ending in वत् is an adverb, but it is not connected with a verb. "तत्र तस्येव" ५।१।११६॥ 'मथुरायामिव मथुरावत् स्रुघ्ने प्राकारः । चैत्रस्येव चैत्रवन्मैत्रस्य गावः ।'

The third sense of वत् is 'in a way befitting some thing.' Here the word ending in वत् is connected with a verb and is used adverbially. "तदर्हम्" ५।१।११७॥ 'विधिमर्हति विधिवत्पूज्यते । क्रियाग्रहणं मण्डूकप्लुत्यानुवर्त्तते । तेनेह न । राजानमर्हति छत्रम् ।' It is not correct to say राजवत् छत्रम् as राजवत् is not connected with a verb.

**उपास्थित.** स्था with उप is Atma. in the sense of 'praising a deity with *Mantrâs,*' 'adoring a deity,' 'uniting,' 'contracting friendship,' 'leading to' (a way leading to some place) and when it is used intransitively. It is optionally Atma. in the sense of 'desiring to obtain.' "उपान्मन्त्रकरणे" १।३।२५॥. *e. g.* आग्नेय्याग्नीध्रमुपतिष्ठते. "उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम्" *e. g.* आदित्यमुपतिष्ठते । गङ्गा यमुनामुपतिष्ठते । रथिकानुपतिष्ठते । पन्थाः स्रुघ्नमुपतिष्ठते. ॥ "अकर्मकाच्च" १।३।२६॥ *e. g.* भोजनकाले उपतिष्ठते ॥ "वा लिप्सायामिति वक्तव्यम्" *e. g.* भिक्षुकः प्रभुमुपतिष्ठते उपतिष्ठति वा ।

**निरास्थत्.** अस् to throw and ऊह् are optionally Atma. when they are preceded by a preposition. "उपसर्गादस्यत्यूह्योर्वेति वाच्यम्."

The figures of speech in this verse are उपमा (simile) and समुच्चय (for which see notes on v. 2) Vidyâ. defines उपमा as 'स्वतः सिद्धेन भिन्नेन संमतेन च धर्मतः । साम्यमन्येन वर्ण्यस्य वाच्यं चेदेकदोपमा' ॥. As उपमा and समुच्चय stand independently of each other like oil and sesamum, there is संसृष्टि of them. The combination of two or more figures of speech in one passage independently of one another is called संसृष्टि. 'तिलतण्डुलसंश्लेषन्यायाद्यत्र परस्परम् । सांश्लिष्येयुरलङ्काराः सा संसृष्टिर्निगद्यते ॥' (विद्या॰).

Stanza 4—

**महाब्रह्मसमूहजुष्टः.** ब्रह्मन् drops its final अन् and takes अ at the end of a Tatpurusha compound optionally when preceded by कु or महत्. "कुमहद्भ्यामन्यतरस्याम्" ५।४।१०५॥ *e. g.* कुत्सितो ब्रह्मा कुब्रह्मः or कुब्रह्मा. महान्तश्च ते ब्रह्माणश्च महाब्रह्माः or महाब्रह्माणः.

**अध्वरे वह्निरभिप्रणीतः**=Consecrated in the sacrifice, being brought from the house-hold fire. The three sacred fires are गार्हपत्य, आहवनीय, and दक्षिण. Manu describes them as follows :—

'पिता वै गार्हपत्योऽग्निर्माताग्निर्दक्षिणः स्मृतः ।
गुरुराहवनीयस्तु साग्नित्रेता गरीयसी ॥' २. २३१.

गार्हपत्य is the sacred fire to be perpetually maintained by a householder. He receives it from his father and transmits it to his descendants. It is from this that sacrificial fires are lighted. आहवनीय is the eastern fire burning at a sacrifice. It is taken from गार्हपत्य. दक्षिण is the southern fire, used in the monthly *S'râdha* sacrifice, performed in the honour of the Manes on the day of the New Moon. *cf.*

'गार्हपत्यादाहवनीयं ज्वलन्तमुद्धरेत् । पिता वा एषोऽग्नीनां यद्दक्षिणः पुत्रो गार्हपत्यः पौत्र आहवनीयः ।' आश्व० गृ०.

**जज्वाल लोकस्थितये.** When taken with राजा, it means 'was wide awake for the protection of his subjects.' When taken with अग्नि, it means 'as fire burns for the protection of the world.' *cf.*,

अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥ ( मनु० ).

In this verse the king is compared to Âhavanîya fire. पुण्यः, महाब्रह्मसमूहजुष्टः, &c. are adjectives common to both. Thus राजा is उपमेय, अग्नि, उपमान, पुण्यः &c. are साधारणधर्म and यथा is उपमाद्योतक. All the four essentials of उपमा being वाच्य ( expressed ), it is पूर्णोपमा ; and it is श्रौती, because यथा, इव &c. directly bring out the idea of similarity. 'साक्षात्सादृश्यप्रतिपादकेवादिशब्दानां प्रयोगे श्रौती । धर्मिव्यवधानेन सादृश्यप्रतिपादकानां सदृशसंकाशनीकाशप्रतीकाशादिशब्दानां प्रयोगे आर्थी.' ( विद्या० ).

## Stanza 5—

**शतमन्युकल्पः.** कल्प, देश्य, and देशीय are terminations added to a word in the sense of 'a little short of'. They shew 'proximity to completion'. "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" ५।३।६७॥. *e. g.* ईषदूनो विद्वान् विद्वत्कल्पः, यशस्कल्पम्, पचतिकल्पम्, विद्वद्देश्यः, अष्टादशवर्षदेशीयः, पटुदेशीयः.

The figure of speech in this verse is सम in which there is a combination of suitable objects. Here the suitability between दशरथ and अयोध्या is described. Daśaratha, who was like Indra, lived in Ayodhyâ, which was like Amarâvatî. As the figure thus depends upon two Upamâs, the combination is called संकर, which means a combination in a passage of two or more figures depending upon one another, being mixed up like milk and water.' 'क्षीरनीरन्यायाच्च संबन्धः स्यात् परस्परम् । अलंकृतीनामेतासां संकरः स उदाहृतः॥'( विद्या० ) These are Vâchyâlankâras (expressed figures.). There is also Alankâradhvani (suggestion

of a figure ). As it is suggested that Râma beautified Ayodhyâ and Ayodhyâ beautified Râma, there is अन्योन्यालंकारध्वनि, and this is अलंकारेण अलंकारध्वनिः because it is the *saṅkara*, of *Sama* and *Upamâ* that suggests *Anyonyâlaṅkâra* which Vidyâ defines thus:—'तदन्योन्यं मिथो यद्योरुत्पाद्योत्पादकता भवेत.'

**पद्मासनकौशलस्य.** 'तस्य (पद्मासनस्य) कौशलं नैपुण्यमिति षष्ठीसमासः। तस्य "पूरणगुण—"इत्यादिना न प्रतिषेधः । तत्र विशिष्टा एव गुणा रूपरसगन्धस्पर्शास्तद्विशेषाश्च शुक्लनीलादयः कटुकाम्लादयः सौरभ्यादयः शीतोष्णादयश्च गृहीताः तत्र रूपादिभिः समासो भवत्येव । "तत्स्थैश्च गुणैः षष्ठी समस्यते न तु तद्विशेषगुणैः" इति वचनात्। अन्यैस्तु समासप्रतिषेधः । एवं च कृत्वा मुनित्रयवचनमर्थवद्भवति। तद्यथा "अधिकरणतैतावत्त्वे च" "तदशिष्यं संज्ञाप्रमाणत्वात्" इति पाणिनेः "युगपद्देशपृथक्त्वदर्शनादिति रूपसामान्याद्वेति वचनप्रामाण्यादिति चेद्लोपप्रतिषेधः" इति कात्यायनस्य "नकारग्रहणसामर्थ्याल्लोपो न भविष्यतीति किं पुनरत्रार्थसत्त्वम्" इति भाष्यकारस्येति' (जय॰).

Malli.'s view expressed in his commentary on *Kirâtârjunîya* on अर्थगौरवम् is as follows:—

'नन्वर्थगौरवमित्यत्र कथं षष्ठीसमासः। " पूरणगुण—" इत्यादिना प्रतिषेधात्। नैष दोषः। ये शुक्लादयः शब्दा गुणे गुणिनि च वर्तन्ते यथा पटस्य शुक्लं शुक्लः पट इति च तेषामेवात्र निषेधाद्ये च सदा गुणमात्रवचनाः यथा गौरवं प्राधान्यं रसो गन्धः स्पर्श इत्येवमादयस्तेषामनिषेधात्। तथा "तत्स्थैश्च गुणैः षष्ठी समस्यते" इति वचनाद्बहुलमभियुक्तप्रयोगदर्शनाच्च। बलाकायां शौक्ल्यमित्यादौ तु भाष्यकारवचनादसमासः। अत एवाह वामनः—"अत्र पीतिमादिषु गुणवचनसमासो बली स्यात्" इति ॥'

The Sûtra, which is referred to, is "पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन" २।२।११॥. The instance of गुणार्थ is 'काकस्य कार्ष्ण्यम्। ब्राह्मणस्य शुक्लाः।.' Bha. Dî. says:—'यदा प्रकरणादिना दन्ता इति विशेष्यं ज्ञातं तदेदं ('ब्राह्मणस्य शुक्ला' इति) अनुदाहरणम्। अनित्योऽयं गुणेन निषेधः तदशिष्यं संज्ञाप्रमाणत्वादिति निर्देशात्। तेनार्थगौरवं बुद्धिमान्द्यमित्यादि सिद्धम्'।

On this the Manoramâ proceeds as follows:—

'ननु ब्राह्मणस्य शुक्ला इत्यत्र समासप्रसंग एव नास्ति ब्राह्मणशब्दस्य दन्तैरेवान्वयात् ब्राह्मणस्य ये दन्तास्ते शुक्ला इत्यर्थादत आह यदेति। शुक्लशब्द एवेह विशेष्यसमर्पक इति भावः। यत्तु भावप्रत्ययान्तो गुणवाच्यत्र निषिध्यते इति प्राचोक्तं तन्न । उक्तोदाहरणस्य भाष्यकृदस्यासंगतिप्रसंगात्। यदपि सदा गुणवाचिनो न निषेध इति तदपि न। भावप्रत्ययान्तस्य सदा गुणवाचितया पूर्वग्रन्थविरोधात् । . . . . . . . सूत्रे गुणार्थ इत्यनेन केवलगुणस्य गुणोपसर्जनद्रव्यस्य च प्रतिपादको गृह्यते व्याप्तिन्यायात्। काकस्य कार्ष्ण्यं ब्राह्मणस्य शुक्ला इति द्वेधा भाष्ये उदाहरणाच्च । चन्दनगन्ध इत्यादौ तु निषेधे प्राप्ते 'तत्स्थैश्च गुणैः' इति वचनेन समासः प्रतिप्रसूयते। गन्धत्वेन प्रतीयमानो

हि गन्धो न कदापि गुणिसमानाधिकरणः किन्तु स्वप्रधानः । इदमेव तात्स्थ्यम् । ननु 'वहति जलमियं पिनष्टि गन्धान्' इति प्रयोगदर्शनादयुक्तमिदमिति चेन्न । तत्र हि गन्धानिति न गुणशब्दः मालतीकुसुमादिष्वदर्शनात् किन्तु चन्दनत्वादिजातिनिमित्तकोऽन्य एव सः । तस्माच्चन्दनगन्ध इत्यत्र तत्स्थत्वं सुस्थमेव । एवं पटरूपमित्यादावपि । सुरभिशुक्लादयः शब्दास्तु न तत्स्थगुणप्रतिपादकाः एवमपि शौक्ल्यसौरभ्यादिशब्दैः सह समासो दुर्वार इति चेन्मैवं तर्हि शुक्लत्वादिप्रकारक एव गुणबोधः तद्रूपापन्नानां च द्रव्यसामानाधिकरण्यमस्त्येव शुक्लः सुरभिरित्यादाविति दिक् ॥

The Bhâshya on षष्ठी २।२।८॥ runs as follows :—

'तत्स्थैश्च गुणैः ॥

तत्स्थैश्च गुणैः षष्ठीगुणैः षष्ठी समस्यते इति वक्तव्यम् । ब्राह्मणवर्णः चन्दनगन्धः पटहशब्दः नदीघोषः । न तु तद्विशेषणैः ॥

न तु तद्विशेषणैरिति वक्तव्यम् । इह माभूत् । घृतस्य तीव्रः चन्दनस्य मृदुरिति ।

किमर्थमिदमुच्यते । गुणेनेति प्रतिषेधं वक्ष्यति तस्यायं पुरस्तादपकर्षः । किं कारणं गुणेन नेत्युच्यते न पुनर्गुणवचनेन नेत्युच्यते । नैवं शक्यम् । इह हि न स्यात् । काकस्य कार्ष्ण्यम् । कण्टकस्य तैक्ष्ण्यम् । बलाकायाः शौक्ल्यमिति । एतदेव तस्मिन्योगे उदाहरणम् । यद्वै ब्राह्मणस्य शुक्लाः वृषलस्य कृष्णा इत्यसामर्थ्यादत्र न भविष्यति । कथमसामर्थ्यम् । सापेक्षमसमर्थं भवतीति । द्रव्यमत्रापेक्ष्यन्ते दन्ताः । तस्माद्गुणेन नेति वक्तव्यम् । गुणेन नेत्युच्यमाने तत्स्थैश्चगुणैरिति वक्तव्यम् । तत्स्थैश्च गुणैरित्युच्यमाने न तु तद्विशेषणैरिति वक्तव्यम्' ॥

Kaiyaṭa's remarks on तत्स्थैः are as follows :—

**'तत्स्थैरिति'** । तच्छब्देन संनिधानाद्गुण एव परामृश्यते । तेनायमर्थः । स्वात्मनि ये गुणाः अवस्थितास्तैः सह समासो न च स्वात्मन्यवस्थानं गुणानां संभवति भेदनिबन्धनस्वान्मुख्याधाराधेयभावस्य सर्वस्य च गुणस्य द्रव्याश्रयत्वात् । तस्मादभिधानव्यापारापेक्षया तत्स्थत्वमुच्यते । इह केचिद्गुणाः शब्देन द्रव्यान्निष्कृष्टा एव प्रत्याय्यन्ते न तु द्रव्यस्योपरञ्जकत्वेन । यथा चन्दनस्य गन्ध इति । सर्वदा वैयधिकरण्यमेव गुणगुणिनोः न कदाचिच्चन्दनं गन्ध इति सामानाधिकरण्यं भवति । शुक्लादयस्तु गुणाः कदाचिन्निष्कृष्टरूपाः शब्दैरुच्यन्ते पटस्य शुक्ल इति कदाचिद् द्रव्येणैकत्वमापन्नाः शुक्लः पट इति । तस्माद् द्विविधगुणसद्भावात्तत्स्थैरिति विशेषणं रूपादिगुणपरिग्रहार्थमुपात्तमिति ।

On बलाकायाः शौक्ल्यम् Kaiyaṭa says as follows:—

'अथ बलाकायाः शौक्ल्यमिति समासः कस्मान्न भवति । तत्स्थं हि शौक्ल्यम् । सर्वदा वैयधिकरण्येन संबन्धात् । नैष दोषः । शौक्ल्यशब्देन शुक्लो गुणोऽभिधीयते । शुक्लशब्दस्य द्रव्ये वर्त्तमानस्य तस्मिन्नेव प्रवृत्तिनिमित्ते भावप्रत्ययविधानात् । न चासौ तत्स्थः । अभेदाध्यवसायेन द्रव्यं प्रत्यनुरञ्जकत्वदर्शनाच्छुक्लः पट इति । अर्थस्य च तत्स्थत्वमाश्रीयते इति शब्दभेदेऽप्यर्थस्याभेदान्नास्ति शुक्लस्य गुणस्य तत्स्थत्वम् ॥'

On the whole Malli. follows Kaiyaṭa's view that the genitive is not compounded with words like शुक्ल which are used as adjectives and also as nouns ( गुण and गुणी ).

**Stanza 7—**

**सद्रत्नमुक्ताफलवज्रभाञ्जि.** रत्न means a precious stone. मुक्ताफल (pearls) and वज्र (diamonds) are included in रत्न, they being special kinds of precious stones. ('नीलकं वज्रकं चेति पद्मरागश्च मौक्तिकम् । प्रवालं चेति विज्ञेयं पञ्चरत्नं मनीषिभिः'); still they are mentioned separately as ब्राह्मण and परिव्राजक in the expression ब्राह्मणपरिव्राजकन्याय, or as गो and बलीवर्द in the expression गोबलीवर्दन्याय. ब्राह्मण and परिव्राजक, गो and बलीवर्द stand in the relation of सामान्य (general) and विशेष (particular). मुक्ताफल and वज्र stand in the same relation with रत्न.

The Jaya. notices सद्रत्नमुक्ताफलवज्रयुञ्जि as another reading.

सद्रत्नमुक्ताफलवज्रभाञ्जि, विचित्रधातूनि, and सकाननानि are adjectives going both with मेरोः शिरांसि and गृहाणि.

**Stanza 8—**

**हिमाद्रिटङ्कात्.** The singular is used in the sense of the plural. जातिवाचक names (class-names) are in Sanskrit used either in the singular or in the plural. "जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्" । १।२।५८॥ *e.g.* ब्राह्मणाः पूज्याः । ब्राह्मणः पूज्यः । The sense of the verse is that the rays of the brilliant jewels, with which the walls, and the floors of the houses were inlaid, coming out from windows, looked like the currents of the Ganges (they being white) coming out of the slopes of the Himâlayas.

Here houses are compared to the slopes of the Himâlayas and the rays of jewels to the currents of the Ganges. We have here a comparison between two statements and though one इव is used, गङ्गाम्बुपातप्रतिमाः being equal to गङ्गाम्बुपाता इव, the figure is अनेकेवा वाक्यार्थोपमा. Daṇḍî defines वाक्यार्थोपमा as follows:—

'वाक्यार्थेनैव वाक्यार्थः कोऽपि यद्युपमीयते ।
एकानेकेवशब्दत्वात् सा वाक्यार्थोपमा द्विधा ॥'

The following instances illustrate एकेवा वाक्यार्थोपमा and अनेकेवा वाक्यार्थोपमाः—

'त्वदाननमधीराक्षमाविर्दशनदीधिति ।
भ्रमद्भृङ्गमिवालक्ष्यकेसरं भाति पङ्कजम् ॥'
'नलिन्या इव तन्वङ्ग्यास्तस्याः पद्ममिवाननम् ।
मया मधुव्रतेनेव पायं पायमरम्यत ॥'

Compare also the following verse for अनेकेवा वाक्यार्थोपमाः—

"ततः प्रतस्थे कौबेरीं भास्वानिव रघुर्दिशम् ।
शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव ॥" (रघु० ४; ६६).

On this Malli. says:—'अनेकेनेव शब्देनेयमुपमा । यथाह दण्डी:—
" एकानेकेवशब्दत्वात् सा वाक्यार्थोपमा द्विधा ॥ " इति ॥'

**Stanza 9—**

**धर्म्यासु**=not away from religion, religious, holy, purifying. The word is formed from धर्म by the addition of यत्. "धर्मपथ्यर्थन्यायादनपेते" ४।४।९२॥ *e. g.* धर्मादनपेतं धर्म्यम् । पथ्यम् । अर्थ्यम् । न्याय्यम्. The word qualifies both पत्नीषु and विद्यासु. धर्म्यासु (पत्नीषु) pure; because practising religion with their husbands according to the dictates of the *S'rutis* and the *Smritis*. धर्म्यासु (विद्यासु) purifying, teaching religion.

**अधिगतासु काले.** The time for commencing learning and entering upon family-life for different castes is thus described by Yâjñyavalkya:—

'गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम् ।
राज्ञामेकादशे सैके विशामेके यथाकुलम् ॥
उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् ।
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् ॥' (याज्ञ० १;१४-१५).

'गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया ।
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥
अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ।" (याज्ञ० १;५१-५२).

**Stanza 10—**

**पुत्रीयता.** A denominative is formed from a noun in the sense of 'wishing it of one's self' by adding to it क्यच् (य). If the base to which is affixed क्यच् ends in अ, अ is changed to ई, and if it ends in any other vowel, it is lengthened. काम्यच् (काम्य) is also added in the same sense. The base so formed is conjugated in all the tenses and takes Para. terminations. आत्मनः पुत्रमिच्छति पुत्रीयति or पुत्रकाम्यति It should be noted that क्यच् can not be added to पुत्र in the sense of राज्ञः पुत्रमिच्छति.

क्यच् has another sense also. It is added to an उपमान in the objective or locative case in the sense of 'behaving.' (उपमानादाचारे ३।१।१०॥ अधिकरणाच्चेति वक्तव्यम्) *e. g.* पुत्रीयति (पुत्रमिवाचरति) छात्रम् (He acts towards a pupil as towards his sons), प्रावारीयति कम्बलम्, विष्णूयति द्विजम्, प्रासादीयति (प्रासादे इवाचरति) कुट्याम्, पर्यङ्कीयति मञ्चके, कुटीयति प्रासादे. काम्यच् is not added in this sense.

If the उपमान is the agent of the action of behaving, क्यङ् (य is) added to it in the sense of 'behaving' (कर्तुः क्यङ् सलोपश्च ३।१।११॥)

The base ending in क्यङ् takes Atma. terminations. Before क्यङ् the preceding vowel is lengthened, and स् dropped necessarily in the case of ओजस् and अप्सरस् and optionally in the case of other words ending in स्. ('ओजसोऽप्सरसो नित्यमितरेषां विभाषया') *e. g.* श्येनायते (श्येन इवाचरति) काकः, कृष्णायते, ओजायते (ओजस् is to be understood in the sense of ओजस्विन्. 'ओजःशब्दो वृत्तिविषये तद्वति'), अप्सरायते, यशायते or यशस्यते, विद्वायते or विद्वस्यते.

क्विप् is added to all nouns in the sense of क्यङ् ('सर्वप्रातिपदिकेभ्यः क्विप् वा वक्तव्यः') क्विप् is wholly dropped. The base is to be considered as a root of the 1st conjugation. It takes Para. terminations *e. g.* कृष्णति (कृष्ण इवाचरति), दिनन्ति यामिन्यः (Nights act like days), as in the following verse:—

'सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः ।
यामिनयन्ति दिनानि च सुखदुःखवशीकृते मनसि ॥'

**विपक्किमज्ञानगतिः.** 'विपक्किमज्ञानगतिरिति विपाकेन निर्वृत्तं यत्पूर्वजन्मकृतमनिवर्त्तनीयं कर्म तस्योमतपःप्रत्ययाद्विनोपदेशाज्ज्ञानात्प्रवृत्तिर्बुद्धावस्य जातेत्यर्थः' जय०.

This makes the dissolution of the compound complicated. It may be dissolved as follows:—विपक्किमं च तत् ज्ञानं च विपक्किमज्ञानं तस्य गतिराश्रयः that is, he was the resort of perfected knowledge. This will give it the same sense as that of विपक्किमज्ञाननिधिः the reading adopted by मल्लिनाथ.

विपक्किम, and दत्रिम, and विहित्रिम (in St. 13) are formed by affixing त्रिम. It is added to roots that are mentioned in the Dhâtupâṭha with the initial डु in the sense of तेन (धातुवाच्यभावेन) निर्वृत्तम्. The initial डु is इत् by "आदिर्ञिटुडवः" १।३।५॥. डुपचष् पाके, डुलभष् प्राप्तौ, डुभृञ् धारणपोषणयोः, डुदाञ् दाने, डुधाञ् धारणपोषणयोः, डुकृञ् करणे, and डुक्रीञ् द्रव्यविनिमये are among the roots of this kind.

**ऋष्यशृङ्गः.** Malli.'s reading is ऋश्यशृङ्गः. ऋश्य and ऋष्य both mean 'a white-footed antilope.' ऋष्यशृङ्ग is the more general form. This is the form of the word used by Malli. himself in Raghu. "ऋष्यशृङ्गादयस्तस्य सन्तः सन्तानकाङ्क्षिणः । आरेभिरे जितात्मानःपुत्रियामिष्टिमृत्विजः ॥" रघु०. १०. ३. On this Malli. says "ऋष्यशृङ्गो नाम कश्चिदृषिः तदादयः."

Stanza 11—

**कृतात्मा.** Jaya. explains it as वशीकृतात्मेति भावः.

**क्रतुम्.** क्रतु is here used in the sense of इष्टि. The following verse shews the difference between क्रतु, इष्टि and यागः—

"इष्टिस्तु चरुणा प्रोक्ता यागस्तु पशुना स्मृतः ।
एतच्छेषः क्रतुः प्रोक्तो होमान्यत् पूजनं स्मृतम् ॥"

**ज्ञाताशयस्तस्य** means ज्ञाततदाशयः. It is like श्रुतदेहविसर्जनः पितुः, which means श्रुतपितृदेहविसर्जनः. When a word is connected with a dependent member of a compound, it should be put in the compound. तस्य and पितुः are connected with आशय and देहविसर्जन, which are both dependent as the compounds are बहुव्रीहि (अन्यपदार्थप्रधानो बहुव्रीहिः). They should therefore have been included in the compounds. In their present forms, the compounds are सापेक्ष, their dependent members being connected with तस्य and पितुः which are not included in them. 'समर्थानां पदविधिः' २।१।१॥ precludes सापेक्ष words from being compounded (सापेक्षमसमर्थं भवति).

'सापेक्षे प्रत्ययो न स्यात् समासो वा कथञ्चन ।
सापेक्षं तद्विजानीयादसमस्तविशेषणम् ॥'

If the सापेक्ष word is the principal word in a compound, the compound is allowed. 'यदि सापेक्षमसमर्थं भवतीत्युच्यते राजपुरुषो दर्शनीयः अत्र वृत्तिर्न प्राप्नोति । नैष दोषः । प्रधानमत्र सापेक्षम् । भवति च प्रधानस्य सापेक्षस्यापि समासः।' But if the सापेक्ष word is a dependent member of a compound, the compound is not allowed. Then how are 'देवदत्तस्य गुरुकुलम्' 'देवदत्तस्य गुरुपुत्रः' 'देवदत्तस्य दासभार्या' (where देवदत्तस्य is connected with गुरु and दास) 'किमोदनः शालीनाम्' (*i. e.* केषां शालीनामोदनः), 'सक्त्वाढकमापणीयानाम्' (*i. e.* आपणीयानां सक्तूनामाढकम्) to be explained? These are to be considered correct; because they are गमक, that is, they convey the sense that is desired to be conveyed by a sentence. 'इह समानार्थेन वाक्येन भवितव्यं समासेन च ।' 'गमकत्वात्समासः' means 'the compound is formed because it clearly conveys the desired sense, the sense that can be conveyed if the compound were not formed and words used uncompounded.'

**सुतानुबन्धि.** Malli. says it is formed by the addition of इनि (इन्) a possessive affix, to सुतानुबन्ध. सुतस्य अनुबन्धः सुतानुबन्धः सोऽस्य ऽस्मिन्वा अस्तीति सुतानुबन्धि. It is not formed by affixing णिनि (इन्) which shews ताच्छील्य (habit, nature) by the Sûtra 'सुप्यजातौ णिनिस्ताच्छील्ये' ३।२।७८॥ for though the word 'सुपि' can be supplied from a preceding Sûtra, it is mentioned to shew that it can not be added to a root to

which a preposition is prefixed. Malli. follows the view taken by Vṛittikára who says: 'सुपीति वर्त्तमाने पुनः सुब्ग्रहणमुपसर्गनिवृत्त्यर्थम्.' In his commentary on खविचारिणः C. 5, St. 13 also, Malli. takes the same view. But this does not seem to be the sound view. In his explanation of the Sûtra Bha. Dî. criticizes the view as follows:—

'इह वृत्तिकारेणोपसर्गभिन्न एव सुपि णिनिरिति व्याख्याय उत्प्रतिभ्यामाङि सर्त्तेरुपसंख्यानमिति पठितम्। हरदत्तमाधवादिभिश्च तदेवानुसृतम्। तच्च भाष्यविरोधादुपेक्ष्यम्। प्रसिद्धश्चोपसर्गेऽपि णिनिः। स बभूवोपजीविनाम्। अनुयायिवर्गः। पतत्यधो धाम विसारि। न वञ्चनीयाः प्रभवोऽनुजीविभिरित्यादौ॥'

Jaya.'s view is as follows:—

"'सुतानुबन्धि' इति पाठान्तरम्। सुतानुबन्द्धुं शीलमस्येति। 'सुप्यजातौ णिनिः—' सुपीत्यनुवर्त्तमाने सुब्ग्रहणमुपसर्गनिवृत्त्यर्थमिति केवलस्योपसर्गस्य निवृत्त्यर्थं द्रष्टव्यम्। अन्यथा 'जाताविति किं ब्राह्मणानामन्त्रयिता' इति न युज्यते। आङित्यस्योपसर्गत्वात्॥"

## Stanza 12—

**अङ्गान्ययाक्षीदभितः प्रधानम्**=Performed subsidiary sacrificial rites before and after the principal ceremony.

Jaya. runs as under:—

'अङ्गान्ययाक्षीदभितः प्रधानमिति। यद्देवतामयो यागः सा देवता तत्र प्रधानम्। पुत्रफलत्वाद्विष्णुः प्रधानम्। तमिष्ट्वा तस्योभयतः पार्श्वयोर्यान्यङ्गानि चक्षुरादीनि देवतान्तराणि तान्ययाक्षीत्। अग्नावाहुत्या पूजितवान्। . . . . शेषाण्यशेषीदिति स्वाङ्गं विष्णुमिष्ट्वा शेषाणि प्रतिकृतानि पिष्टकमयानि सुतानां संपदर्थमग्नौ हुतवान्।'

## Stanza 13—

**हुतोच्छिष्टम्**=The remaining portion of the oblation. Malli. says that as it was after the sacrifice that the food consisting of rice boiled in milk was presented to him by a divine person, it is here called हुतशिष्ट. It is described as follows in the Raghu.:—

'अथ तस्य विशांपत्युरन्ते काम्यस्य कर्मणः।
पुरुषः प्रबभूवाग्नेर्विस्मयेन सहर्त्विजाम्॥
हेमपात्रगतं दोर्भ्यामादधानः पयश्चरुम्।
अनुप्रवेशादाद्यस्य पुंसस्तेनापि दुर्वहम्॥
प्राजापत्योपनीतं तदन्नं प्रत्यग्रहीन्नृपः। (रघु० १०. ५०–५२).

## Stanza 14—

**कौशल्यया.** This reading is adopted in the text as it is found in the majority of the Mss. collated for settling the text. Both Malli.

and Jaya. read कौसल्यया. Malli.'s note on the word in the Raghu. C.X. St. 55 is as follows :—

"कौ पृथिव्यां सलति गच्छतीति कोसलः । सल गतौ । पचाद्यच् । कुशब्दस्य पृषोदरादित्वाद्गुणः । कोसलस्य राज्ञोऽपत्यं स्त्री कौसल्या । "वृद्धेत्कोसलाजादाञ्ञ्यङ्" इति ञ्यङ् । 'यङश्चाप्' इति चाप् । अत एव सूत्रे निर्देशात् कोसलशब्दोऽन्त्यसकारमध्यमः ॥'

केकयीतः. केकय—was the name of a country, the name of the king of the place was कैकय or कैकेय and that of his daughter केकयी, कैकयी or कैकेयी.

शत्रुघ्न. Bha. Dī. explains the formation of the word in a different way from Malli. On "अमनुष्यकर्तृके च" ३।२।५३॥ after having given जायाघ्नस्तिलकालकः, पतिघ्नी पाणिरेखा, and पित्तघ्नं घृतम् as instances where टक् is added to हन्, the agent of the action being other than a man, he says 'अमनुष्येति किम् । आखुघातः शूद्रः । अथ कथं बलभद्रः प्रलम्बघ्नः । शत्रुघ्नः । कृतघ्न इत्यादि । मूलविभुजादित्वात्सिद्धम् ।'. He refers to the Vártika 'कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्' on the Sútra 'तुन्दशोकयोः परिमृजापनुदोः' ३।२।५॥. मूलविभुजादि is an आकृतिगण, that is, it is not a limited list, but any word of a similar form may be considered as belonging to the list.

लक्ष्मणेन सह शत्रुघ्नं प्रासोष्ट. The Sùtra "सहयुक्तेऽप्रधाने" २।३।१९॥ teaches that the word in the instrumental case connected with सह is अप्रधान (subordinate). Malli. says that this subordination is only शाब्द (verbal). The word सह shews that words joined by it are to be simultaneously construed with the verb with which they are connected. Thus in the present case सह shews that the प्रसव of लक्ष्मण and शत्रुघ्न was समकालीन. Lakshmaṇa's seniority to S'atrughna is therefore in no way harmed.

Bha. Di.'s remarks on this Sútra are as follows:—

'सहार्थेन युक्तेऽप्रधाने तृतीया स्यात् । पुत्रेण सहागतः पिता' ( सिद्धा० कौ० )

On this the Manoramâ runs thus:—

'पुत्रेणेति । पितुरत्र क्रियासंबन्धः शाब्दः पुत्रस्य तु आर्थ इति तस्याप्राधान्यम् । अप्रधानग्रहणं शक्यमकर्तुं न चैवं पितुरपि तृतीयापत्तिः । तत्र प्रातिपदिकार्थमात्रे अन्तरङ्गत्वात्प्रथमोपपत्तेः पितुरागमनमित्यादौ कारकविभक्तेः प्राबल्याच्च ॥'

Stanza 15—

उपानेष्ट. नी is उभयपदी and so takes Atma. terminations when the result of the action goes to the agent. But even when the result

'प्रणाय्य इति निपात्यतेऽसंमतावभिधेये (अविद्यमाना संमतिरस्मिन्निस्यसंमतिः) प्रणाय्यश्चोरः। असंमताविति किम्। प्रणेयोऽन्यः। यद्येवं कथमेतत्। ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्रणाय्यायान्तेऽवासिने नान्यस्मै कस्मैचनेति। संमतिरभिलाषोऽप्युच्यते। तदभावेन निष्कामतया मोक्षार्थे यतमानायान्तेवासिने प्रणाय्याय ब्रह्म प्रब्रूयादिति प्रुज्यते॥' काशि०.

## Stanza 73—

**वनौकसाम्.** Jaya. derives ओकस् from उच् to collect. 'उच समवाये। अस्मादौणादिकोऽसुन्। पृषोदरादित्वाद्वर्णविपर्ययः॥.' *cf.* the Greek word *Oikos*=a house.

## Stanza 75—

**परिभावीनि.** The form is either परिभावीनि or परिभावीणि. न् being at the end of a प्रातिपदिक, is optionally changed to ण्. "प्रातिपदिकान्तनुम्विभक्तिषु च"। ८। ४। ११॥.

## Stanza 76—

**हंसकोकिलम्.** Another form is हंसकोकिलाः. The Dvandva compound of words signifying trees, deer, grass, grain, articles used in seasoning food, beasts, birds and that of अश्व and वडव, पूर्व and अपर, and अधर and उत्तर is either समाहारद्वन्द्व or इतरेतरद्वन्द्व. "विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्" २।४।१२॥ *e. g.* (वृक्ष) प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः, (मृग) रुरुपृषतम्, रुरुपृषताः, (तृण) कुशकाशम्, कुशकाशाः, (धान्य) व्रीहियवम्, व्रीहियवाः, (व्यञ्जन) दधिघृतम्, दधिघृते, (पशु) गोमहिषम्, गोमहिषाः, (शकुनि) तित्तिरिकपिञ्जलम्, तित्तिरिकपिञ्जलाः, अश्ववडवम्, अश्ववडवौ; पूर्वापरम्, पूर्वापरे; अधरोत्तरम्, अधरोत्तरे. It should be noted that in हंसकोकिलम्, हंस and कोकिल must both be taken in the plural number. हंसाश्च कोकिलाश्च हंसकोकिलं हंसकोकिला वा. If it is हंसश्च कोकिलश्च, then the compound would be हंसकोकिलौ only. This is taught by the Vârtika 'बहुप्रकृतिः फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानाम्।'.

## Stanza 80—

**धायैरामोदमुत्तमम्.** Jaya. explains it differently. 'धायैरामोदमुत्तममामोदं प्रियासङ्गमेन हर्षं यावत् विरहिभ्यो दत्तस्य दुःखस्य धायैः पोषकैरित्यर्थः। उत्तममिति क्रियाविशेषणमुत्तममामोदं धायैः कुसुमानां परिमलं धारयद्भिरिति व्याख्याने अनित्यत्वात्कृत्प्रयोगे कर्मषष्ठ्यभावः।'. Thus according to Jaya. the अन्वय is 'उत्तममामोदं (यावत् इति शेषः, अत्यन्तसंयोगे द्वितीया) मातृभ्यो दुःखस्य धायैः'. He takes आमोद in the sense of हर्ष. The reason why he adopts this construction is that धाय being a कृदन्त, the object of it must take the geni-

tive case according to the Sûtra "कर्तृकर्मणोः कृति" २।३।६५॥. On this Sûtra the Kâśikâ says:—'कृत्प्रयोगे कर्त्तरि च कर्मणि च षष्ठीविभक्तिर्भवति । भवतः शायिका । भवत आसिका । कर्मणि । अपां स्रष्टा । पुरां भेत्ता । वज्रस्य भर्त्ता । कर्तृकर्मणोरिति किम् । शस्त्रेण भेत्ता । कृतीति किम् । तद्धितप्रयोगे मा भूत् । कृतपूर्वी कटम् । भुक्तपूर्वी ओदनम् । शेष इति निवृत्तं पुनः कर्मग्रहणात् । इतरथा हि कर्त्तरि च कृतीति ब्रूयात् ।'. Malli., however, supplies शेषे in the Sûtra. Jaya. also considers the use of the genitive with a कृदन्त as अनित्य. Bha. Dî. takes the same view. 'अथ कथं "धार्येरामोदमुत्तमम्" इति भट्टिः । अत्राहुः । अनित्यमिदम् । "तदर्हम्" इति निर्देशात्' मनो०. On "तदर्हम्" ५।१।११७॥ we find the following remarks in the Manoramâ :—

'तदर्हः अर्हशब्दः पचाद्यजन्तः तद्योगे कर्मणि षष्ठी प्राप्ता । सौत्रो विभक्तिव्यत्यय इत्येके । अन्ये तु कर्तृकर्मणोरिति षष्ठ्या अनित्यत्वे लिङ्गमिदं तेन "धार्येरामोदमुत्तमम्" इति भट्टिप्रयोगः समाहित इत्याहुः ।'.

**चेतयः स्याज्ज्वलो न कः**=' What living being (who is in separation) will not burn (because to persons in separation such winds are tormenting.' ज्वलः may also be taken in the sense of दीप्तिमान्. 'वायुभिश्चेतःसन्तोषात् सर्व एव ज्वलो दीप्तिमान् स्यात् इति वा'; *i. e.* such winds would delight all except persons like myself. To me they simply give pain by nourishing excellent fragrance.

## Stanza 81—

**अवश्याय**=dew. It is formed by affixing ण (अ which causes Vṛiddhi) to अवश्यै. The Sûtra is "श्याऽऽद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च" ३।१।१४१॥ श्यै, roots ending in आ, व्यध्, आस्रु, संस्रु, अतीण् (इ with अति), अवसा (सो with अव), अवहृ, लिह्, श्लिष्, and श्वस् take the affix ण in the active sense. 'आकारान्तत्वादेव श्यायतेः प्रत्यये सिद्धे पुनर्वचनं बाधकबाधनार्थम् । उपसर्गे कं ("आतश्चोपसर्गे" ३।१।१३६. *e. g.* प्रस्थः, सुग्लः, सुम्लः) बाधित्वाऽयमेव भवति । अवश्यायः, प्रतिश्यायः । दायः । धायः । व्याधः । आस्रावः । संस्रावः । अत्यायः । अवसायः । अवहारः । लेहः । श्लेषः । श्वासः ॥ काशि०. श्यै (1st Conj. Atma.) means to be congealed.

**चित्तसंस्रावम्**. 'संस्रवतीति संस्रावः । श्याद्व्यधेति णः कर्त्तरि । चित्तं संस्रावं चलत्कुर्वन्तीत्यर्थः तयोर्विशेषणसमासे राजदन्तादित्वात्परनिपातः ।' Jaya.

## Stanza 82—

**अवहारः**. Malli.'s reading is अपहारः. The Sûtra "श्याद्व्यध—" contains अवहृ and not अपहृ. For the word अपहार, however, Malli. quotes the

same Sûtra "इयाद्वध—". There must therefore be two readings in the Sûtra अवह and अपह.

## Stanza 84—

**दृष्ट्वा.** When two or more roots have the same agent, क्त्वा is added to the root which denotes former action. "समानकर्तृकयोः पूर्वकाले" ३।४।२१॥ *e. g.* भुक्त्वा व्रजति। स्नात्वा भुक्त्वा पीत्वा व्रजति।. Here the actions of eating, bathing, eating, and drinking are पूर्वकाल, *i. e.* take place before the action of going. In the present verse to bring out समानकर्तृकत्व of दृष्ट्वा with the principal verb, we must supply स्थितस्य. दृष्ट्वा स्थितस्य मम मानसम् &c. 'दृष्ट्वा मम स्थितस्येत्यर्थाध्योज्यमन्यथा कथं समानकर्तृकत्वम्' Jaya.

## Stanza 85—

**ही.** Alas. 'ही विस्मयविषादयोः दुःखहेतौ च' अने० सं० of हेम०.

## Stanza 86—

**हायन.** It is derived from the root हा. "हश्च व्रीहिकालयोः" ३।१।१४८॥ teaches the formation of it. ण्युट् ( अन, by "युवोरनाकौ" ७।१।१॥. The augment य् is affixed as ण्युट् is णित् by "आतो युक् चिण्कृतोः" ७।३।३३॥ ) is affixed to हा 'to abandon' and हा 'to go' ( जहाति and जिहीते ) in the active sense, when the words so formed mean व्रीहि ( rice ) and काल ( year. संवत्सर ). 'जहात्युदकमिति हायनो व्रीहिः ( उदकावधिकवर्धनादुदकं जहाति परित्यज्य वर्धते इत्यर्थः )। जहाति भावानिति हायनो वर्षम्। जिहीते प्राप्नोतीति वा॥ सिद्धा० कौ०. 'हायना नाम व्रीहयः। जहत्युदकमिति कृत्वा। काले। हायनः संवत्सरः जहाति भावानिति।' काशि०. Malli. understands the Sûtra somewhat differently. He forms हायन in the sense of व्रीहि from हा 'to abandon' and हायन in the sense of वर्ष from हा 'to go,' applying "यथासंख्यमनुदेशः समानाम्" १।३।१०॥ to the Sûtra "हश्च व्रीहिकालयोः".

**शारङ्ग** should be taken in the sense of 'deer.' 'शारङ्गश्चातके ख्यातः शबले हरिणेऽपि च' इति तालव्यशादवजयः.

**लावकौ** is the reading of D. There the word should be taken as formed by the active affix अक as in कारक, हारक, दायक, &c. "ण्वुल्तृचौ" ३।१।१३३॥. ण्वुल् being णित् causes Vṛiddhi. लवक is formed by the Sûtra "प्रुसृ ( स्रु ) ल्वः समभिहारे वुन्" ३।१।१४९॥. The roots प्रु 'to jump' सृ (or स्रु) and लू take the affix वुन् ( The Guṇa-making अक ) in the sense of समभिहार. समभिहार means 'repetition', and as repetition gives skill, it is to be taken here in the secondary sense of 'doing a thing well.' 'समभिहारग्रहणेन साधुकारित्वं लक्ष्यते। भूयः सहचरात्। यो हि भूयो यां क्रियां

करोति स तत्र कौशलं लभते इति तस्य साधुकारित्वं गम्यते इत्यर्थः । साधुकारित्वो-त्तथा बहुशो वुट्करणे न वुन् इति बोध्यम् । ' e. g. प्रवकः । सरकः (स्रवकः) । लवकः । 'साधुकारिणि वुन्विधानात्सकृदपि यः सुष्ठु करोति तत्र भवति । बहुशो यो वुटं करोति तत्र न भवति । ' काशि०.

Stanza 87—

**प्रणिधि.** 'प्रणिधीयते नियुज्यते कार्येषु प्रणिधिः । उपसर्गे घोः किः । ' जय०

Stanza 89—

**शोकापनुदम्.** परिमृज् and अपनुद् take the affix क with तुन्द and शोक respectively as their *upapadas* as objects of these actions when the words so formed mean 'idle', and 'bringing happiness' respectively. 'तुन्दं परिमार्ष्टीति तुन्दपरिमृजोऽलसः' । अन्यत्र तुन्दपरिमार्जः । शोकमपनुदतीति शोकापनुदः सुखस्याहर्त्ता । 'यश्च संसारासारत्वोपदेशेन शोकमपनुदति स शोकापनोदः ।'.

Stanza 91—

**सुरापैः.** The Fem. of सुराप is सुरापी, and of सामग, सामगी. पा 'to drink' takes टक् (अ) with सुरा and शीधु as its *upapadas*. The affix being कित्, the final आ of पा is dropped by "आतो लोप इटि च" ६ । ४ । ६४ ॥. The affix टक् being टित्, the Fem. is formed by ङीप् (ई). "टिड्ढाणञ्—" ४ । १ । १५. We have similarly शीधुप (Fem. शीधुपी). But क्षीरप has क्षीरपा Fem. and सुराप, in the sense of सुरां रक्षति has सुरापा Fem.

Stanza 95—

**सत्त्वमेजयः.** It is formed from एजृ कम्पने (एज् 10th. Conj. 'to shake') by affixing खश् (अ) to it, the *upapada* सत्त्व being its object. अरुष्, द्विषत्, and words ending in a vowel take the augment मुम् (म्) when they are used as *upapadas* of a root to which खश् or खच् is affixed. (*vide* notes on C. I St. 1). जनमेजयः is similarly formed.

Stanza 96—

**उत्तीर्णौ.** The past participle is active here. The Sûtra "गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च" ३।४।७२॥ shews that गत्यर्थ roots have त affixed to them in the active sense as well as passive and abstract sense. e. g. गतो देवदत्तो ग्रामम् । गतो देवदत्तेन ग्रामः । गतं देवदत्तेन । &c. Some of the roots enumerated in the Sûtra are intransitive, but they are mentioned separately; because they are transitve when preceded by prepositions. 'श्लिषादयः सोपसर्गाः सकर्मका भवन्ति तदर्थमे-

षामुपासनम् ।' काशि०. In 'कृच्छ्रं महत्तीर्ण इति प्रियार्हाम्...' रघु० १४. ६ तीर्ण has as here an active sense.

## Stanza 97—

**हनूमन्तम्.** The word is either हनूमत् or हनुमत्. The affix मत् shews censure. His chin was broken and hence his name. 'तस्य किल जातमात्रस्य आदित्यरथं गृह्णतो हनुद्वयं भग्नमिति श्रूयते'। जय०. The story is mentioned in the Râmâyaṇa as follows:—

'अभ्युत्थितं ततः सूर्यं बालो दृष्ट्वा महावने ।
फलं चेति जिघृक्षुस्त्वमुत्प्लुत्याभ्युत्थितो दिवम् ॥
शतानि त्रीणि गत्वाथ योजनानां महाकपे ।
तेजसा तस्य निर्धूतो न विषादं गतस्ततः ॥
त्वामप्युपगतं तूर्णमन्तरिक्षं महाकपे ।
क्षिप्तमिन्द्रेण ते वज्रं कोपाविष्टेन तेजसा ।
तदा शैलाग्रशिखरे वामो हनुरभज्यत ।
ततोऽभिनामधेयं ते हनुमानिति कीर्तितम् ॥

किष्कि० का० C. 66.

**अल्पम्पचान्.** The Sûtra "मितनखे च" ३।२।३४॥ teaches that पच् takes खश् when preceded by मित and नख as objects. मितं पचति मितम्पचा ब्राह्मणी । नखम्पचा यवागूः ।. This Sûtra is given to shew that the *upapada* may be a word which does not mean measure; for the preceding Sûtra "परिमाणे पचः" ३।२।३३ ॥ sanctions खश् when the *upapada* is a परिमाणवाचक word, as in प्रस्थंपचा स्थाली । द्रोणंपचः । खारिम्पचः कटाहः ।. On the Sûtra "मितनखे च" the Kâśikâ says:—'अपरिमाणार्थं आरम्भः ।'. The च in the Sûtra evidently connects it with the preceding Sûtra. "परिमाणे पचः" (scil खश्), "मितनखे च" (पचः खश्). In many Sûtras च is similarly used. *e. g.* "भिक्षासेनादायेषु च" ३।२।१७॥ preceding "चरेटः" ३।२।१६॥, "वयसि च" ३।२।१०॥ preceding "हरतेरनुद्यमनेऽच्" ३।२।९॥, "नाडीमुष्टयोश्च" ३।२।३०॥ preceding "नासिकास्तनयोर्ध्माधेटोः" ३।२।२९॥. The words मित and नख are not taken as अर्थपर ( implying their synonyms also ) either in the Kâśikâ or in Kaumudî. Hence Malli. shews his own अरुचि by saying "मितनखे च" इति मितशब्दस्यार्थपरत्वादनुक्तसमुच्चयार्थकाराद्वा अल्पशब्दोपपदात्पचेः खशित्याहुः'. He refers to Jaya. and other Commentators. Jaya. says 'अल्पं पचन्तीति मितनखे चेति मितेत्यर्थग्रहणात् खश् । चकारस्यानुक्तसमुच्चयार्थत्वाद्वा ।'. This is simply a way to justify the form as it is used by Bhaṭṭi, 'स्थितेषु प्रयोगेषु समर्थनमेतत्' as Mammaṭa puts it.

### Stanza 98—

**अमितम्पचम्.** Malli. takes this to mean 'liberal' (बह्वन्नदम्). Bharatamallika also explains it as बह्वन्नप्रदम्. Jaya. says it means महासत्रिणम् ( a great sacrificer ).

**सर्वभोगीणम्.** For the change of न् to ण् *vide* notes on C. IV. St. 10.

### Stanza 99—

**असूर्यम्पश्यया.** It is असमर्थ compound, अ being connected with दृश् and not with सूर्य. *vide* notes on C. IV. St. 21.

### Stanza 100—

**ललाटन्तपम्**=scorching the forehead, very severe, hence standing above all. It is generally used in the literal sense. *cf.* 'सखे माधव ललाटन्तपस्तपति तपनः' Malati, Ac. I.; also in Raghu. 'हविर्भुजामेधवतां चतुर्णां मध्ये ललाटन्तपसप्तसप्तिः। असौ तपस्यत्यपरस्तपस्वी नाम्ना सुतीक्ष्णश्चरितेन दान्तः'॥ ( 13, 41 ).

**वाली.** There are two words वालिन् and वालि. 'वालिशब्दो नान्तः इदन्तश्च तथा च वाली वालिश्च कथ्यते इति शब्दभेदः' Jaya.

### Stanza 101—

**उग्रम्पश्येन**=Fierce-looking, hence wicked.

### Stanza 102—

The Com. on this verse is incomplete. Jaya. runs as follows:—

'प्रियंवदतया लोको मिथ्या वदति अहं प्रियंवदोऽपि नैव मिथ्या ब्रुवे वदामि। पूर्ववत् खच्। परन्तप शत्रूणामुपतापयितः॥ "द्विषत्परयोः—" इति खच्॥ तेन सुग्रीवेण सख्या मित्रेण दशग्रीवं निहन्तासि हनिष्यसि। हन्तेर्लुटि रूपम्। कीदृशं द्विषन्तपं शत्रूणामुपतापयितारम्। पूर्ववत् खच्॥'.

### Stanza 104—

**सर्वङ्कष°.** कष् is generally used in the sense of 'rubbing' *e. g.* 'कण्डूलद्विपगण्डपिण्डकषणोत्कम्पेन संपातिभिः' उत्त० अ० २. 'कषणकम्पनिरस्तमहाहिभिः' Kirâ. 5, 47, where Malli. explains कषणेन as meaning कण्डूयनेन. From 'rubbing' it comes to mean 'pervading' as here.

**सर्वङ्कषयशः शाखम्**=Having branches consisting of all pervading glory. कष् also means to injure. 'कष हिंसार्थः'. In 'सर्वङ्कषा भगवती भवित-

ष्यतैव' Malati. Ac. I. सर्वङ्कषा means 'all-destroying,' 'all-powerful'. Jaya. explains it as सर्वहरा. The word is formed by the Sûtra "सर्वकूलाभ्रकरीषेषु कषः" ३।२।४२॥. कष् takes the affix खच् (अ) when preceded by सर्व, कूल, अभ्र, and करीष as its objects. 'सर्वङ्कषः खलः। कूलङ्कषा नदी। अभ्रङ्कषो गिरिः। करीषङ्कषा वात्या।' काशि०.

The part शाखा and the whole तरु being both mentioned, the figure is समस्तवस्तुविषयं सावयवरूपकम्. 'यत्रावयवानामवयविनश्च सामस्त्येन निरूपणं निबध्यते तत्समस्तवस्तुविषयं रूपकम्' Vidyâ. or as Mammaṭa puts it 'समस्तवस्तुविषयं श्रौता आरोपिता यदि,' i. e. that is समस्तवस्तुविषयरूपक in which the आरोप्यमाण (विषयी, in this case शाखा and तरु) and आरोपविषय (in this case यशः and राम) are both श्रौत (शाब्द, expressed).

## Stanza 105—

वालिभानुम्. The compound admits of two solutions. वालिः भानुरिव वालिभानुः तम्, in which case it is उपमितसमास, formed according to the Sûtra "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" २।१।५६॥ or वालिरेव भानुः वालिभानुः तम् in which case it is मयूरव्यंसकादि formed by the Sûtra "मयूरव्यंसकादयश्च" २।१।७२॥. The first solution brings about उपमा, the second रूपक. Here it must be solved in the first way; because we have क्रतुमिव रामम् and not क्रतुमेव रामम्. It must be noted that the उपमित compound takes place only when the common property is not given. In पुरुषो व्याघ्र इव शूरः no compound takes place, because the सामान्यधर्म (शूरः) is given. In वालिभानुः, the common property असह्यत्वं is understood.

## Stanza 106—

We have क्षेमकारः or क्षेमङ्करः, प्रियकारः or प्रियङ्करः, and मद्रकारः or मद्रङ्करः.

## Stanza 107—

आशितम्भवम्. आशित must be taken in the active case (*vide* Notes on C. 4 St. 11) आशितः तृप्तः तस्य भवनमाशितम्भवनं तृप्तिः अशनं भोजनमित्यर्थः.

उत्क्रुष्टम्, वल्गितम्, शायितम्, and स्थितम् are all used as abstract nouns, the Past Par. affix त being added in the sense of भाव.

Jaya. explains बहुमन्यत &c. somewhat differently. 'पुण्यभाज इमे येषां स्वेच्छाविहारिणां चेष्टितमस्माकं तु शोकसन्तप्तानां न किञ्चिदस्तीति'.

### Stanza 109—

**हृदयङ्गमम्**=What is in the heart. गम् takes the affix खच् when preceded by an *upapada* as its object, when the word so formed is a proper noun. *e.g.* 'सुतङ्गमो नाम यस्य पुत्रः सौतङ्गमिः'. This is the Sûtra "गमश्च" ३।२।४७॥. हृदयङ्गम can not well be taken as a proper noun here. Malli. shews his own अरुचि by using the word मन्यते in 'हृद्गतस्येयं संज्ञेति मन्यते'. Jaya. says:—'स्वानुभवं हि वस्तु हृदयङ्गममित्युच्यते तेन संज्ञायामित्यधिकृत्य गमश्चेति खच्।'. Amara gives it the sense of 'coherent' 'संगतं हृदयङ्गमम्'. But the word generally means 'lovely' 'pleasant'; *e. g.* 'हृदयङ्गमः परिहासः' Malati. Ac. 3. It is used in Raghu. and Ku. 'वल्लकी च हृदयङ्गमस्वना वल्गुवागपि च वामलोचना' (रघु० १९. १३.). 'क्व नु ते हृदयङ्गमः सखा कुसुमायोजितकार्मुको मधुः' (कुमा० ४. २४), 'इति तेभ्यः स्तुतीः श्रुत्वा यथार्था हृदयङ्गमाः' (कुमा० २. १६). On all these Malli. says 'खच्प्रकरणे "गमेः सुप्युपसंख्यानम्" इति खच्प्रत्ययः।'. This Vârtika is to be applied where there is no संज्ञा. 'असंज्ञार्थमिदम्। मितङ्गमो हस्ती' सिद्धा० कौ०.

### Stanza 110—

**अत्यन्तगः**=Destroyer. 'अत्यन्तगः विनाशयिता।' Jaya. In Malli.'s reading, it must be taken to mean 'that has reached the climax'. स्यात्=शक्तो भवेत्. The genitive सङ्क्रन्दनस्य shews संबन्ध. Thus it means 'your honour would shew his power in connection with Indra, *i. e.* would withstand even Indra.'

**प्रातरुद्यन्.** Vâli is as irresistible as the Sun rising in the morning. Even the rising Sun is very powerful, much more is the Sun after he has risen and gone high. 'सर्वं वाक्यं सावधारणं भवतीति प्रातरप्युद्यन्नवार्यप्रसर एवेति तेन सर्वकाले अस्यावार्यप्रसरत्वं सिद्धं न तु प्रातरेवोद्यन्नवार्यप्रसर इति' जय०.

### Stanza 111—

**वरेण तु मुनेः.** Vâli's strength is described in the Râmâyaṇa Kishkindhâ Kâṇḍa 11th Canto in verses beginning with 'समुद्रात्पश्चिमात्पूर्वं दक्षिणादपि चोत्तरम्। क्रामत्यनुदिते सूर्ये वाली व्यपगतक्लमः॥'. He is described to have a garland given him by his father Indra, which, being put on brought him success on the battle-field 'तमेवमुक्त्वा संक्रुद्धो मालामुत्क्षिप्य काञ्चनीम्। पित्रा दत्तां महेन्द्रेण युद्धाय व्यवतिष्ठत॥'. The commentator says 'एषा हि माला संग्रामजयदा'.

## Stanza 113—

पतिघ्नलक्षणोपेताम्. Malli.'s reading means 'endowed with ill-ominous signs on the hand, that go to shew the death of her husband.' N. reads पतिघ्नीलक्षणोपेताम्. This is the reading of Jaya. who explains it as 'पतिं हन्ति यल्लक्षणं तेनोपेतामित्येतीवार्योऽत्र द्रष्टव्यः ।'.

## Stanza 115—

आढ्यङ्करण and प्रियङ्करण have both the affix ख्युन् (अन) which has the sense of च्वि, that is, it shews अभूततद्भाव, the state which did not exist before. आढ्यङ्करणविक्रान्तः=One whose prowess makes even one who is not famous to be famous.

## Stanza 116—

प्रियम्भावुकताम् and प्रियम्भविष्णु are formed like आढ्यङ्करण and प्रियङ्करण with this difference that in the former the affixes खुकञ् (उक) and इष्णुच् (इष्णु) have an active sense, while in the latter ख्युन् (अन) is affixed in the sense of करण or instrument. In both, the affixes have the sense of च्वि.

## Stanza 118—

रामर्त्विक्. Jaya. gives the same derivation of ऋत्विज् as Malli.; but he rightly says 'इदमृत्विक्शब्दनिर्वचनम् । रूढितस्तु याजयितृषु ब्राह्मणेषु ।'.

The figure of speech in this verse is सावयवरूपक (*vide* Notes on St. 104), but it is not समस्तवस्तुविषय; because the आरोप्यमाण, यजमान, is not शाब्द (expressed). If it were सुग्रीवयजमानः instead of सुग्रीवः, it would have been an instance of समस्तवस्तुविषय; but as it is, it is एकदेशविवर्त्तिसावयवरूपक. 'यत्रावयवनिरूपणादवयविनो निरूपणं गम्यते तदेकदेशविवर्त्तिरूपकम्'.

## Stanza 119—

युद्भियः=The inspirer of terror, one who inspired terror.

## Stanza 126—

बान्धवक्रोशिनः. बन्धुः एव बान्धवः प्रज्ञादित्वात्स्वार्थेऽण्. बन्धु comes under the प्रज्ञादि group, to which अण् is affixed as a स्वार्थवाचक affix by the Sûtra "प्रज्ञादिभ्यश्च" ५।४।३८॥. In the same way we have रक्ष एव राक्षसः । देवता एव दैवतम् । प्रज्ञ एव प्राज्ञः । पिशाच एव पैशाचः । मरुदेव मारुतः । चोर एव चौरः ।.

## Stanza 127—

**वनवर्त्तिनः.** The word is formed by the Sûtra "व्रते" ३।२।८०॥. णिनि (इन्) is affixed to a root with an *upapada* when the word so formed shews observance of practice prescribed by the S'âstras. 'व्रत इति शास्त्रतो नियम उच्यते । व्रते गम्यमाने सुबन्त उपपदे धातोर्णिनिः प्रत्ययो भवति । समुदायोपाधिश्चायम् । धातूपपदप्रत्ययसमुदायेन व्रतं गम्यते । स्थण्डिलशायी । अश्राद्धभोजी । कामचारप्राप्तौ नियमः । सति शयने स्थण्डिल एव शेते नान्यत्र । सति भोजनेऽश्राद्धमेव भुङ्क्ते न श्राद्धमिति ।' काशि०. So वनवर्त्तिनः means 'येषां सत्यन्यस्थाने वृत्तौ च वन एव वर्त्तितुं शास्त्रतो नियमस्ते वनवर्त्तिनः ।' Jaya.

## Stanza 128—

**शूरमानी.** मन् has खश् and णिनि affixed to it in the sense of 'considering oneself to be what is denoted by the *upapada* of the root.' 'खश प्रत्ययार्थः कर्त्ताऽऽत्मानमेव दर्शनीयत्वादिना धर्मेण युक्तं मन्यते तदायं विधिः । दर्शनीयमात्मानं मन्यते दर्शनीयंमन्यः । दर्शनीयमानी । पण्डितंमन्यः । पण्डितमानी ।' काशि०. Thus we have शूरमानी or शूरंमन्यः । साधुमानी or साधुंमन्यः.

## Stanza 129—

**अन्यव्यासक्तघातित्वात्.** हन् takes णिनि, with an *upapada* which is its object, when the action of killing is done in the past time and when the word so formed shews censure. 'पितृव्यघाती । मातुलघाती । कुत्सितग्रहणं कर्त्तव्यम् । इह मा भूत् । चोरं हतवान् ।' काशि०. Jaya. says:—'तत्र कुत्सितग्रहणं कर्त्तव्यमित्युक्तम् । यदि सुग्रीवेण मम विरोधः किं तवायातमिति कुत्सितहननम् ।'.

**ब्रह्मघ्नाम्.** ब्रह्महन् is formed by the affix क्विप्. This affix is added to any root. The Sûtra "ब्रह्मभ्रूणवृत्रेषु क्विप्" ३।२।८७॥ must therefore be taken in a limited sense. The Kâśikâ on this runs as follows :—

'कर्मणीति वर्त्तते । ब्रह्मादिषु कर्मसूपपदेषु हन्तेर्धातोः क्विप्प्रत्ययो भवति भूते । ब्रह्महा । भ्रूणहा । वृत्रहा । किमर्थमिदमुच्यते । यावता सर्वधातुभ्यः क्विब्विहित एव । ब्रह्मादिषु हन्तेः क्विब्वचनं नियमार्थम् । चतुर्विधश्चात्र नियम इष्यते । ब्रह्मादिष्वेव हन्तेर्नान्यस्मिन्नुपपदे पुरुषं हतवानिति । ब्रह्मादिषु हन्तेरेव नान्यस्मात्स्यात् ब्रह्माधीतवानिति । ब्रह्मादिषु हन्तेर्भूतकाले क्विबेव नान्यः प्रत्ययः । तथा भूतकाल एव नान्यस्मिन् ब्रह्माणं हन्ति हनिष्यति वेति । तदेतद्वक्ष्यमाणबहुलग्रहणस्य पुरस्तादपकर्षणाल्लभ्यते ।'. बहुलम् occurs in the next Sûtra "बहुलं छन्दसि" ३।२।८८॥. But the Bhâshya does not accept these four limitations. 'ब्रह्मादिष्वेव क्विबेवेति द्विविधो नियम इति भाष्यम्' सिद्धा० कौ०. The Bhâshya proceeds as under :—

'किमर्थं ब्रह्मादिषु हन्तेः क्विब्विधीयते न क्विप्चान्येभ्यो दृश्यत इत्येव सिद्धम् । ब्रह्मादिषु हन्तेः क्विब्वचनं नियमार्थम् । नियमार्थोऽयमारम्भः । ब्रह्मादिष्वेव हन्तेर्भूते क्विब्यथा

स्यादिति । किमविशेषेण । नेत्याह । उपपदविशेषे एतस्मिंश्च विशेषे । अथ ब्रह्मादिषु हन्तेर्णिनिना भवितव्यम् । न भवितव्यम् । किं कारणम् । उभयतो नियमात् । उभयतो नियमोऽयम् । ब्रह्मादिष्वेव हन्तेर्भूते क्विब्भवति । क्विबेव हन्तेर्भूते ब्रह्मादिष्विति । तथा चोत्तरस्य वचनार्थः । एवं च कृत्वोत्तरस्य योगस्य वचनार्थ उपपन्नो भवति ।'.

On this Kaiyaṭa remarks :—

'**किमविशेषेणेति** । किं धातूपपदकालप्रत्ययाश्चत्वारोपि नियम्यन्ते अथ किंचिदेव नियम्यत इति प्रश्नः । **उपपदविशेष इति** । अनेन धातुनियमं दर्शयति । ब्रह्मादिष्वेव हन्तेर्भूते क्विब्भवति नोपपदान्तरे । तेन पुरुषं हतवानित्यत्र क्विन्न भवति । **अथेति** । "कर्मणि हनः" इत्यनेनेति भावः । **क्विबेवेति** । ब्रह्मादिषु हन्तेर्भूते क्विबेव भवति न प्रत्ययान्तरमिति क्विब्भूतकाले नियम्यत इति कालनियमोऽयं भवति । एतदेव नियमद्वयं भाष्यकारेणाश्रितम् । ब्रह्मादिषु हन्तेरेव भूते क्विब्भवति । ब्रह्मादिषु हन्तेः क्विब्भूत एवेत्येतत्तु नियमद्वयं नाभ्युपगतम् । अन्यैस्त्वाहोपुरुषिकया चतुर्विधो नियमो व्याख्यातः । स भाष्यविरोधान्नादरणीयः । **तथा चेति** । यस्माद्ब्रह्मादिष्वेवेति नियमोऽनेन क्रियते तस्मादुत्तरस्य योगस्य वचने प्रयोजनमस्ति । उपपदान्तरे हन्तेश्छन्दसि क्विब्यथा स्यादिति ।'.

## Stanza 130—

**पापकृत्.** कृ takes the affix क्विप् ( The whole of क्विप् is dropped, but as it is पित्, कृ takes the augment त् by "ह्रस्वस्य पिति कृति तुक्" ६।१।७१॥ ) after सु, and after कर्मन्, पाप, मन्त्र, and पुण्य as its objects. Here there is a three-fold नियम; namely क्विबेव, कृञ एव, भूत एव. 'क्विबेवेति नियमात्कर्म कृतवानित्यत्राण् न । कृञ एवेति नियमान्मन्त्रमधीतवान् मन्त्राध्यायः । अत्र न क्विप् । भूत एवेति नियमात् मन्त्रं करोति करिष्यति वेति विवक्षायां न क्विप् । स्वादिष्वेवेति नियमाभावादन्यस्मिन्नप्युपपदे क्विप् । शास्त्रकृत् । भाष्यकृत् ।' सिद्धा॰ कौ॰.

## Stanza 131—

**अग्निचित्.** In अग्निचित् and सोमसुत् the Kâśikâ mentions four kinds of नियम as in ब्रह्महा. 'चतुर्विधश्चात्र नियम इष्यते । धातुकालोपपदप्रत्ययविषयः'।. The word means 'one who keeps sacred fire,' आहिताग्नि.

**रथचक्रचिदादिषु.** रथचक्रचित्=An arrangement of bricks for fire in the form of a chariot-wheel. Malli. takes अनलेषु in the लक्ष्य sense of 'altars on which fires are kindled'. Jaya. takes रथचक्रचित् in the sense of 'fire for which bricks are arranged in the form of a chariot-wheel.' 'अग्न्यर्थो हि तदाकार इष्टकाचय इत्युच्यते तद्द्वारेणाग्निरपि ।' जय॰. Malli.'s interpretation is preferable. अग्न्याख्यायाम् in the Sûtra "कर्मण्यग्न्याख्यायाम्" ३।२।९२॥ is explained in a way which supports Malli.'s explanation. 'अग्न्याख्यायां धातूपपदप्रत्ययसमुदायेन चेदग्न्याख्या गम्यते । . . . . । आख्याग्रहणं

रूढिसंप्रत्ययार्थम् । अध्यर्थो हीष्टकाचय उच्यते श्येनचिदिति ।' काशि०. अध्याख्यायाम्=' अध्याधारस्थलविशेषस्याख्यायाम्.' सिद्धा० कौ०.

Stanza 133—

बुद्धिपूर्वं ध्रुवन्न त्वा°. ध्रुवन्न may be separated into ध्रुवन् न or ध्रुवम् न. ध्रुवन् and द्रुवन्, Malli.'s reading, have both the same sense, *viz.* जानन्. Taking either, the construction is पिता त्वा खलं द्रु ( ध्रु ) वन् बुद्धिपूर्वमेव न राजकृत्वा. But with ध्रुवम्, the अन्वय must be खलं त्वा पिता न राजकृत्वा तत् बुद्धिपूर्वं ध्रुवम्. In this case the Acc. त्वा is not strictly correct. By the Sûtra "कर्तृकर्मणोः कृति" २।३।६५॥ the object of the कृदन्त, राजकृत्वन्, must be used in the genitive. Malli. therefore says 'त्वामिति द्वितीया न स्यात्.' In 'धार्यैरामोदमुत्तमम्' (St. 80), however, Malli. says "कर्तृकर्मणोः कृति" इत्यत्र शेषत्वविवक्षायामेव षष्ठीविधानादिह तदविवक्षायामामोदमिति कर्मणि द्वितीया।'. This view, however, is not quite free from objection. The Kâśikâ says 'शेष इति निवृत्तम् । पुनः कर्मग्रहणात् ।' ( *Vide* Note on St. 80 ). Some commentators divide त्वा into तु and आ, and understand पिता अखलम्. 'अन्ये तु इति निषेधे आशब्दः स्मरणे पीडायां वा राजकृत्वेत्यत्र तवेत्यर्थो—गम्यते नञः प्रश्लेषात् अखलमिति मामित्यस्य वक्ष्यमाणस्य विशेषणमित्याहुः ।' भर०. This is complicated and awkward.

Stanza 135—

दुष्टुः. It has the same sense as दुःस्थः=badly settled, not settled. 'दुष्टुः दुःस्थः सन् । अपदुःसुषुस्थ इत्यौणादिकः कुप्रत्ययः ।.'

Stanza 139—

अनूचानैः. अनूचान is one who has studied all the Vedás with their six parts. 'साङ्गे प्रवचने ( वेदे ) अधीती.'

Stanza 141—

संभविष्यावः. The second Future is used in the sense of the Imperfect when the action denoted by the verb is dependant upon the principal verb, which must have the sense of 'to remember' *e. g.* 'अभिजानासि स्मरसि बुध्यसे चेतयसे वा देवदत्त कश्मीरेषु वत्स्यामः'. Here वत्स्यामः means अवसाम. If however the subordinate sentence is introduced by यद्, the second Future can not be used in the sense of the Imperfect. 'अभिजानासि देवदत्त यत्कश्मीरेष्ववसाम.'

Stanza 142—

When अभिज्ञा or its synonym is the principal verb, and two verbs depend upon it, the action of one of which indicates that of the other,

these two verbs may be used either in the 2nd Future or in the Imperfect in the sense of the Imperfect. The two sentences may or may not have been connected by यत्. *e. g.* 'अभिजानासि देवदत्त कश्मीरेषु वत्स्यामस्तत्रौदनं भोक्ष्यामहे' or 'अभिजानासि देवदत्त कश्मीरेष्ववसाम तत्रौदनमभुञ्ज्महि'; or 'अभिजानासि देवदत्त यत्कश्मीरेषु वत्स्यामस्तत्रौदनं भोक्ष्यामहे' or 'अभिजानासि देवदत्त यत्कश्मीरेष्ववसाम तत्रौदनमभुञ्ज्महि'. In the present stanza वास is the indicator of पान.

---

## CANTO VII.

**Stanza 9—**

**अनपचारिणम्.** This seems to be the true reading and not **अनपकारिणम्** adopted by C. and N. It is found in almost all the Mss. Moreover the Sûtra "संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च ॥" ३।२।१४२॥ which, the five verses beginning with संज्वारिणेव illustrate, contains the root अपचर् and not अपकृ. In these verses all the roots mentioned in the Sûtra are illustrated with the exception of आयम्, दुष्, दुह्, विविच्, भज्, and अतिचर्. The forms of these ending in घिनुण् ( इन् ) are आयामिन्, दोषिन्, दोहिन्, विवेकिन्, भागिन्, and अतिचारिन्.

**Stanza 10—**

**परिमोहिणम्.** This seems to be the correct reading and not परिमोहिनम् found in C. and N. "कृत्यचः" ८।४।२९॥ teaches that न् of a कृत् affix coming after a vowel is changed to ण् when preceded by र् in a preposition. The कृत् affixes that have न् in them are अन, मान, अनीय, अनि, इनि, and न ( substitute of the Past Part. affix त ). This change is necessary and not optional. 'कृत्स्थो यो नकारोऽच उत्तरस्तस्योपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशो भवति । अन मान अनीय अनि इनि निष्ठादेशा एते णत्वं प्रयोजयन्ति । अन । प्रयाणम् । परियाणम् । प्रमाणम् । परिमाणम् । मान । प्रयायमाणम् । परियायमाणम् । अनीय । प्रयाणीयम् । परियाणीयम् । अनिः । अप्रयाणिः । अपरियाणिः । इनि । प्रयायिणौ । परियायिणौ । निष्ठादेशः । प्रहीणः । परिहीणः । प्रहीणवान् । परिहीणवान् । अच इति किम् । प्रभुग्नः । परिभुग्नः ।' काशि॰. To this there is one Vârtika, which sanctions णत्व in निर्विण्ण. 'कृत्स्थस्य णत्वे निर्विण्णस्योपसङ्ख्यानं कर्तव्यम् ।' निर्विण्णोऽस्मि खलसङ्गेन । निर्विण्णोऽहमत्र वासेन । ' काशि॰.

**Stanza 11—**

**पर्णे** is of course a better reading than **पक्षी.** पक्षी gives no additional sense. It is superfluous. पर्णे पत्त्रम्. Châtaka wishes for water on a leaf and not on the ground. 'धरणीपतितं तोयं चातकानां रुजाकरम्.'

**Stanza 14—**

**उपशारदे.** When the Loc. is not used, the form will be उपशारदम्.

## Stanza 22—

**अभङ्गुरप्रज्ञः**=One whose intellect is firm. घुरच् (उर्) is added to भञ्ज् in the कर्मकर्त्तरि sense. As घुरच् is घित्, ज् is changed to ग् by "चजोः कु घिण्यतोः" ७।३।५२।। (that is, च् and ज् are changd to क्, and ग् when followed by an affix which is घित् and the affix ण्यत्). 'भञ्जेः कर्मकर्त्तरि प्रत्ययः स्वभावात् । भङ्गुरं काष्ठम् । घित्वात्कुत्वम् ।' काशि०. 'अभिधानस्वाभाव्यात् भञ्जेः कर्मकर्त्तर्य्येवायं घुरच्प्रत्ययः' तत्त्व०. 'भञ्जेः कर्मकर्त्तर्येव अभिधानस्वभावादित्याहुः' मनो०. Thus भङ्गुरम् means स्वयमेव भज्यते. Jaya.'s reading is भङ्गुरप्रज्ञः. 'भङ्गुरा ये स्वयमेव भज्यन्ते । . . . । तान् प्रजानातीति भङ्गुरप्रज्ञः ।' (जय०). This does not convey a good sense. Jaya. takes गत्वरान् in the sense of 'गमनशीलान् अस्थिरप्रकृतीन्'.

**विदुरः**= One who knows well. It is formed by affixing कुरच् (उर) to विद् according to the Sûtra "विदिभिदिच्छिदेः कुरच्" ३।२।१६२।।. 'ज्ञानार्थस्य विदेर्ग्रहणं न लाभाद्यर्थस्य स्वभावात् । विदुरः पण्डितः । भिदुरं काष्ठम् । छिदुरा रज्जुः । भिदिच्छिदोः कर्मकर्त्तरि प्रयोगः' काशि०. On this the Manoramâ says :— 'छिदुरमिति । कर्मकर्त्तरीति वृत्तिः । नैतद् भाष्ये दृष्टम् । तथा च माघः मुख्ये कर्त्तरि प्रायुङ्क्त । 'प्रियतमाय वपुर्गुरुमत्सरच्छिदुरयादुरयाचितमङ्गना इति ।'. This is in Mâgha C. VI, St. 8, where 'गुरुमत्सरच्छिदुरया' qualifies परपुष्टया and is explained by Malli. as 'गुरोर्महतो द्वेषस्य छिदुरया छेत्र्या । "विदिभिदिच्छिदेः कुरच्" ।. Thus छिदुर means either 'that which cuts,' or 'that which is cut of itself.'

## Stanza 25—

**स्वप्नक्.** The word is formed by affixing नजिङ् (नज्) to स्वप् in the active sense. The same affix is added in the same sense to तृष् and धृष्. The words are स्वप्नज्, तृष्णज्, and धृष्णज्.

**ईश्वरः**='ईशनशीलः' Jaya., that is, 'lording it over my wives.' The word is formed by affixing वरच् (वर) to ईश् by the Sûtra "स्थेशभासपिसकसो वरच्" ३।२।१७५।।. We have thus स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । विकस्वरः ।.

## Stanza 27—

Jaya. notices the reading **धरासमुद्रशैलानाम्** which is adopted in the text. 'धरासमुद्रशैलानामिति पाठान्तरम् । अत्र 'बह्वल्पनियमः' इति पूर्वनिपातः । यथा वीणाशङ्खदुन्दुभयः ।' (जय०).

Stanza 28—

कारुः=doer. The word is formed according to the उणादि Sûtra 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्'। 'करोतीति कारुः शिल्पी कारकश्च। वातीति वायुः ("आतो युक्" ३।३।१२८॥) पायुर्गुदम्। जयत्यभिभवति रोगान् जायुरौषधम्। मिनोति प्रक्षिपति देहे उष्माणमिति मायुः पित्तम्। स्वादुः। साध्नोति परकार्यं साधुः। अश्नुते आशु शीघ्रम्।' (सिद्धा॰ कौ॰).

Stanza 29—

**कारका मित्रकार्याणि.** The genitive is not used with a word formed by the affix अक in the sense of the Future and one formed by इन in the Future sense, or in the sense of 'debtor'. In कारक अक has the Future sense, कारकाः being equal to करिष्यन्तः. 'कटं कारको व्रजति। ओदनं भोजको व्रजति। इनः खल्वपि। ग्रामं गमी। आधमर्ण्ये शतं दायी। सहस्रं दायी। भविष्यदाधमर्ण्ययोरिति किम्। यवानां लावकः। सक्तूनां पायकः। अवश्यं करी कटस्य। इह कस्मान्न भवति। वर्षशतस्य पूरकः। पुत्रपौत्राणां दर्शक इति। भविष्यदधिकारे विहितस्याकस्येदं ग्रहणम्।' काशि॰. ण्वुल् (अक) has two senses. It is added in the active sense without reference to any particular time (कालसामान्ये), by the Sûtra "ण्वुल्तृचौ" ३।१।१३३॥. It has also the sense of the Future and is affixed to a verb which depends upon the principal verb in the sentence. This is according to the Sûtra "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" ३।३।१०॥ (*e.g.* कृष्णं द्रष्टुं याति, कृष्णं दर्शको याति). The genitive is prohibited with ण्वुल् which has the Future sense. 'यस्तु कालसामान्ये ण्वुलभिहितस्तस्य नायं निषेधकस्तेन ओदनस्य पाचकः, पुत्रस्य दर्शक इत्यादौ स्यादेवेति भावः'।.

Stanza 31—

**साधयिष्यामः.** Jaya.'s reading is **सादयिष्यामः** which means 'व्यापादयिष्यामः'=we shall kill.

**करिष्यन्तः** स्यत्, the termination of the second Future, is used in two ways. It is added to a root which may or may not be connected with another verb as depending upon it. "लृट् शेषे च" ३।३।१३॥ 'शेषः क्रियार्थोपपदादन्यः। शेषे शुद्धे भविष्यति काले चकारात् क्रियायां चोपपदे क्रियार्थायां धातोर्लृट् प्रत्ययो भवति। करिष्यामीति व्रजति। हरिष्यामीति व्रजति। शेषे खल्वपि। करिष्यति। हरिष्यति।' काशि॰. In this verse करिष्यन्तः is not connected with any verb, while साधयिष्यामः depends upon आसेदुः. करिष्यन्त इत्यत्र शुद्धे भविष्यदर्थे लृट्। साधयिष्याम इत्यत्र क्रियार्थक्रियोपपदे भविष्यदर्थे लृट्।.

**Stanza 34—**

**एकनिश्रायम्.** Mark the difference between निश्चय and निश्राय. निश्चय is 'determination,' while निश्राय is 'heap'. निश्राय is परिमाणवाचक. Malli. takes एकनिश्रायमागतम् as qualifying कपिसमाहारम्. It means 'A large number of monkeys that had come in one lot.' Jaya. takes एकनिश्रायमागतम् with आयामम्. 'एकनिश्रायमागतमेकराशितां प्राप्तमायाममित्यर्थः ।' (जय॰). Bharatamallika also takes it similarly. 'कीदृशमायामम् । एकं निश्रायं ज्ञानमागतं प्राप्तमत्यभ्यासात् सर्वासां दिशां दैर्घ्यं सुग्रीवस्य ज्ञानारूढमित्यर्थः' (भर॰). He also says:—'एको निश्रायो निश्चयो यस्येति कपिसमाहारस्य विशेषणं वा। एतेन एकवाक्यता दर्शिता।.' Bharatamallika takes निश्राय in the same sense as निश्चय. Malli.'s interpretation seems to be the best.

**Stanza 35—**

**जाम्बवन्नीलसहितम्.** Malli. takes the whole as a compound, taking the first word as जाम्बवत्. He criticizes those who take the word as अकारान्त, i. e. जाम्बव. By 'केचित्' he means Jaya. and others. Jaya. says:—'जाम्बवं ऋक्षाधिपतिम् । . . . । जाम्बवशब्दोऽकारान्तो द्रष्टव्यः ।'. It is not quite clear why Malli. says 'चिन्त्यम्'. Bharatamallika quotes Vishvakosha to shew that the word is अकारान्त also. 'जाम्बवान् जाम्बवोऽपि च' इति विश्वः ।. However जाम्बवत् is the form of the word generally found, in the Râmâyaṇa and other Purâṇas.

**Stanza 37—**

**वनाभिलावान्**=The cutting or destruction of forests. 'वनविध्वंसान्' Jaya. Malli. explains अभिलाव by उत्सेध, which is to be taken in the sense of 'destruction'. 'उत्सेधस्तूच्छ्रये न स्त्री क्लीबं संहननेऽपि च' इति मेदिनी.

**Stanza 38—**

**सदोद्गारसुगन्धीनाम्**=Which are fragrant by their constant exudations. Jaya. takes it to mean 'which always give out good smell in belching after they have been eaten.' 'सदा सर्वदा उद्गारे भक्षणानन्तरं श्वसनपूर्वके शब्दोच्चारणे यानि सुगन्धीनि तेषाम्'. 'यदुक्तं सदुद्गारेऽपि सुगन्धि प्रकाशयति तदुद्गारसुगन्धि ।' भर॰. For the change of गन्ध to गन्धि (*vide* notes on C. II. St. 10 ).

**आशिताः**=Satisfied ( those that have eaten their fill ). It is active in sense. (*vide* notes on C.IV. St.11). The use of the genitive with the word is to be understood by the fact that षष्ठीसमास is prohibited with it by the Sûtra "पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन" २।२।११. 'सुहिता-

र्थास्तृप्त्यर्थाः। फलानां सुहितः।'. If the genitive case were not used with the word, there would be no meaning in prohibiting षष्ठीसमास with it.

Mark the difference between उत्कार, which means धान्यराशि, 'heap of corn' and उत्कर which means 'any collection' as भिक्षोत्कर. So निकार is धान्यराशि, and निकर is any समूह as पुष्पनिकर. It is only in the sense of 'the throwing up of corn' that कॄ takes घञ्.

## Stanza 39—

**संस्ताव**=Singing together, hymning in chorus. It is explained in the Kâśikâ and Kaumudî as meaning 'a place where Brâhmaṇas meet to sing the Sâma-Veda. 'समेत्य स्तुवन्ति यस्मिन्देशे छन्दोगाः स देशः संस्तावः।' सिद्धा० कौ०. 'संस्तावश्छन्दोगानाम्। समेत्य स्तुवन्ति यस्मिन्देशे छन्दोगाः स देशः संस्ताव इत्युच्यते। संस्तवश्छात्रयोः।' काशि०. संस्तव generally means परिचय.

**प्रस्तार.** Note the difference between प्रस्तार and प्रस्तर. Both mean 'spreading out, collection'; but the former is used when the description is not connected with a sacrifice. 'स्तृञ् आच्छादने। अस्माद्धातोः प्रशब्दे उपपदे घञ्प्रत्ययो भवति न चेद्यज्ञविषयः प्रयोगो भवति। शङ्खप्रस्तारः। मणिप्रस्तारः।' काशि०.

## Stanza 40—

**विस्तार**=Extent of anything except of words. The extent of words is विस्तर.

**संग्राह**=Catching by the fist. 'अहो मल्लस्य संग्राहः। अहो मुष्टिकस्य संग्राहः। संग्रहो धान्यस्य।' काशि०.

## Stanza 41—

**न्याय्यम्.** न्याय and परिणाय are formed by affixing घञ् (अ and changing the vowel to its Vṛiddhi) to इ with नि and नी with परि respectively in the sense of 'non-deviation' and 'moving pieces in chess' respectively, *e. g.* परिणायेन शारान् घ्नन्ति। समन्तान्नयनेनेत्यर्थः। एषोऽत्र न्यायः यथाप्राप्तकरणमित्यर्थः। परिणय=marriage and न्यय=destruction. न्ययं गतः पापः। नाशं गत इत्यर्थः।.

**पर्याय** means क्रमप्राप्तस्यानतिपातः, *i. e.* 'regular order,' while पर्यय means 'lapse'; *e. g.* कालस्य पर्ययः। अतिपात इत्यर्थः।.

**निशोपशायः.** उपशाय is used in the sense of 'sleeping by turns,' while उपशय simply means 'sleeping near.' It does not convey the

idea of पर्याय. Similarly विशाय=sleeping by turns, while विशय=संशय (doubt).

फलोच्चाय:. चि takes the affix घञ् when the idea of taking by hand or proximity and not steeling is conveyed.

'हस्तादानग्रहणेन प्रत्यासत्तिरादेयस्य लक्ष्यते । पुष्पप्रचाय: । फलप्रचाय: । हस्तादान इति किम् । वृक्षशिखरे फलप्रचयं करोति ('वृक्षाग्रस्थानां फलानां यष्ट्या प्रचयं करोति' सिद्धा० कौ०) । अस्तेय इति किम् । पुष्पप्रचयश्चौर्येण ।' काशि०. The word उच्चय does not convey any such idea. 'उच्चयस्य प्रतिषेधो वक्तव्य:'. This Vârtika seems to have escaped Malli.'s notice when he quotes Vallabha on पुष्पोच्चय in his Com. on Kumârasambhava C. 3, St. 61. 'पुष्पोच्चय: पुष्पप्रकर: । "हस्तादाने चेरस्तेये" इति घञ्विधयत्वात्कवीनामयं प्रामादिक: प्रयोग इति वल्लभ: ।'. Malli. does not refer to the 'उच्चयस्य प्रतिषेधो वक्तव्य:' which is an exception to the Sûtra "हस्तादाने चेरस्तेये" ३।३।४०।. It must be stated, however, that this difference between प्रचाय and प्रचय is not strictly observed in usage.

**Stanza 43—**

**निग्राह:**=Curse, imprecation. अवग्राह also means the same. 'अवग्राहो हन्त ते वृषल भूयात् । निग्राहो हन्त ते वृषल भूयात् । आक्रोशे इति किम् । अवग्रह: पदस्य । निग्रहश्चोरस्य ।' काशि०.

**Stanza 45—**

**मासतमादह्न: प्राक्**=Before the last day of one full month from this day. मासतम: दिवस: the day on which one month is completed.

**Stanza 49—**

**प्रग्राहवान्**=Having the string of a balance in his hand.

**Stanza 52—**

**विनत:**= Name of a monkey. Jaya. takes it to mean 'one who had bowed.' 'विनत: प्रणत: सुग्रीव इत्यर्थात्' (जय०). This is not good विनत must be here taken as a proper noun. The Râmâyaṇa describes what monkeys were sent to what directions :—

'उत्तरां तु दिशं रम्यां गिरिराजसमावृताम् ॥
प्रतस्थे सहसा वीरो हरि: शतबलिस्तदा ।
पूर्वां दिशं प्रतिययौ विनतो हरियूथप: ॥
ताराङ्गदादिसहित: प्लवग: पवनात्मज: ।
अगस्त्याचरितामाशां दक्षिणां हरियूथप: ॥

पश्चिमां च दिशं घोरां सुषेणः प्लवगेश्वरः ।
प्रतस्थे हरिशार्दूलो दिशं वरुणपालिताम् ॥' किष्कि० स० ४५.

Thus we see that शतबलि, विनत, हनुमत्, and सुषेण were sent respectively to the northern, eastern, southern, and western directions.

## Stanza 57—

**निगदान्** and **निनादान्** both mean 'sounds', 'words'. गद्, नद्, पठ्, and स्वन् take घञ् (अ) or अप् (अ) when preceded by नि. घञ् being ञित्, the penultimate अ of roots to which it is affixed, takes Vṛiddhi by "अत उपधायाः" ७।२।११६॥. "नौ गदनदपठस्वनः" ३।३।६४॥ निगदः । निगादः । निनदः । निनादः । निपठः । निपाठः । निस्वनः । निस्वानः ।.

## Stanza 58—

**पणं**= Wealth. 'पणो माने वराटानां मूल्ये कार्षापणे धने । द्यूते विक्रव्यवहारकारौ बद्धमुष्टौ ग्लहे भृतौ' धरणी.

**क्रामेन,** the reading of $E_3$, does not seem to be correct. क्रम् can not take Vṛiddhi as shewn in the Com.

## Stanza 59—

**समजेन.** अज् takes the affix अप् when preceded by सम् and उद् in the sense of 'a collection (of beasts)' and 'the driving (of beasts).' 'समजः पशूनां सङ्घः । उदजः पशूनां प्रेरणम् । समाजो ब्राह्मणानाम् । उदाजो क्षत्रियाणाम्' (सिद्धा० कौ०).

## Stanza 60—

**ग्लहम्.** ग्लह=stake. The word occurs in Mâgha 'व्यात्युक्षीमभिसरणग्लहामदीव्यन्' ८-३२. There Malli.'s remarks on ग्लह are :—"अक्षेषु ग्लहः" इति ग्रहेरेवाक्षपणे लत्वनिपातः । अप्प्रत्ययस्तु "ग्रहवृदृनिश्चिगमश्च" इत्येव सिद्ध इति केचित् । अन्ये तु ग्लहिं प्रकृत्यन्तरमङ्गीकृत्याप्प्रत्ययस्यैव निपातो घञपवादीत्याहुः ।'

## Stanza 63—

**अन्तर्घने.** अन्तर्घन or अन्तर्घण is formed according to Pâṇini by adding अप् to हन् and changing it to घन्. It conveys the sense of 'a region in वाहीक (the Punjaub) country'. Here, however, it means the space between the outward entrance and the door. 'द्वारमतिक्रम्य यः सावकाशप्रदेशः सोऽन्तर्घण इत्युच्यते ।' जय०.

**लौहोद्घनघनस्कन्धाः** उद्घन is generally a large wooden block on which carpenters place their wood while fashioning it. 'यस्मिन् काष्ठे

अन्यानि काष्ठानि स्थापयित्वा तक्षन्ते तदुद्घनः' सिद्धा० कौ०. Amara also explains the word similarly 'निधाय तक्ष्यते यत्र काष्ठे काष्ठं स उद्घनः' (अम०). But our commentator explains it to mean 'an iron block for blacksmiths to fashion their iron upon'. We have लो (or लौ) होद्घन and not काष्ठोद्घन in the text. It is this that has led Malli. to explain it thus.

अपघन is formed by affixing अप् to अपहन् and changing it to घन्. It has the sense of अङ्ग. अङ्ग is not the whole body but hands and feet. 'अङ्गं शरीरावयवः। स चेह न सर्वः किन्तु पाणिः पादश्चेत्याहुः।'. In अपघन, the affix अप् has the sense of करण. 'अपहन्यते अनेन इति अपघनम्।'. Here, however, it seems to mean any limb, all limbs, or the whole body. Amara gives it as a synonym of अङ्ग 'अङ्गं प्रतीकोऽवयवोऽपघनः'.

## Stanza 64—

अयोघनमुष्टयः अयोघन (अयो हन्यतेऽनेन) means 'a hammer'. The word is so used in the Raghu. 'अयोघनेनाय इवाभितप्तं वैदेहिबन्धोर्हृदयं विदद्रे। १४, ३३. Here, however, Malli. explains it as 'लोहघण्टा'.

## Stanza 64—

अव्याधि is an अव्ययीभाव compound like निर्मक्षिकम्. It means अनामयम्, i. e. health.

उद्घान्=Excellent. 'उद्धन्यते उत्कृष्टो ज्ञायते इत्युद्घनः। गत्यर्थानां बुद्ध्यर्थत्वात् हन्तिर्ज्ञाने.'

## Stanza 68—

रक्ष्णम्. नङ् (न, the affix being ङित् is weak) is affixed to यज्, याच्, यत्, विच्छ्, प्रच्छ्, and रक्ष्. "यजयाचयतविच्छप्रच्छरक्षो नङ्।" ३।३।९०॥ e. g. यज्ञः। याच्ञा। यत्नः। विश्नः। प्रश्नः। रक्ष्णः।.

## Stanza 70—

दानवोऽसौ. This was Maya who was slain by Indra, when he was attached to the damsel Hemâ. The story is thus described by Svayamprabhâ in the Râmâyaṇa:—

'मयो नाम महातेजा मायावी वानरर्षभ ॥
तेनेदं निर्मितं सर्वं मायया काञ्चनं वनम्।
पुरा दानवमुख्यानां विश्वकर्मा बभूव ह ॥
येनेदं काञ्चनं दिव्यं निर्मितं भवनोत्तमम्।
स तु वर्षसहस्राणि तपस्तप्त्वा महद्वने ॥

पितामहाद्वरं लेभे सर्वमौशनसं धनम् ।
विधाय सर्वं बलवान् सर्वकामेश्वरस्तदा ॥
उवास सुखितः कालं कंचिदस्मिन्महावने ।
तमप्सरसि हेमायां सक्तं दानवपुङ्गवम् ॥
विक्रम्यैवाशनिं गृह्य जघानेशः पुरन्दरः ।
इदं च ब्रह्मणा दत्तं हेमायै वनमुत्तमम् ॥
शाश्वतः कामभोगश्च गृहं चेदं हिरण्मयम् ।
दुहिता मेरुसावर्णेरहं तस्याः स्वयंप्रभा ॥
इदं रक्षामि भवनं हेमाया वानरोत्तम ।
मम प्रियसखी हेमा नृत्यगीतविशारदा ॥
तया दत्तवरा चास्मि रक्षामि भवनं महत् ।' किष्कि० स० ५१

As the demon was killed by Indra, the enemy of Bala, and not by Vishṇu, the enemy of Bali, बलद्विषा is a better reading than बलिद्रुहा adopted by Malli.

## Stanza 72—

**विद्येव.** It may be taken to mean तत्त्वज्ञान, as it is qualified by त्रय्या-वती. Excellent learning, that knowledge of reality leads out (*i. e.* out of संसार) according to their desire those who curb their senses (निरुद्धाक्षान्-अक्ष meaning इन्द्रिय) and who give themselves up to concentration (अनुष्ठितक्रियान्).

## Stanza 74—

**उपधाभेदभीरवः**=Afraid because they could not accomplish the work which was entrusted to them after they had been examined and found fit to do it. उपधा means 'examination'. Malli. here takes it in its लक्ष्य (secondary) sense of 'the accomplishment of work resulting from examination.' That is, when a work is entrusted to servants after their capacity for it has been examined, it is quite sure to be effected. Jaya.'s note is :—'उपधानमुपधा परीक्षा । तत्परिशुद्धो हि भृत्यः कार्येषु नियुज्यते । तदकरणादुपधाया भेदोऽभावस्तस्माद्भीरवः ।' जय०.

## Stanza 76—

**प्रस्कन्दिका**=Bha. Malli. explains it as क्षयरोग.

## Stanza 79—

**अजीवनि.** अनि is affixed to a root preceded by नञ् when imprecation is implied; *e. g.* 'अकरणिस्ते वृषल भूयात्' । 'अजीवनिस्ते शठ भूयात् ।'.

**Stanza 85—**

**उदङ्कः.** It is a leathern vessel for taking out oil, ghee &c. 'घृतमुद्च्यते उद्ध्रियतेऽस्मिन्निति घृतोदङ्कः चर्ममयं भाण्डम्।'. हृदयोदङ्कः=A sharp instrument for pulling out the heart.

**Stanza 86—**

Malli.'s taking **एषः** to mean वानरगणः and supplying एषः पक्षी as the subject of 'अभ्येति' is awkward. The verse may be thus construed:- 'बुभुक्षया परिग्लानः एषः ( पक्षी ) अस्मानत्तुमितः ( अस्मिन् प्रदेशे ) अभ्येति ( अत एव ) अशुभक्रियः परत्र ईषदाढ्यङ्करः न'. Jaya.'s explanation of the verse is as follows:—

'य एष अस्मानत्तुमितः प्रदेशादभ्येति आगच्छति स परत्र परलोके ईषदाढ्यङ्करोऽपि अनाढ्यैरीषदाढ्योऽपि न कृतः । अशुभेन कर्मणेत्यर्थात्। यतः परिग्लानो बुभुक्षया यो हि कर्मणा शुभेन ईषदाढ्यङ्करोऽपि न कृतः स कथं न बुभुक्षया पीड्यते।'.

**Stanza 90—**

**माहाकुलीनस्य.** अञ्, खञ्, and ख are affixed to महाकुल in the sense of अपत्य. We have thus three words, माहाकुल, माहाकुलीन, and महाकुलीन.

**Stanza 91—**

Malli.'s reading is **अहोऽतीतम्.** The Sandhi here is ungrammatical, the rule being that अहन् changes its न् to र् when followed by what is not a case-ending; *e. g.* अहर्ददाति। अहर्भुङ्क्ते।, but we have अहोभिः. The Sandhi of अहन्+अतीतम् should thus be अहर्+अतीतम्=अहरतीतम्. With अहर्यातम्, there is no difficulty.

**Stanza 92—**

**कौशल्यायनिवल्लभाम्.** कौशल्यायनि is formed by affixing फिञ् in the sense of अपत्य to कोसल. Before affixing the termination कोसल is changed to कौसल्य. Jaya.'s derivation 'कौशल्याया अपत्यं कौशल्यायनी रामः' is not supported by the Kâśikâ, Kaumudî, or Bhâshya. 'परमप्रकृतेरेवायं प्रत्यय इष्यते (*i. e.* though the Sûtra is "कौसल्यकार्माय्याभ्यां च" ४।१।१५५।।, the affix फिञ् is not added to कौसल्य and कार्मार्य but to their original basis कोसल and कर्मार)। कोसलस्यापत्यं कर्मारस्यापत्यमिति। प्रत्ययसंनियोगेन तु प्रकृतिरूपं निपात्यते। तथा च सूत्रयन्तरम्। दगुकोसलकर्मारछागवृषाणां युडादिष्टस्य। दागव्यायनिः। कौसल्यायनिः। कार्मार्यायणिः। छाग्यायनिः। वार्ष्यायणिः।' काशि०. 'परमप्रकृतेरेवायमिष्यते। प्रत्ययसंनियोगन प्रकृतिरूपं

निपात्यते । कुशलस्यापत्यं कौशल्यायनिः । कर्मारस्यापत्यं कार्मार्यायणिः । छागवृषयोरपि । छाग्यायनिः । वार्ष्यायणिः ।' सिद्धा॰ कौ॰. कोसल and कोशल are two forms of the same word. The Kâśikâ reads 'कौसल्य' in the Sûtra "कौसल्यकार्मार्याभ्यां च" while Bha. Dî. reads 'कौशल्य'.

**कौमारीम्**=The wife of one who has not married another wife. The husband of one who has not married another husband is called कौमार. 'अपूर्वपतिं कुमारीं पतिरुपपन्नः कौमारः पतिः । अपूर्वपतिः कुमारी पतिमुपपन्ना कौमारी भार्या ।' सिद्धा॰ कौ॰ and काशि॰. Bha. Malli. suggests other explanations also:—'कौमारीं जितकार्त्तिकेयभार्यामतिरूपवतीमित्यर्थः । कुमारस्य कार्त्तिकेयस्य पत्नी कुमारी । स्कन्दो मन्दमतिर्विवाहविमुखो धत्ते कुमारव्रतमिति काल्पनिकम् । न तु प्रकृतम् । देवसेना नामेन्द्रकन्या कार्त्तिकेयस्य पत्नी प्रसिद्धा तथा हि 'शतक्रतो रूपवती देवसेनेति वै सुता । सा महेन्द्रेण रत्यर्थं भार्यार्थेनोपपादिता ॥' इति स्कन्दपुराणीयं वचनममरकोषटीकायां मधुमाधवेन धृतम् । अथोपयन्त्रा सदृशेन युक्तां स्कन्देन साक्षादिव देवसेनामिति कालिदासः । कुमारीं जयतीति . . . । किं वा कौ पृथिव्यां मारी माया लक्ष्म्या रीर्गतिर्यस्यां लक्ष्मीरूपामित्यर्थः । . . किं वा कुमार एव कौमारः । कौमारस्य भार्यां रामस्य प्रथमपत्नीमित्यर्थः ।'.

## Stanza 99—

**यां गृहीत्वा.** Malli. takes this to mean यां धनदं (*i. e.* धनदात्) गृहीत्वा. ग्रह्, he says, is द्विकर्मक, and in support of his statement quotes 'जिदण्डि . . ' &c. This view is not sanctioned by Pâṇini, Kâtyâyana, or Patañjali. We find the following remarks in the Manoramâ on ग्रह्:—

'यत्तु प्राचोक्तं "दुह्याच्यर्थरुधिप्रच्छचिब्रूशासुजिकर्मयुक् । नीहृकृष्मन्थवहदण्ड्ग्रहमुष्पचकर्मभाक् ॥" इति । अत्रेदं वक्तव्यं ग्रहेः पाठो निर्मूलः जमाह शुतरं शाकमित्युदाहरणमप्ययुक्तम् ॥'.

## Stanza 101—

**नाविविदिषु॰** *cf.* 'A faint heart never won a fair lady'.

## Stanza 103—

**समगध्वम्**=We wish you may go. By the Sûtra "आशंसायां भूतवच्च" ३।३।१३२। the Aorist is optionally used in the sense of the Future when hope is implied. 'आशंसनमाशंसा । अप्राप्तस्य प्रियार्थस्य प्राप्तुमिच्छा । तस्याश्च भविष्यत्कालो विषयः । तत्र भविष्यति काले आशंसायां गम्यमानायां धातोर्वा भूतवत्प्रत्यया भवन्ति । चकाराद्वर्त्तमानवच्च । उपाध्यायश्चेदागमत् । आगतः । आगच्छति । आगमिष्यति । एते व्याकरणमध्यगीष्महि । एते व्याकरणमधीतवन्तः । अधीमहे । अध्येष्यामहे । सामान्यातिदेशे विशेषानतिदेशाल्लङ्लिटौ न भवतः । आशंसायामिति किम् । आगमिष्यति ।'

